'मास्टर' मणिमालायाः २४१ संख्यकोमणिः (सा० वि० ११)

श्रीमदानन्दवर्धनाचार्य्यप्रणीतो

# ध्वन्यालोकः

प्रथमद्वितीयोद्योतमात्रकलेवरः

श्रीमदलखदेवशर्म्मकृत
टीकाद्वयसंवलितः

प्रकाशकः—
मास्टर खेलाड़ीलाल ऐण्ड सन्स
कचौड़ीगली, बनारस-१    मूल्यम् २॥)

'मास्टर' मणिमालायाः २४१ संख्यको मणिः ( साहित्यविभागे ११ )

श्रीमदानन्दवर्धनाचार्य्यप्रणीतो

# ध्वन्यालोकः ।

विहारसंस्कृतसमितेः साहित्याचार्यपरीक्षाया द्वितीयखण्डे निर्धारितः ।

प्रथमद्वितीयोद्योतमात्रकलेवरः ।

वैदिककर्मानुष्ठाननिष्ठ–श्रोत्रियविप्रवंशावतंसस्वकर्मप्रसित–पाण्डेयोपाह्व–स्वर्गीय-
श्रीपोषणशर्म्मतनुजनुषा विहारसंस्कृतसमितिव्याकरणविषयक-
संशोधक ( बोर्ड ) समितिसदस्येन श्रीविहारसंस्कृत-
महाविद्यालयप्रधानाचार्य्येण श्रीमदलखदेव-
शर्म्मणा प्रणीतया प्रकाशिकाख्य-
व्याख्यया अर्थदीपिकया
हिन्दीभाषया च
विभूषितः ।

—०—

स च
'संस्कृत बुकडिपो' इत्यस्याऽध्यक्षवरेण्यैः
मास्टर खेलाड़ीलाल ऐण्ड सन्स महोदयैः
प्रकाशितः ।

प्रथमं संस्करणम् ] सन् १९५४ ई० [ मूल्यम् २॥)



नौमि कृपां हरिहरयो, र्गुर्व्वी ( यां ) प्राप्य तत्वाप्तिः ।
ग्रन्थेऽस्मिन्नभवन्मे, तत्कृपयैवास्य पूर्तिश्च ॥ १ ॥

ग्रन्थमिमं तत्पदयोः, साञ्जलि नूनं समर्प्यते ।
आत्मानञ्च कृतार्थं मनुतेऽलखदेवशर्म्माऽयम् ॥ २ ॥

# भूमिका

मातरमिष्टां बन्दे, प्रथमं भूयोऽधुना महाकालीम् ।
भूरि महालक्ष्मीं तां सूरीष्टां महासरस्वतीञ्चापि ॥ १ ॥
तदनु गुरुं प्रणमामो, पोषणशर्म्माभिधं तातम् ।
यत्कृपया हि भवाब्धेस्तरणं शरणं गुरोर्मिलति ॥ २ ॥
यस्य महिम्ना स्तौति, प्रस्तरलोष्टादितोऽप्यमृतविन्दुः ।
बन्दे तं गुरुवर्य्यं, यत्स्मृत्या सन्मनोरथावाप्तिः ॥ ३ ॥
नौमि गुरुप्रवरन्तं, हरनारायणत्रिपाठिनं भूरि ।
वैयाकरणप्रवरो यः काश्यां ख्यातिमान् सूरिः ॥ ४ ॥
यस्य च सविधे नित्यं, षड्विषयाचार्य्यविद्वांसः ।
गच्छन्ति स्म हि पाठं, श्रोतु द्वारे सरस्वत्याः ॥ ५ ॥
काव्यगुरुं बुधमीडे, कविचक्रवर्तिदेवीप्रसादञ्च ।
क्लिष्टं सर्वं काव्यं, यत्सविधेऽधीतवान् काश्याम् ॥ ६ ॥
तदनु परीक्षां कठिनां, तत्तद्विषये महाकेन्द्रम् ।
दातुमहं काशीतः, पाटलिपुत्रं समायातः ॥ ७ ॥
व्याकरणे विषये प्राक्, पाटलिपुत्रे परीक्षितोऽभूवम् ।
चतुरक्षिनन्दभूमि,प्रमिते वर्षे हि खृष्टीये ॥ ८ ॥
नवनेत्रनन्दचन्द्रमितखृष्टाब्दे परीक्षितः काव्ये ।
महामहोपाध्याय,मुखतः श्रुत्वा ध्वनेः सारम् ॥ ९ ॥
"अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः ।
वररुचिपतञ्जली इह, परीक्षिताः ख्यातिमुपजग्मुः" ॥१०॥

काव्यमीमांसापद्यं त्वेतद् द्रढयत्यवश्यं हि ।
"काशी विद्याकेन्द्रं," न तु केन्द्रं सत्परीक्षायाः ॥११॥
निश्चप्रचमेवैतत्, तत्रैवातः परीक्षितोऽभूवम् ।
"पाटलिपुत्रं केन्द्रं," विदुषां तत्तत्परीक्षायाः ॥१२॥
महामहोपाध्यायं, **हरिहरकृपालुद्विवेदिनं** नौमि ।
ध्वनिगुरुमेनं भूयः, प्रतिभाभिः शेषरूपिणं स्तौमि ॥१३॥
गुरुकृपया सहसाऽहं, ध्वन्यालोकस्य भूमिकां लिखितुम् ।
आर्य्यावृत्त्या प्रसितो, विप्रो**ऽलखदेवशर्म्मा**ऽयम् ॥१४॥

आर्य्यप्रेष्ठा, मान्याः,
साहित्याम्भोधिमज्जने धीराः ।
ध्वनिरसिका विलसन्तः,
सन्तो मान्या अये विबुधाः ! ॥१५॥

शास्त्रेषु काव्यमेव, विद्वन्मोदप्रदं षट्सु ।
निखिलेषु नीरसेषु, सरसं कान्तासमं हृद्यम् ॥१६॥
धर्मार्थकाममोक्ष,पुरुषार्थचतुष्टयप्रदं नूनम् ।
सम्यगुपदेशकर्तृ, सर्वजनाह्लादकारकं नित्यम् ॥१७॥
तत्र प्रथमं काव्यं, दृश्यश्रव्यत्वभेदाभ्याम् ।
द्विविधं शब्दार्थमयं, बहुविधकाव्यप्रभेदेषु ॥१८॥
काव्यस्य जीवितमिव, शाब्दिकस्फोटो व तत्राऽपि ।
ध्वनिरेव सारभूतं, रसप्रधानं हि वस्त्वेतत् ॥१९॥
येन रसप्राधान्येनोत्तमकाव्यं ध्वनिः प्रोक्तः ।
तद्रसजनने बहवो वादाः प्रचलन्ति काव्येषु ॥२०॥
भट्टोद्भटलोल्लट,सम्मत उत्पत्तिवादोऽस्ति ।
श्रीशङ्कुकसम्मत इह, वादश्चान्योऽनुमितिवादः ॥२१॥
नायकभट्टप्रवर,प्रथितोऽन्यो भोजकत्ववादोऽपि ।
अभिनवगुप्ताचार्य्य,सम्मत एको ध्वनेर्वादः ॥२२॥
सर्वविपक्षिपराजयहेतुक एकोऽभिव्यक्तिवादोऽस्ति ।

एष चतुर्थो वादो, "डिण्डिमघोषो" ध्वनेः कर्तुः ॥२३॥
यद्यप्येतदभाववादिविकल्पाश्च सन्ति भूरि ।
तानेव हि खण्डयितुं, ध्वन्यालोकस्य चारम्भः ॥२४॥
राजानकपदवीकः कविवर आनन्दवर्धनाचार्य्यः ।
ध्वन्यध्वन्यालोकं, दातुं चक्रे त्विमं ग्रन्थम् ॥२५॥
ध्वन्यालोकश्चायं ग्रन्थो भागद्वयात्मकश्चास्ति ।
भागस्तत्र प्रथमो ध्वनिसंज्ञक एष कारिकारूपः ॥२६॥
अपरस्तद्वृत्तिरूप, आलोको भूरिसूरिभिर्ज्ञेयः ।
तत्र द्वयोः प्रणेता, ह्यानन्दवर्धनाचार्य्य एवास्ति ॥२७॥
कर्तैको विज्ञेयो, ग्रन्थादौ मङ्गलस्य चैक्येन ।
वृत्तेर्हि कारिकाणां प्रतिपाद्यांशस्य चैक्येन ॥२८॥

"ध्वनिनातिगभीरेण काव्यतत्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥"

इति राजशेखरीयपद्यस्य दर्शनात्तत्प्रतीतेश्च ।
मतमेतत्पौरस्त्यविदुषां साहित्यिकानां वै ॥२९॥
"अत एव मूलकारिका तन्निराकरणार्था न श्रूयते वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति ।"
इति मुद्रितलोचनस्य, चैकोनषष्टिपृष्ठीयगद्यस्य ।
अनुसारं कारिकातश्चैतद्वृत्तेः प्रणेताऽन्यः ॥३०॥
एवं स ध्वनिकारस्तत्समयश्चापि नैव निर्णेयः ।
जैकोवीप्रभृतीनां, पाश्चात्यानां मतं ह्येतत् ॥३१॥
यद्यनयोश्चाभेदो राजानकपदविभूषितो ध्वनिकृत् ।
काश्मीरोद्भवविप्रश्चैष ह्यानन्दवर्धनाचार्य्यः ॥३२॥
सूनुर्भट्टनोणस्य, काश्मीरावन्तिवर्मनृपतेर्हि ।
परिषत्पण्डित आसीदत एव खृष्टनवमशताब्दीयः ॥३३॥
निश्चितवान् जैकोवी, राजतरङ्गिणीत एतच्च ।
वामनमतमप्येतज्, ज्ञेयं विद्वद्वरैः कृतिभिः ॥३४॥

निखिलेषु दर्शनेषु, प्रौढ़िं परमां हि विभ्राणः।
आलङ्कारिकवर्य्यो, वैयाकरणोऽप्ययञ्चासीत् ॥३५॥
एतद्विरचितबन्धाः, श्रूयन्ते पञ्च विख्याताः।
ध्वन्यालोको देवीशतकं सद्विषमवाणलीला च ॥३६॥
अर्जुनचरितं धर्म्मोत्तमविवृतिर्विनिश्चयाख्याऽपि।
एतत्प्रवन्धपञ्चक उपलब्धिर्नैव सर्व्वेषाम् ॥३७॥
"इति नवतितमेऽस्मिन्, वत्सरेऽन्त्ये युगांशे।
तिथिशशिजलधिस्थे, मार्गशीर्षावसाने॥"
इति पद्यं रचयित्वा, लोचनकारोऽभिनवगुप्तः।
खृष्टां दशमशताव्दीं निर्धारितवान् स्वसमयञ्च ॥३८॥
दशमशताब्द्यां जातः, क्षेमेन्द्रः स्वप्रबन्धेषु।
प्रामाणिकमानन्दवर्धनमेनं ह्युरीचक्रे ॥३९॥
एतावतापि समयो, नवमशताव्दी ध्वनेः कर्तुः।
राजानकपदभाजो, ज्ञेयो विद्वद्वरैश्चास्य ॥४०॥
लोचनकारः पौत्रो, वराहगुप्तस्य चुखलतनुजन्मा।
दशमशताव्दे जातो, ह्यभिनवगुप्तो मनोरथभ्राता ॥४१॥
ध्वनिकारवृत्तिकारलोचनकृत्समयो विनिर्दिष्टः।
तदनु पुनर्ध्वनिविषये, किञ्चिद्वक्तुं समीहेऽहम् ॥४२॥
यद्यपि वहवो भेदाः, सन्त्येतस्य ध्वनेर्नूनम्।
व्युत्पत्त्या पुनरेष, ध्वनिरपि पञ्चप्रकारोऽस्ति ॥४३॥
ध्वनतीति व्युत्पत्त्या, शब्दोऽर्थोऽपि ध्वनिर्द्विविधः।
ध्वन्यत इति यः सोऽलं,कृती रसो वस्त्वपि ध्वनयः ॥४४॥
येन ध्वन्यत इत्थं, व्यापारोऽपि ध्वनिश्चास्ति।
यस्मिन् ध्वन्यत इत्थं, काव्यञ्चापि ध्वनिश्चास्ति ॥४५॥
सोऽयं व्युत्पत्तिकृतो, भेदः प्रोक्तो मया स्पष्टम्।
अथ संक्षिप्ता विषया, ध्वन्यालोकस्य लिख्यन्ते ॥४६॥
प्रथमोद्योते प्रथमं, ध्वन्यभाववादिनां विकल्पानाम्।
पूर्णं खण्डनमग्रे, निरूपणं ध्वनिस्वरूपस्य ॥४७॥

ततो द्वितीयोद्योते, व्यङ्ग्यमुखेन ध्वनेः प्रभेदानाम् ।
सोदाहरणं लक्षणमुक्तं प्रथमं समेषाञ्च ॥४८॥
पारस्परिको भेदो रसध्वने रसवदादीनाम् ।
तदनु विपक्षिमतानां, खण्डनपूर्वं गुणोक्तिश्च ॥४९॥
विनिवेशने समीक्षा,ऽलङ्काराणां प्रदर्शिता चाग्रे ।
तदनु व्याख्याकरण,स्यावश्यकता प्रदश्यते शीघ्रम् ॥५०॥
यद्यपि वह्वयो टीका, ध्वन्यालोकस्य सन्त्यधुना ।
किन्तु प्रतिपदविवृत्तिप्रकाशहीनाः समाः सन्ति ॥५१॥
ध्वन्यालोकव्याख्ये, लोचनमेका च चन्द्रिका चान्या ।
प्रन्नं यल्लोचनमपि, शीर्णं तच्चापि दृश्यते प्रायः ॥५२॥
"किं लोचनं विनाऽलोको भाति चन्द्रिकयाऽपि हि ।
तेनाभिनवगुप्तोऽत्र, लोचनोन्मीलनं व्यधात् ॥५३॥"
एतत्पद्योल्लेखात्, श्रुतिविषया या च केवलं टीका ।
अस्तमितप्राया हि लब्धुमशक्या च चन्द्रिका साऽपि ॥५४॥
सर्वच्छाया चैका दीधितिरप्यस्ति बहुगहना ।
गहने भ्रष्टपथानां प्रदर्शिका सा कथं नृणाम् ॥५५॥
सामञ्जस्यञ्चैतद् बहुविधमालोक्य प्रेर्य्यमाणेन ।
क्रियते प्रकाशिकैषा, नूनं परीक्षोपयोगिनीयं हि ॥५६॥
लोचनयोरालोके, सत्यपि तमसां विघाताय ।
एषा प्रकाशिका मे, दद्यात्पूर्णं प्रकाशनं नृणाम् ॥५७॥
छात्राणाञ्च भवेच्चेद्, दुर्गममार्गे परीक्षायाः ।
उद्योतद्वयमाप्य, प्रकाशसिद्धिस्तमो हन्तुम् ॥५८॥
नावश्यकतां प्रेक्षे, तृतीयतुर्य्ययोरपि विवृतेः ।
साम्प्रतमतस्त्यजामि, स्वीयं स्वास्थ्यं समीक्ष्यैव ॥५९॥
एतद्विरचनसमये पाटलिपुत्रात्समागच्छन् ।
शकटादवातरन् वै चरणे पीडामहं प्राप्तः ॥६०॥
यद्यपि प्रकाशिकाख्या, व्याख्यैवास्त्यर्थबोधने पूर्णा ।
किन्तु तथापि बहूनां, हेतोः क्रियतेऽर्थदीपिका भाषा ॥६१॥

विवृतिरियं हि मदीया, विद्वन्मोदप्रदा चेत्स्यात्।
साफल्यञ्च तदैव मन्येय स्वप्रयासस्य ॥६२॥
आलोकेऽतिदुरूहे, लोचनमार्गेऽप्यतीव दुर्गम्ये।
गहने मे सुविचरतः, स्खलनञ्चेत् क्षम्यतां प्राज्ञैः ॥६३॥
"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः"।
इति मत्वा हि धीराणां क्षमा धर्मोऽपि वै स्वकः ॥६४॥

भवदीयोऽलखदेवः,
साञ्जलि नूनं निवेदयते।
विवृतिरियं हि मदीया,
विबुधैर्हृदयेन संग्राह्या ॥६५॥

———

# भूमिका

यद्यपि इस ग्रन्थ की भूमिका पद्यों में लिखी जा चुकी है और विद्वानों के लिये वही स्पष्टरूपेण पथप्रदर्शिका है किन्तु सार्वजनिक सन्तोषार्थ राष्ट्रभाषा हिन्दी होनेके कारण हिन्दी में भी भूमिका दी जारही है:—

साहित्य रसिक विद्वज्जनों को ये प्राय: विदित ही है कि छ: शास्त्रों में काव्य ही एक धर्म-अर्थ-काम-मोक्ष इन चार पुरुषार्थों को देने के कारण, और सहृदयों के आनन्द कारक होने के कारण तथा सरस होने के कारण मनोरम तथा सबों को खुश करनेवाला है। दृश्य-श्रव्य के भेद से काव्य दो प्रकार के हैं। उसमें भी ध्वनि और गुणीभूतव्यङ्ग्य के भेद से दो प्रकार हैं। उसमें शब्दार्थमय काव्य के रसप्रधान सारवस्तु ध्वनि ही है इसलिये यह उत्तम काव्य माना गया है-यह निर्विवाद बात है। जिन रसों की प्रधानता से ध्वनि को उत्तम काव्य माना गया है उन रसों की उत्पत्ति में निम्न लिखित वाद चल रहे हैं—

[ १ ] भट्टलोल्लट के सम्मत प्रथम उत्पत्तिवाद।

[ २ ] श्रीशङ्कुकसम्मत द्वितीय अनुमितिवाद।

[ ३ ] भट्टनायक सम्मत तृतीय भोजकत्ववाद।

[ ४ ] अभिनव गुप्ताचार्य सम्मत चतुर्थ अभिव्यक्तिवाद।

[ १ ] उनमें जो प्रथमवाद है वह—

"ललनादिभिरालम्बनविभावैरुद्यानादिभिरुद्दीपनविभावैः कटाक्षादिभिरनुभावैः कार्य्यैर्निर्वेदादिभिः सहकारिकारणैश्च क्रमशो जनितत्वेन, उद्दीपितत्वेन, प्रतीतिविषयत्वेन च मुख्यवृत्त्या रामादावनुकार्य्ये तद्रूपत्वानुसन्धानादनुकरणे रत्यादावपि रसस्योत्पत्तिप्रतीतिः।" भट्टलोल्लट का मत है।

२ द्वितीयवाद में:—"सम्यङ् मिथ्या-संशय-सादृश्यप्रतीतिभ्यो विलक्षणप्रतिपत्त्या नटेऽपि स्वनैपुण्यप्रदर्शनेन कारणकार्य्यसहकारिभिः संयोगाद् गम्यगमकभावरूपादनुमीयमानस्य वस्तुसौन्दर्य्यवशाद्रसनीयत्वेनासतोऽपि रत्यादिभावस्य सामाजिकवासनया चर्व्यमाणत्वेन च रसस्य भानम्।" यह श्रीशङ्कुक का सिद्धान्त है। इस मत में:—

"रामोऽयं सीताविषयकरतिमान्, सीतात्मकविभावादि सम्बन्धित्वात्, यन्नैवं तन्नैवम्, यथाऽहम्।" यह अनुमान ही साधक है।

३ तृतीयवाद में:—"विभावादिभिः संयोगाद्भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्तिरेव भुक्तिः।" यह भट्टनायक का सिद्धान्त है।

४ चतुर्थ ध्वनिवाद है:—यह वाद "डिण्डिमवाद्योद्घोष "अर्थात् विजयप्राप्ति का ( नगाडा ) कहा जाता है। इस ध्वनिवाद में भी अल्पभाववादियों के बहुत से विकल्पवाद हैं, जैसे:—

[ १ ] अभाववाद।

[ २ ] भाक्तवाद।

[ ३ ] अनिर्वचनीयवाद।

[ ३ ] अलङ्कारान्तर्भाववाद।

[ ४ ] रीतिवाद।

[ ५ ] वक्रोक्त्यन्तर्भाववाद।

इन पूर्वोक्त तीन वाद के साथ सभी वाद विपक्षियों का सम्मत है इन्हीं ध्वन्यभाववादी विपक्षियों के मत खण्डन के लिये और अभिव्यक्तिवादी अभिनवगुप्तपादाचार्य्य सम्मत ध्वनिवाद को स्थिर करने के लिये राजानकानन्दवर्धनाचार्य्य ने साहित्य के जटिल ध्वनिमार्ग में आलोक स्वरूप ध्वन्यालोक को बनाया है।

सभी ध्वनि के भेदों के अतिरिक्त व्युत्पत्ति के भेद से भी ध्वनि ५ पाँच प्रकार के हैं, जैसे:—

[ १ ] "ध्वनति यः सः" इस व्युत्पत्ति के अनुसार जो ध्वनित करे कराये वह व्यञ्जक शब्द भी ध्वनि है।

[ २ ] "ध्वनति ध्वनयति वा यः सः" इस व्युत्पत्ति के अनुसार जो ध्वनित करे कराये वह व्यञ्जक अर्थ भी ध्वनि है।

[ ३ ] "ध्वन्यते यः स ध्वनिः" इस व्युत्पत्ति के अनुसार जो ध्वनित किया जाये वह रस अलङ्कार और वस्तु भी ध्वनि है।

[ ४ ] "ध्वन्यतेऽनेन" इस व्युत्पत्ति के अनुसार जिसके द्वारा ध्वनित किया जाये वह शब्दार्थ व्यापार भी ध्वनि है।

[ ५ ] "ध्वन्यतेऽस्मिन्" इस व्युत्पत्ति के अनुसार जिसमें वस्तु अलङ्कार रसादि ध्वनित होवें वह काव्य भी ध्वनि है। इस प्रकार व्युत्पत्ति के अनुसार भी ध्वनि पांच प्रकार के हैं।

यह ध्वनि केवल साहित्यिकों के सम्मत नहीं है किन्तु "प्रथमे हि विद्वांसो वैयाकरणाव्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द उच्यते।" महाभाष्यकार के लेख से वैयाकरणों का भी सम्मत है।

वाक्यपदीय में भर्तृहरिने भी कहा है कि—

"स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते।

अर्थात् शब्द के दो भेद हैं प्राकृत और वैकृत उसमें प्राकृत ध्वनि स्फोट ग्रहण में कारण है। शब्द हो जाने के बाद अभिव्यक्ति के द्वारा जो आवाज होती है वह वैकृत ध्वनि है वह स्फोट स्वरूप ही है।

फिर आगे चलकर कहा कि—

"यः संयोगवियोगाभ्यां करणैरुपजायते।
स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः॥"

अर्थात् करणों ( *Vocal osgans* ) के संयोग और वियोग से जो स्फोट उत्पन्न होता है वह शब्दज शब्द ध्वनि कहलाता है।

फिर आगे चलकर यह भी कहा है कि—

"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्य्यते ॥"

अर्थात् ग्रहण के अनुकूल अनुपाख्येय ( जो शब्दों के द्वारा व्यक्त नहीं किया जा सकता ) प्रत्ययों द्वारा ध्वनिरूप में प्रकाशित शब्द में स्वरूप निश्चित हो जाता है।

इस प्रकार ध्वनि सर्वसम्मति से निर्णीत है।

ग्रन्थ समालोचना इस प्रकार है—

यह ध्वन्यालोक दो भागों में विभक्त है। कारिकाग्रन्थ ध्वनिसंज्ञक है। दूसरा वृत्तिग्रन्थ आलोक संज्ञक है। इसके तीन नाम हैं—ध्वन्यालोक—सहृदयालोक, काव्यालोक। इसमें कारिकाग्रन्थ के आदि में मङ्गल नहीं रहने के कारण तथा वृत्तिग्रन्थ कारिकाग्रन्थ के अनुकूल रहने के कारण कारिका और वृत्ति के एक ही निर्माता है यह पौरस्त्य विद्वानों का मत है।

निर्णयसागर के मुद्रित लोचनग्रन्थ के ५९ वें पृष्ठ के गद्य के अनुसार कारिकाकार और वृत्तिकार भिन्न-भिन्न हैं यह पाश्चात्य विद्वानों का मत है।

इस तरह के मतभेद में ध्वनिकार कौन हैं और उनका समय क्या है यह निर्णय होना असम्भव है, हाँ यह कहा जा सकता है कि—दण्डिभामह उद्भट आदि कवि सप्तमशताब्दीय थे और वृत्तिकार नवमशताब्दीय थे इसलिए वृत्तिकार से ध्वनिकार प्राचीन हैं।

यदि कारिका और वृत्ति के निर्माता एक हैं तब राजानक आनन्दवर्धनाचार्य्य के बारे में यह कहा जा सकता है कि खृष्ट नवमशताब्दी में काश्मीरदेश के अधिपति अवन्ति वर्मा के राजसभा के पण्डित थे—

इस तरह के राजतरङ्गिणी के लेख से आनन्दवर्धनाचार्य्य खृष्टनवम-शताब्दीय प्रतीत होते हैं। एतावता ये काश्मीरदेशीय ब्राह्मण थे और भट्टनोण के पुत्र थे। एतत्समकालीन ही मनोरथ कवि भी थे।

इन्होंने वैयाकरणों के मत का अपने ग्रन्थ में पूर्णरूप से समर्थन किया है इसलिए ये वैयाकरण भी थे—यह प्रतीत होता है क्योंकि जो जिस मत के अनुयायी नहीं रहता है वह उस मत को खण्डन करता है प्रशंसा नहीं। इसमें "प्रथमे हि विद्वांसो वैयाकरणाः" यह लेख ही प्रमाण है।

आनन्दवर्धनाचार्य्य से प्रणीत ५ ग्रन्थ हैं—

[ १ ] ध्वन्यालोक।

[ २ ] देवीशतक।

[ ३ ] विषमवाणलीला ( जो प्राकृत में है )

[ ४ ] अर्जुनचरित।

[ ५ ] धर्मोत्तम विनिश्चयाविवृति।

इनमें सभी इस समय उपलब्ध नहीं हैं।

यद्यपि ध्वन्यालोक की टीकायें प्राचीन और नवीन बहुत सी हैं किन्तु सभी छात्रों के दुर्बोध हैं और प्रतिपदव्याख्या भावार्थ से रहित है। कठिनांश के स्पष्टीकरण के निमित्त इसमें हिन्दी टीका भी दी गई है। साथ साथ परीक्ष्य अंशों को अभ्यास के लिये विहार संस्कृत समिति के ११ वर्षों के प्रश्नों के साथ उत्तर भी दे दिये गये हैं।

यद्यपि ध्वन्यालोक की प्रकाशिका टीका के निर्माण की प्रेरणा का श्रेय सभी स्नातकों को है किन्तु इनके साथ ही माननीय धन्यवाद के पात्र स्वर्गीय श्री मास्टर खेलाड़ीलाल जी के सुपुत्र बा० बैजनाथ प्रसाद जी की प्रबल प्रेरणा से वशीभूत होकर मैंने अस्वस्थावस्था में भी ई० सन् १९५३ में अनवरत परिश्रम कर २०१० सम्वत् में ६-७-५३ को ही पूर्ण कर डाला।

विशेषतः बा० श्री बैजनाथ प्रसाद जी धन्यवाद के पात्र इसलिये हैं कि जिन्होंने इस ग्रन्थ को सुन्दर रूप में प्रकाशित करने का साहस किया है उनको बधाई देता हूँ।

जिनके निकट मैं रहकर ध्वन्यालोक का तत्व प्राप्त किया था, आज संसार में नहीं हैं। यदि वे होते तो इसे देखकर बहुत प्रसन्न होते। मुझे पूर्ण स्मरण है कि बिहार संस्कृत समिति के १९४५ वर्षीय संस्कृत परिषद् नौमिनेशन द्वारा सदस्यों के निर्वाचन में जब मैं प्रार्थी था तो मेरा नाम निर्वाचित होने पर गुरु जी बहुत प्रसन्न हुए और तत्काल आशीर्वाद दिये। आज उन्हीं के आशीर्वाद से इस की समाप्ति हुई है तो उनके चरणों में न सही उनकी पुण्य स्मृति में ही इस कृति को सभी विद्वज्जनों के कर-कमलों में समर्पित करता हूँ और निवेदन करता हूँ कि सम्भवतः निर्माण में कुछ त्रुटियां रह गई हों तो विद्वद्वर्ग यदि उसका निर्देश करेंगे तो मैं उसके लिये सदैव ऋणी रहूँगा और अगले संस्करण में उनको दूर करने का यथासम्भव प्रयत्नशील रहूँगा।

सम्वत् २०१०
गुरुपूर्णिमा



विनीतः—
अलखदेव शर्मा
प्रिंसिपल
बिहार सं० महाविद्यालय, बिहारशरीफ (पटना)

---



म० म० पं० श्री हरिहरकृपालु द्विवेदी

विषयस्याभ्यासार्थं सूची निर्दिश्यते स्पष्टम् ।
प्रश्नमुखेन वटूनां नूनं मोदप्रदा भूयात् ॥ १ ॥

—:०:—

## प्रथमोद्योते—


| विषयाः | पृ० | पं० |
|---|---|---|
| ग्रन्थकर्तुर्मङ्गलत्रये कीदृशं मङ्गलम् ? | १ | १२ |
| टीकाकर्तुश्च कीदृशं मङ्गलम् ? | १ | ५ |
| स्वेच्छाकेसरिण इति पद्ये प्रतिपदं कीदृग्ध्वनिनिर्देशः ? | २ | १५ |
| अनुबन्धप्रदर्शनपूर्वकं ध्वनिस्वरूपप्रतिपादनाय कीदृशी प्रतिज्ञा ? | ३ | २ |
| ध्वन्यभाववादिनां कति विकल्पाः ? | | |
| वैदर्भीप्रभृतयो रीतयः कति ? किञ्च तासां लक्षणम् ? | ५ | ३ |
| ध्वन्यभाववादिनां प्रथमविकल्पस्य कः सारांशः ? | ५ | ११ |
| ध्वन्यभाववादिनां द्वितीयविकल्पस्य कः सारांशः ? | ६ | २ |
| ध्वन्यभाववादिनां तृतीयविकल्पस्य कः सारांशः ? | ७ | ३ |
| ध्वनेर्भाक्तत्ववादिनः कीदृङ्मतम् ? | १० | १६ |
| का खलु भाक्तपदव्युत्पत्तिः ? | १० | ११ |
| के तावद् भाक्तत्ववादिनः ? | १० | १६ |
| ध्वनेरनिर्वचनीयत्वं कथं सम्भवति ? | ११ | ५ |
| ध्वन्यालोकेऽनुबन्धचतुष्टयम् किम् ? | १२ | १५ |
| ध्वनेः प्रथमं भेदद्वयं किम् ? | १२ | २६ |
| व्यङ्ग्यस्य वाच्यात् किं वैलक्षण्यम् ? | १४ | २३ |
| प्रतीयमानार्थस्य ध्वनेः के तावत् त्रयः प्रभेदाः ? | १६ | १ |
| वस्तुध्वनेः के तावत् चत्वारः प्रकाराः ? | | |
| क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपस्य वस्तुव्यङ्ग्यस्य किमुदाहरणम् ? | १६ | ६ |
| क्वचिद् वाच्ये विधिरूपे प्रतिषेधरूपस्य वस्तुव्यङ्ग्यस्य किमुदाहरणम् ? | १८ | १७ |
| क्वचिद्वाच्ये विधिरूपेऽनुभयरूपवस्तुव्यङ्ग्यस्य किमुदाहरणम् ? | १९ | २१ |

| विषयाः | पृ० | पं० |
|---|---|---|
| क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपवस्तुव्यङ्ग्यस्य किमुदाहरणम् ? | २० | १६ |
| क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितस्य वस्तुध्वनेः किमुदाहरणम् ? | २१ | २६ |
| प्रकाशिकायां वाच्याद्विभेदिनोऽपरेऽपि प्रतीयमानभेदाद्दर्पणोक्ताः | २३ | २२ |
| अलङ्कारात्मकस्य द्वितीयव्यङ्ग्यभेदस्य कथं वाच्याद्भिन्नत्वम् ? | २३ | १२ |
| तृतीयव्यङ्ग्यभेदस्य रसादेः कथं वाच्याद् भिन्नत्वम् ? | २३ | १४ |
| रसादिलक्षणध्वनेर्वाच्यत्वखण्डने किं प्रकारद्वयम् ? | २४ | १३ |
| प्रथमप्रकारे को दोषः ? | २४ | १५ |
| ( प्रकाशिकायां ) रसादीनां स्वशब्दनिवेदितत्वाभावे कुत्र कश्च दोषः ? | २४ | २६ |
| ( प्रकाशिकायां ) रसस्य स्वशब्दनिवेदितत्वोदाहरणम् किम् ? | २५ | ४ |
| ( प्रकाशिकायां ) भावस्य स्वशब्दनिवेदितत्वोदाहरणम् किम् ? | २५ | ६ |
| ( प्रकाशिकायां ) रसादिघटितेऽपि "सरसो विपरीतश्चेत्" इति पद्ये कुतो न रसवत्वप्रतीतिः ? | २५ | २१ |
| ( प्रकाशिकायां ) के तावदष्टौ रसाः ? | २६ | ६ |
| तृतीयस्य रसादिलक्षणव्यङ्ग्यस्य वाच्याद् भिन्नत्वे किं पर्य्यवसितम् ? | २६ | १४ |
| व्यङ्ग्यस्य काव्यात्मत्वे क ऐतिहासिकदृष्टान्तः ? | २७ | १४ |
| व्यङ्ग्यस्य काव्यात्मत्वे आदिकवेरुदाहरणे को ध्वनिः ? | २८ | १६ |
| मानिषादेति पद्यस्य रामपक्षे कीदृशी व्याख्या ? | २८ | १ |
| ,, ,, निषादपक्षे ,, ,, | २८ | २८ |
| ,, ,, कुवेरपक्षे ,, ,, | २९ | ७ |
| शोकस्य कथं व्यङ्ग्यत्वप्रतिपादनम् ? | २८ | १९ |
| कवेः प्रतिभाया अपि व्यङ्ग्यत्वप्रतिपादनम् | २८ | २२ |
| प्रतीयमानस्यार्थस्य सद्भावसाधकं किं प्रमाणम् ? | ३१ | १९ |
| वाच्यप्रतीयमानयोः को भेदः ? | ३२ | ९ |
| ( प्रकाशिकायाम् ) स्वरस्य किं लक्षणम् ? | ३२ | २४ |
| ,, श्रुतेः किं लक्षणम् ? | ३२ | २६ |

| विषयाः | पृ० | पं० |
|---|---|---|
| वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य कथं प्राधान्यम् ? | ३३ | १२ |
| व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि वाच्यवाचकयोः | का० | ९ |
| कथमुपादानम् ? सनिदर्शनमेतत्प्रतिपाद्यताम् ? | का० | १० |
| वाच्यार्थप्रतीतावपि व्यङ्ग्यस्यार्थस्य प्राधान्ये को दृष्टान्तः ? | का० | ११–१२ |
| ध्वनिकारमते ध्वनेः किं लक्षणम् ? | का० | १३ |
| उपमाद्यलङ्कारेभ्यो ध्वनेः कथं विभक्तं विषयत्वम् ? | ३१ | ८ |
| ध्वन्यभाववादिनां द्वितीयविकल्पस्य कथं खण्डनम् ? | ३९ | १७ |
| ,, तृतीयविकल्पस्य कथं खण्डनम् ? | ४० | १६ |
| उपमादिषु ध्वनेः कुतो नान्तर्भावः ? | ४१ | १६ |
| प्रतीयमानार्थप्रतीतिस्थलेषु समासोक्त्यलङ्कारेषु कुतो न ध्वनेरन्तर्भावः ? | ४२ | २ |
| ( प्रकाशिकायां ) समासोक्तेः किं लक्षणम् ? | ४३ | १५ |
| ,, समासोक्तेः किमुदाहरणम् ? | ४३ | ११ |
| समासोक्तौ ध्वनेः कुतो नान्तर्भावः ? | ४४ | १६ |
| आक्षेपालङ्कारे ध्वनेः कुतो नान्तर्भावः ? | ४५ | ७ |
| आक्षेपालङ्कारस्य लक्षणं किम् ? | ४५ | १० |
| ,, किमुदाहरणम् ? | ४५ | १३ |
| "अनुरागवती सन्ध्या" इति पद्ये व्यङ्ग्यप्रतीतावपि कुतो न व्यङ्ग्यस्य प्राधान्यम् ? | ४६ | ५ |
| दीपकेऽपह्नुतौ च कुतो न ध्वनेरन्तर्भावः ? | ४७ | १७ |
| ( प्रकाशिकायां ) दीपकालङ्कारस्य लक्षणम् ? | ४७ | १९ |
| ,, ,, उदाहरणम् | ४७ | २३ |
| ,, अपह्नुतेर्लक्षणम् | ४७ | २७ |
| ,, अपह्नुतेरुदाहरणम् | ४८ | २ |
| ,, विशेषोक्तेर्लक्षणम् | ४८ | १६ |
| मूले विशेषोक्तेरुदाहरणम् | ४८ | १९ |
| विशेषोक्तौ ध्वनेः कुतो नान्तर्भावः ? | ४९ | १ |

| विषयाः | पृ० | पं० |
|---|---|---|
| पर्यायोक्तालङ्कारे ध्वनेः कुतो नान्तर्भावः ? | ४६ | १३ |
| पर्यायोक्तालङ्कारस्य किमुदाहरणम् ? ( प्रकाशिकायां ) | ४६ | १६ |
| „ किं लक्षणम् ? „ | ४६ | १८ |
| भामहप्रदर्शिते पर्यायोक्तोदाहरणे कुतो न व्यङ्ग्यस्य प्राधान्यम् ? | ५० | १ |
| सङ्करालङ्कारे ध्वनेः कुतो नान्तर्भावः ? | ५० | २६ |
| विद्यानाथीयं सङ्करस्य किं लक्षणम् ? | ५१ | ६ |
| सङ्करस्य विश्वनाथोक्ता भेदाः के ? ( प्रकाशिकायां ) | ५१ | ९ |
| सङ्करालङ्कारप्रथमभेदस्याङ्गाङ्गित्वस्य किं लक्षणम् ? ( प्रकाशिकायाम् ) | ५१ | १२ |
| सङ्करभेदस्य एकाश्रयत्वस्य किं लक्षणम् ? | ५१ | १३ |
| ( प्रकाशिकायां ) सन्दिग्धत्वस्य किं लक्षणम् | ५१ | १४ |
| „ अङ्गाङ्गित्वस्य किमुदाहरणम् ? | ५१ | १९ |
| „ अलङ्कारद्वयसन्देहे सङ्करप्रभेदे संदिग्धे कुतो न व्यङ्ग्यस्य प्राधान्यम् ? सोदाहरणं विविच्यताम् ? | ५२ | १० |
| उद्भटमते सङ्करप्रभेदाः कति ? कथञ्च तन्मते खण्डनम् ? ( प्रकाशिकायाम् ) | ५२ | १२ |
| ( प्रकाशिकायाम् ) भवति न गुणानुरागा इति सङ्करोदाहरणेऽर्थान्तरन्यासस्याङ्गत्वेऽपि व्यतिरेकापह्नुत्योस्तु व्यङ्ग्यप्राधान्येऽपि ध्वनेः कुतो न प्रवेशः ? ( अथ ) | ५२ | २५ |
| सङ्करालङ्कारे कथं ध्वनेः सम्भावना ? | ५३ | ११ |
| अप्रस्तुतप्रशंसायां कथन्न ध्वनिसम्भावना ? | ५३ | २४ |
| ( प्रकाशिकायां ) पाठभेदे विचारः | ५३ | १३ |
| „ अप्रस्तुतप्रशंसायाः किं लक्षणम् ? | ५४ | ६ |
| „ अप्रस्तुतप्रशंसायाः पञ्चप्रकाराः के ? | ५४ | १५ |
| „ अप्रस्तुतप्रशंसायाः प्रथमप्रकारस्योदाहरणम् | ५४ | २२ |
| „ „ द्वितीयभेदस्योदाहरणम् | ५५ | १ |
| „ „ तृतीयभेदस्योदाहरणम् | ५५ | ६ |

| विषयाः | पृ० | पं० |
|---|---|---|
| ,, ,, चतुर्थभेदस्योदाहरणम् | ५५ | १५ |
| ,, ,, पञ्चमभेदस्योदाहरणम् | ५८ | ५ |
| यत्र व्यङ्ग्यस्य न प्राधान्यं तत्र कथं न ध्वनिः ? | ५८ | १८ |
| ध्वनेः सङ्करोज्झितो विषयः कः ? | ५९ | ८ |
| ध्वनेरन्यत्रानन्तर्भावे को हेतुः ? | ५९ | २० |
| ध्वनिसंज्ञां व्यवहर्तुरन्यस्यापि मतम् | ६१ | ११ |
| षट्स्वङ्गेषु व्याकरणस्य प्राधान्ये शिक्षाप्रमाणम् | ६१ | २० |
| ध्वनिवादे भर्तृहरिमतम् | ६२ | २ |
| ध्वनिस्वीकारे निष्कर्षः | ६२ | १६ |
| ध्वनिवादे आलङ्कारिकविदुषामपि मतम् | ६३ | १ |
| ध्वनिवादे सर्वविदुषां संरम्भे हेतुः | ६३ | २० |
| सामान्येन प्रथमं ध्वनिः कतिविधः ? | ६४ | २१ |
| अविवक्षितवाच्यस्य ध्वनेः किमुदाहरणम् ? | ६५ | १७ |
| विवक्षितान्यपरवाच्यस्य ध्वनेः किमुदाहरणम् ? | ६६ | ११ |
| ध्वनेर्भाक्तत्वस्य कथं खण्डनम् ? | ६७ | १२ |
| ध्वनेर्भक्तितः को भेदः ? | ६७ | १५ |
| ध्वनेर्भक्तिलक्षणे को दोषः ? | ६८ | २५ |
| भक्तेः प्रथममुदाहरणम् ( प ) | ६९ | २५ |
| भक्तेर्द्वितीयमुदाहरणम् ( चु ) | ७० | २५ |
| भक्तेस्तृतीयमुदाहरणम् ( कु ) | ७१ | १६ |
| भक्तेश्चतुर्थमुदाहरणम् ( अ ) | ७२ | ७ |
| भक्तेः पञ्चममुदाहरणम् ( प ) | ७२ | २६ |
| ध्वनेः कीदृक् शब्दो विषयी भवेत् ? | ७४ | ११ |
| लावण्यादिशब्दानां कुतो न ध्वनिविषयत्वम् ? | का० | १९ |
| "लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्" इति पद्ये लावण्यशब्दसत्त्वे कथं रूपकध्वनिः ? | ७५ | २० |

| विषयाः | पृ० | पं० |
|---|---|---|
| मुख्यवृत्तिपरित्यागेऽपि गौण्या वृत्त्याऽर्थदर्शनेऽपि व्यङ्ग्योद्देशेन फल-प्रदर्शने शब्दस्य स्खलद्गतित्वन्न, किन्तु ध्वनिबोधकत्वमेव | का० | २० |
| ध्वनेर्भाक्तत्वनिरासे द्वितीयः प्रकारः | का० | २१ |
| गुणवृत्त्या ध्वनिस्वीकारे बहवो दोषाः | ७९ | ३ |
| प्रकारान्तरेण ध्वनेः परिपुष्टिः | ८० | १७ |

—o—

## द्वितीयोद्योते—

| | | |
|---|---|---|
| अविवक्षितवाच्यस्य ध्वनेः कति भेदाः ? | का० | १ |
| अर्थान्तरसङ्क्रमितवाच्यस्य किमुदाहरणम् ? | ८३ | १६ |
| अत्यन्ततिरस्कृतवाच्यस्य पदगतं किमुदाहरणम् ? | ८७ | २० |
| ( प्रकाशिकायाम् ) अभेदान्वयबोधविचारः | ८७ | १२ |
| अत्यन्ततिरस्कृतवाच्यस्य वाक्यगतं किमुदाहरणम् ? | ८८ | २२ |
| विवक्षितान्यपरवाच्यध्वनिः कतिविधः, किञ्च तत्स्वरूपम् ? | का. | २ |
| असंलक्ष्यक्रमव्यङ्ग्यस्य किं स्वरूपम् ? | का. | ३ |
| ( प्रकाशिकायाम् ) नव रसाः के ? | ९० | २६ |
| " रत्यादयः कति ? के च ते ? | ९१ | २ |
| " तृतीयकारिकायां भावपदेन कस्य ग्रहणम् ? | ९१ | ४ |
| " रसध्वनेः किमुदाहरणम् ? ( कि ) | ९१ | १८ |
| " भावध्वनेः किमुदाहरणम् ? ( ति ) | ९१ | २५ |
| " रसाभासस्य किमुदाहरणम् ? ( भ ) | ९२ | ४ |
| " भावाभासस्य किमुदाहरणम् ( रा ) | ९२ | ६ |
| " भावशान्तेः किमुदाहरणम् ? ( सु ) | ९२ | १३ |
| " भावोदयस्य किमुदाहरणम् ? ( च ) | ९२ | १६ |
| " भावसन्धेः किमुदाहरणम् ? ( न ) | ९२ | २५ |
| " भावशवलतायाः किमुदाहरणम् ? (क्का) | ९३ | २ |
| " क्काकार्य्यमिति पद्ये कति व्यभिचारिभावानां शवलता ? | ९३ | ४ |

| विषयाः | पृ० | पं० |
|---|---|---|
| रसवदलङ्कारादलक्ष्यक्रमव्यङ्ग्यध्वनेः को भेदः ? कश्च तद्विषयः ? | का० | ४ |
| रसवदलङ्कारस्य को विषयः ? | का० | ५ |
| ( प्रकाशिकायां ) रसवदलङ्काराः कति ? के च ते ? | ९५ | १० |
| ,, रसवदलङ्कारस्य किमुदाहरणम् ? | ९५ | २५ |
| ,, प्रेयोऽलङ्कारस्य किमुदाहरणम् ? | ९६ | २ |
| ( प्रकाशिकायां ) उर्जस्विनामालङ्कारस्य किमुदाहरणम् ? | ९६ | ८ |
| ,, समाहितस्य किमुदाहरणम् ( अ ) | ९६ | १३ |
| ,, भावोदयस्य किमुदाहरणम् ? ( म ) | ९६ | १८ |
| ,, भावसन्धेः किमुदाहरणम् ? ( ज ) | ९६ | २२ |
| ,, भावशबलतायाः किमुदाहरणम् ? ( प ) | ९६ | २६ |
| ,, रसवदाद्यलङ्कारविषये प्रकाशकारमतखण्डनम् | ९७ | ९ |
| ,, रसवदाद्यलङ्कारविषये कुवलयानन्दकारमतखण्डनम् | ९७ | १७ |
| ,, रसवदाद्यलङ्कारविषये उद्भटमतखण्डनम् | ९७ | २० |
| ध्वनिकारमते रसाद्यलङ्कारस्य को विषयः ? | ९८ | १ |
| रसाद्यलङ्कारः कतिविधः ? | ९८ | २४ |
| शुद्धरसाद्यलङ्कारस्य किमुदाहरणम् ? | ९९ | ७ |
| संकीर्णरसाद्यलङ्कारस्य किमुदाहरणम् ? ( क्षि ) | १०० | २५ |
| रसवदाद्यलङ्कारविषये ध्वनिकर्तुः कीदृशः संक्षिप्तसिद्धान्तः ? | का० | २६ |
| ( प्रकाशिकायाम् ) अलङ्कारस्य लक्षणम् तत्सिद्धान्तश्च | १०४ | ३ |
| रसाद्यलङ्कारेभ्यो रसादिध्वनेः को भेदः ? | १०४ | १९ |
| उपमाद्यलङ्कारेभ्यो रसाद्यलङ्काराणां कथं विभक्तविषयत्वम् ? | १०५ | १६ |
| उपमादीनां प्रविरलविषयत्वं निर्विषयत्वं वा कथम् ? | ,, | ,, |
| अचेतनवस्तुवृत्तान्तवर्णने चेतनवस्तुवृत्तान्तयोजनायामुपमादीनामलङ्काराणां सम्भवः ? | १०६ | ३ |
| चेतनवस्तुवृत्तान्तयोजनायामपि अचेतनपदार्थानां प्राधान्ये रसवदलङ्कारविषयाभावे दोषप्रदर्शनम् | १०६ | १५ |
| अचेतनवस्तुवर्णनस्य प्रथममुदाहरणम् ( त ) | १०७ | १० |

| विषयाः | पृ० | पं० |
|---|---|---|
| „ द्वितीयमुदाहरणम् ( त ) | १०८ | ७ |
| „ तृतीयमुदाहरणम् ( ते ) | १०९ | ८ |
| परमतखण्डनपुरस्सरं ध्वनिकारमते स्वमतस्य स्थापनम् | ११० | २५ |
| ( प्रकाशिकायाम् ) रसवदलङ्काररसादिध्वन्योः स्फुटीकरणम् | १११ | ११ |
| गुणालङ्कारयोः साम्यं रसध्वने रसवदलङ्काराणामभेदञ्च स्वीकुर्वतां विपक्षिणां मतस्य कथं खण्डनम् ? | १११ | २५ |
| ध्वनिकारमते गुणस्य किं स्वरूपम् ? | का० | ६ |
| शृङ्गारस्य रसस्यान्यरसापेक्षया कथं प्राधान्यम् ? | का० | ७ |
| ( प्रकाशिकायाम् ) अष्टौ रसाः के ? | ११३ | १९ |
| प्राचीनैः स्वीकृतस्य माधुर्य्यलक्षणस्य कथं खण्डनम् ? | ११४ | ९ |
| माधुर्य्यरसस्य कस्मिन् २ रसे कथं प्राधान्यम् ? | का० | ८ |
| ( प्रकाशिकायां ) शृङ्गारस्य के भेदाः ? किञ्च तल्लक्षणम् ? | ११५ | ७ |
| रौद्रादिरसानां दीपको को गुणः ? | का० | ९ |
| ओजोगुणस्य किमुदाहरणम् ? ( च ) | ११६ | १८ |
| दीर्घसमासरचनारहितस्य प्रसादगुणयुक्तस्य ओजोगुणस्य किमुदाहरणम् ? ( यो ) | ११७ | २३ |
| प्रसादगुणस्य ध्वनिकृन्मते किं लक्षणम् ? | का० | १० |
| ( प्रकाशिकायाम् ) दर्पणकारसम्मतं प्रसादलक्षणम् | ११९ | २० |
| श्रुतिदुष्टादीनां नित्यानित्यदोषाणां कुत्र हेयत्वम् ? | का० | ११ |
| ( प्रकाशिकायां ) नित्यदोषाः कति ? के च ते ? | १२१ | १५ |
| „ केषां २ दोषाणां नित्यानित्यत्वम् ? | १२१ | १५ |
| रसादिध्वनेर्भेदोपभेदवर्णने आनन्त्यदोषसम्भवस्य कथनम् | १२२ का० | १२ |
| शृङ्गारस्य भेदवर्णनम् तत आनन्त्यदोषकथनम् | १२४ | १६ |
| शृङ्गाररसस्य सर्वभेदेऽनुप्रासस्य कुतो न प्रकाशकत्वम् ? | १२६ का० | १४ |
| शृङ्गारे यमकादिनिबन्धनस्य कुतस्त्याज्यत्वम् ? | १२७ का० | १५ |
| ( प्रकाशिकायाम् ) यमकस्य लक्षणम् | १२८ | १८ |
| „ चित्रकाव्यस्य लक्षणम् | १२८ | २४ |

| विषयाः | पृ० | पं० |
|---|---|---|
| ,, पद्मबन्धस्योदाहरणं सचित्रम् | १२६ | १ |
| रसादिध्वनौ यमकादिनिबन्धने कथं प्रमादित्वम् ? | | |
| तत्प्रमादित्वञ्च कीदृक् ? | १२९ | ८ |
| यमकाद्यलङ्काराणां रसादिध्वनौ निबन्धने युक्तिकथनम् | १३० का० | १६ |
| रसादिध्वनावलङ्कारयोजनस्य क उपायः ? | १३० | १८ |
| अपृथग्यत्ननिर्वर्त्यालङ्कारस्य किमुदाहरणम् ? (क) | १३२ | ३ |
| रसादिध्वनौ यमकादिनिबन्धनापेक्षयाऽन्येषामलङ्काराणां तुल्यत्वखण्डनं कथम् ? | १३४ | ८ |
| तन्निबन्धने संग्रहश्लोकवर्णनम् | १३६ | ६ |
| ध्वन्यात्मभूतश्शृङ्गारस्य व्यञ्जकाः केऽलङ्काराः ? | १३७ का० | १७ |
| अलङ्काराणां रसादिध्वनौ विनिवेशने का कीदृशी च समीक्षा ? | १३८ का० | १८ |
| अलङ्कारस्य रसाङ्गत्वेन विवक्षायाः किमुदाहरणम् ? (च) | १३९ | ८ |
| अलङ्कारस्य रसाङ्गित्वेन विवक्षितस्य ,, (च) | १४० | ११ |
| अङ्गत्वेन विवक्षितस्यापि अलङ्कारस्यावसरे ग्रहणस्य किमुदाहरणम् (उ) | १४१ | ४ |
| अङ्गत्वेन विवक्षितालङ्कारस्य गृहीतस्य अवसरे त्यागस्य किमुदाहरणम् ? (र) | १४२ | ११ |
| रक्तस्त्वमिति पद्ये संसृष्टिवादिसंकरवादिनोर्मतं कीदृक् ? | १४३ | १८ |
| संसृष्टेर्विषयः कः ? किञ्च तस्या उदाहरणम् ? | १४३ | २० |
| रक्तस्त्वमिति पद्येऽलङ्कारद्वयसङ्कर इति सङ्करवादिमतम् | १४४ | ४ |
| ,, ,, अलङ्काराणां संसृष्टिरिति संसृष्टिवादिमतम् | ,, | ,, |
| संसृष्टिवादिमतेऽलङ्कारान्तरसङ्करे दोषप्रतिपादनम् | ,, | ,, |
| श्लेषोपमाव्यतिरिक्तस्य व्यतिरेकस्य किमुदाहरणम् ? (नो) | १४५ | ३ |
| सङ्करवादिनो मतं प्रदर्श्य संसृष्टिवादिना प्रकारेण केन खण्डितम् ? | १४६ | ८ |
| श्लेषरहितोपमागर्भव्यतिरेकस्य किमुदाहरणम् ? (आ) | १४६ | २५ |
| नातिनिर्वर्णैषितायाः किमुदाहरणम् ? (लो) | १४८ | १२ |
| निर्व्योढुमिष्टस्यापि अलङ्कारस्य अङ्गत्वेन प्रत्यवेक्षणस्य | | |

| विषयाः | पृ० | पं० |
|---|---|---|
| किमुदाहरणम् ? ( श्या ) | १४९ | १८ |
| अलङ्कारविनिवेशने समीक्षाप्रकारातिक्रमे को दोषः ? | १५० | १७ |
| समीक्षाप्रकारप्रदर्शितदिशा सम्यगनुरतः कवेरेवात्मपदलाभ इति प्रतिपादनम् । | १५० | २५ |
| अनुरणनप्रख्यस्य विवक्षितान्यपरवाच्यस्य ध्वनेः के भेदाः ? | १५१ का | २० |
| शब्दशक्त्युद्भवस्य ध्वनेः किं लक्षणम् ? | १५१ का० | २१ |
| वस्तुद्वये प्रकाश्यमाने श्लेषस्य किमुदाहरणम् ? ( ये ) | १५२ | १८ |
| ( प्रकाशिकायां ) शब्दशक्त्युद्भवध्वनेः श्लेषालङ्कारात् को भेदः ? | १५३ | ११ |
| ( ,, ) वाक्यपदीयोक्ता अभिधानियामकाः संयोगादयः के ? | १५३ | ५ |
| श्लेषविषयः कः ? ( मूले ) | १५५ | २० |
| ध्वनेर्विषयः कः ? ( ,, ) | १५५ | २१ |
| शब्दशक्त्या साक्षादलङ्कारप्रतिभायाः किमुदाहरणम् ? | १५६ | १४ |
| तस्या विनापि हारेणेति पद्ये ध्वनिरस्ति न वा ? अस्ति चेत् कथं ? नास्ति चेत् कोऽत्रालङ्कारः ? | १५६ | २६ |
| श्लाघ्याशेषतनुमिति पद्ये श्लेषस्य विषयः आहोस्विद् ध्वनेर्विषयः ? | १५७ | ९ |
| "भ्रमिमरतिमलसहृदयताम्" "चमहिभ्रमाण मानस" श्लोकयोरनयोर्ध्वनेर्विषयोऽस्ति न वा ? नास्ति चेत् कोऽलङ्कारः ? | १५८ | ५ |
| दृष्ट्या केशवगोपरागहृतपद्यं कस्योदाहरणम् ? अत्र ध्वनिरस्ति न वा ? नास्ति चेत् कोऽत्रालङ्कारः ? | १५९ | २६ |
| "अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः" कोऽत्र ध्वनिः ? अत्र श्लेषस्य कथन्न विषयः ? | १६१ | १४ |
| "उन्नतः प्रोल्लसद्धारः" "दत्तानन्दाः प्रजानाम्" अनयोः श्लेषस्य सत्वे कथं ध्वनेर्विषयः ? | १६४ | १ |
| शब्दशक्तिमूलानुस्वानरूपस्य विरोधालङ्कारस्य किमुदाहरणम् ? | १६४ | २२ |
| "यत्र च मत्तमातङ्गगामिन्यः" गद्येऽस्मिन् विरोधस्य सत्वे कथं परिहारः ? ( प्रकाशिकायाम् ) | १६५ | |

| विषयः | पृ० | पं० |
| --- | --- | --- |
| विरोधालङ्कारस्य विषयवर्णनम् | १६७ | २ |
| "समवाय इव विरोधिनां पदार्थानाम्" "सर्वैकशरणम्" अंशद्वयं कस्योदाहरणम् ? ध्वनेरलङ्कारस्य वा ? | १६७ | १० |
| "खं येऽत्युज्ज्वलयन्ति" इति पद्यं कस्यालङ्कारध्वनेरुदाहरणम् ? | १६८ | २४ |
| अर्थशक्त्युद्भवध्वनेर्लक्षणं किम् ? | १७० का० | २२ |
| अर्थशक्त्युद्भवध्वनेः किमुदाहरणम् | १७० | २६ |
| "सङ्केतकालमनसम्" पद्येऽस्मिन् कुतो नार्थशक्त्युद्भवध्वनेर्विषयः ? | १७२ | १४ |
| शब्दार्थशक्त्याऽऽक्षिप्तस्य व्यङ्ग्यार्थस्य सत्वेऽपि कुतो न ध्वनेर्विषयः ? | १७२ | २३ |
| शब्दशक्त्याऽऽक्षिप्तस्य ध्वनेः किमुदाहरणम् ? | १७३ | ६ |
| अर्थशक्त्याऽऽक्षिप्तस्य ध्वनेः किमुदाहरणम् | १७४ | २२ |
| उभयशक्त्याऽऽक्षिप्तस्य ध्वनेः किमुदाहरणम् ? | १७५ | २५ |
| अर्थशक्त्युद्भवानुरणरूपो ध्वनिः कतिविधः ? | १७६ का० | २४ |
| कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्य किमुदाहरणम् ? | १७६ | १२ |
| कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्य किमुदाहरणम् | १७७ | ९ |
| स्वतः सम्भविनो वस्तुव्यङ्ग्यस्य किमुदाहरणम् ? | १७८ | ८ |
| अर्थशक्त्युद्भवध्वनिः कतिविधः ? के च ते ? | १७९ | ५ |
| अनुस्वानोपमव्यङ्ग्यस्यान्यो यदि कोऽपि प्रकारस्तदा कः कीदृक् च ? | १७९ | ७ |
| स्वतः सम्भविनोऽलङ्कारव्यङ्ग्यायालङ्कारध्वनेः प्रविरलविषयमाशङ्क्य तद्विषयप्रदर्शनम् | १८० | १ |
| दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि कुतो न ध्वनिव्यपदेशः ? | १८१ | ६ |
| "चन्दमऊएहि णिसा" इति पद्ये कुतो न ध्वनिसम्भवः ? | " | " |
| कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यस्य रूपक- | १८२ | १२ |
| ध्वनेः किमुदाहरणम् ? ( प्रा ) ( ला ) | १८३ | १४ |
| उपमाध्वनेः किमुदाहरणम् ? वी० तं० | १८४ | १२ |
| आक्षेपध्वनेः किमुदाहरणम् ? ( स० ) | १८५ | १४ |
| अर्थान्तरन्यासध्वनिः कतिविधः ? के च ते ? | १८६ | ८ |
| शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्यार्थान्तरन्यासध्वनेः | | |

| विषयाः | पृ० | पं० |
|---|---|---|
| किमुदाहरणम् ? ( दे ) | १८६ | ११ |
| अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्यार्थान्तरध्वने किमुदाहरणम् ( हि ) न्यास | १८७ | २ |
| व्यतिरेकध्वनिः कतिविधः ? के च ते ? | १८७ | २३ |
| शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य व्यतिरेकध्वनेः किमुदाहरणम् ? ( खं ) | १८८ | २४ |
| अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्य व्यतिरेकध्वनेः किमुदाहरणम् ? ( जा ) | १८७ | २४ |
| उत्प्रेक्षाध्वनेः किमुदाहरणम् ( च ) | १८८ | २० |
| उत्प्रेक्षाप्रतीतेरुदाहरणद्वयम् । | १८६ | १० |
| श्लेषध्वनेः किमुदाहरणम् ? ( र ) | १६० | १६ |
| यथासंख्यध्वने किमुदाहरणम् ? ( अ ) | १६१ | १० |
| कीदृशोऽलङ्कारो ध्वनेरङ्गी भवति ? | १६२ | ६ |
| अलङ्काराणां ध्वन्यङ्गत्वे कतिविधः प्रकारः ? | १६२ | १६ |
| अलङ्काराणां ध्वन्यङ्गित्वे कतिविधः प्रकारः ? | १९२ | २२ |
| अलङ्काराणां व्यङ्ग्यत्वे कथं ध्वन्यङ्गता ? | १९३ | ३ |
| अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्विषयनिरूपणम् | १६४ | ७ |
| ध्वनिकारमते ध्वनयः कति ? के च ते ? | १६४ | १४ |
| ध्वनिभेदाः कति ? के च ते ? | ,, | ,, |
| प्रतीयमानभेदस्य द्वैविध्येऽपि स्फुटाऽस्फुटभेदाभ्यां पुनर्द्वैविध्ये तयोः को विषयः ? किञ्च तदुदाहरणम ? | १९५ | २० |
| वाच्यस्य व्यङ्ग्यापेक्षया चारुत्वोत्कर्षप्रतीतौ प्राधान्येऽपि कुतो न ध्वनेर्विषयत्वम् ? सोदाहरणं तत्प्रतिपादयत | १६६ | २० |
| वाच्यार्थस्यापि ध्वनेर्विषयत्वं सकारणं सोदाहरणञ्च प्रदर्श्यताम् ? | १९७ | १५ |
| अन्ते पुनरपि कारिकाद्वयेन भक्तेर्ध्वनेर्विषयत्वाभावं प्रदर्शयति । | १९९ | ४ |
| टीकाकर्तुः परिचयस्तद्वंशवर्णनञ्च । | २०० | ३ |


—❀—

श्रीमदानन्दवर्धनाचार्य्यप्रणीतो

# ध्वन्यालोकः

श्रोत्रियप्रवरपण्डितश्र्यलखदेवशर्म्मप्रणीतया प्रकाशिकाख्यव्याख्यया
हिन्दीभाषया च समुल्लसितः ।

## प्रथम उद्योतः ।

स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥

### * प्रकाशिका *

हेरम्बमम्ब ! वन्दे, त्वत्पुत्रं सर्व्वविघ्नशान्त्यर्थम् ॥
त्वामपि ततः सुवन्दे, स्वीयाभीष्टार्थसिद्ध्यर्थम् ॥१॥
ध्वनिकारसारसर्वस्वारस्यज्ञानक्लेशनाशाय ॥
व्याख्यां प्रकाशिकाख्यां, विदधाति श्रोत्रियो ह्यलखदेवः ॥२॥

अन्वयः—स्वेच्छाकेसरिणः, मधुरिपोः स्वच्छस्वच्छायायासितेन्दवः, प्रपन्नार्तिच्छिदः नखाः वः, त्रायन्ताम् ॥१॥

अथ तत्रभवान् निरवद्यविद्याविद्योतमान-विद्वन्निकरनिकषायमाण-महाकविपरिकरकुमुदाकरराकानिकरः श्रीराजानकानन्दवर्धनाचार्य्यो ध्वनिप्रबन्धं व्याख्यातुमिच्छुः शिष्टाचारपरम्पराप्राप्तमगण्यालङ्कारिकवरेण्यसञ्चरणपूतीकृतस्मृतिशासनानुमतं ग्रन्थारम्भपरिसमाप्तिप्रतिबन्धकप्रत्यूहव्यूहविध्वंसहेतुकमाशीर्वादात्मकं मङ्गलं "मन्मङ्गलं दृष्ट्वा शिष्या अप्येवं कुर्य्युरिति शिष्यशिक्षायै निबध्नाति—स्वेच्छेति । स्वेच्छाकेसरिणः = स्वेच्छया = यदृच्छया, न कर्मपारतन्त्र्येण नैवान्यदीयेच्छयेत्यर्थः । केसरिणः = स्वीकृतनरसिंहरूपस्य, मधुरिपोः = विष्णोः । स्वच्छस्वच्छायायासितेन्दवः = स्वच्छेन = स्वच्छतागुणेन, स्वच्छायया च = निजकान्त्या च आयासितः = खेदं प्रापितः इन्दुश्चन्द्रो यैस्ते तथोक्ताः । प्रपन्नार्तिच्छिदः = प्रपन्नानाम् = दुःखिता-

नाम् प्रह्लादादिभक्तानाम् आर्तिं पीडां छिन्दन्ति ये ते तथोक्ताः। नखाः, वः = युष्मान् व्याख्यातृश्रोतॄन् त्रायन्ताम् = रक्षन्तु। न चेदं पद्यं "निजस्वात्मादिशब्दानां प्रधानक्रियाकर्त्रन्वयित्वम्" इति व्युत्पत्तिविरोधादभवन्मतसम्बन्धाख्यदोषदूषितत्वेन कवेः कवित्वशक्तौ लाघवकरमिति वाच्यम्। स्वेच्छाशब्दस्य विलक्षणार्थप्रतिपादकत्वेन तद्दोषनिराकरणसम्भवात्। स्वच्छायेत्यत्र छायाशब्दस्य कान्त्यर्थपरत्वेन "छाया-बाहुल्ये" इति पाणिनिसूत्रस्याप्राप्तिः। नखानां स्वच्छेत्यादिविशेषणदानेनार्थशक्त्य-नुरणनमूलेन ध्वनिना बालचन्द्रत्वं ध्वन्यते। इन्दोरायासवर्णनेन नखसन्निकटे चन्द्र-मसो विच्छायत्वप्रतीतिर्हृद्यत्वाभावप्रतीतिश्च ध्वन्यते। नरहरिनखानामपूर्वायासका-रित्वस्य सुप्रसिद्धत्वेन नखगतस्वच्छताकौटिल्ययोर्दर्शनाद् बालचन्द्रस्य स्वात्मनि खेदानुभवप्रतीतित्वेन च स्वच्छेत्यदिविशेषणदानस्य पूर्णसार्थक्यम्। नखचन्द्रयोः स्वच्छत्वकौटिल्ययोगे तुल्येऽपि प्रपन्नार्तिच्छिदा पाटवं नखेष्वेव नैव चन्द्रमसि इति व्यतिरेकालङ्कारो ध्वन्यते। पूर्वमेक एव चन्द्रो लोकोत्तरवैशद्यहृद्याकारयोगान्निखिल-जनप्रेमभाजनम्, नरहरिनखेषु च दशबालचन्द्राकारदर्शनेन समस्तार्तिच्छेदकौशल्य-दर्शनेन च नखा एव समस्तजनाभिलषणीयत्वभाजनम् बहुमानास्पदञ्चेति चन्द्रमसो दुःखदविषय इति कवेरुत्प्रेक्षणात् उत्प्रेक्षालङ्कारोऽपह्नुत्यलङ्कारश्चापि ध्वन्येते नित्योद्योग-शालिनि भगवत्यपूर्वोत्साहदर्शनेन च वीररसोऽपि ध्वन्यते। इत्थञ्च वस्त्वलङ्काररस-भेदेन पद्येऽस्मिन् त्रिधा ध्वनिः अनुष्टुब्वृत्तञ्चात्र ॥१॥

ग्रन्थकार ग्रन्थ के आदि में आशीर्वादात्मक मङ्गल लिखते हैं—

अपनी इच्छासे नृसिंह रूप धारण करनेवाले भगवान् के स्वच्छता गुण से और अपनी कान्ति से चन्द्रमा को भी जीते हुए, दुखियों के दुःख को हरण करने-वाले नखसमूह तुम लोगों की रक्षा करें ॥१॥

"सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनम्। विनानुबन्धान् ग्रन्थादौ मङ्गलञ्च निरर्थकम्" इत्यभियुक्तोक्त्या प्रधानतया स्वरूपस्याप्रधानतया च प्रयोजनप्रयोजनस्य तत्सम्बन्धस्य प्रयोजनस्य वर्णनावश्यकत्वेनानुबन्धान् प्रदर्शयन् प्रथमं ध्वनिस्वरूपं निरूपयति—काव्यस्यात्मेति।

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।

केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥१॥

अन्वयः—बुधैः, काव्यस्य, आत्मा, ध्वनिः, इति, यः, समाम्नातपूर्वः, तस्य, अपरे, अभावम्, जगदुः, अन्ये, तं, भाक्तम्, आहुः, केचित्, तदीयम्, तत्त्वम्, वाचाम्, अविषये, स्थितम्, ऊचुः, तेन, सहृदयमनःप्रीतये, तत्स्वरूपम्, (वयम्) ब्रूमः ॥१॥

बुधैः = विश्चिद्भिः, काव्यस्य = शब्दार्थस्य, आत्मा = प्रधानम्, ध्वनिः, इति = एवम्, यः, समाम्नातपूर्वः = पूर्वं समाम्नातः सम्यक् आख्यात इति समाम्नातपूर्वः, तस्य = ध्वनेः, अपरे = अन्ये आचार्य्याः, अभावम् = असत्ताम्, जगदुः = ऊचुः। अन्ये = अपरे चाचार्याः, तम् = ध्वनिम्, भाक्तम् = भज्यते सेव्यते बुधैः प्रसिद्धतया उद्घोष्यत इति भक्तिस्तत आगत इति भाक्तस्तम्, भाक्तं गौणम्, आहुः = ऊचुः। केचित् = केचनाचार्य्याः, तदीयम् = तस्य ध्वनेरिदं तदीयम्, तत्वम् = वस्तु, वाचाम् अविषये = वाग्विषयाभावे, स्थितम् वक्तुमशक्यमित्यर्थः, ऊचुः = कथयामासुः। तेन = हेतुना, सहृदयमनःप्रीतये = सहृदयमनःसन्तुष्ट्यै, तत्स्वरूपम् = ध्वनिस्वरूपम्, (वयम्) ब्रूमः = कथयामः ॥१॥

काव्यमर्मज्ञ विद्वानों ने काव्य की आत्मा जिस ध्वनि को बतलाया है उस ध्वनि का अभाव किसी ने कहा है। किसी ने उस ध्वनि को भाक्त (गौण) माना है। किसी ने ध्वनि के तत्त्व को अवक्तव्य ही बतलाया है। इन कारणों से सज्जनों के हृदय-सन्तोषार्थ ध्वनि का स्वरूप मैं बतलाता हूँ।

बुधैः काव्यतत्त्वविद्भिः, काव्यस्यात्मा ध्वनिरिति संज्ञितः, परम्परया यः समाम्नातः, तस्य सहृदयजनमनःप्रकाशमानस्यात्यभावमन्ये जगदुः।

वृत्तिकारो वैशद्येन कारिकाव्याख्यातुं प्रारभते—बुधैरिति। बुधैरित्यस्य व्याख्यानं काव्यतत्त्वविद्भिरिति काव्यसमालोचनमर्मज्ञैरित्यर्थः। एकस्य कदाचिद्भ्रमसम्भवादेव बुधैरिति बहुवचनान्तप्रयोगः। काव्यस्य = हृदयाह्लादकारिशब्दार्थमयस्य, आत्मा = प्रधानम्, ध्वनिः = ध्वन्यते-वाच्यार्थादधिकचमत्कारित्वेन प्रतीयते यः स ध्वनिः। इति = एवं संज्ञितः = ध्वनिरिति संज्ञां प्रापितः, परम्परया = निरन्तरविद्वज्जननिर्दिष्टप्रवाहेण, यः, समाम्नातः = सम्यक् प्रकटितः तस्य = ध्वनेः, सहृदय-

जनमनःप्रकाशमानस्यापि = काव्यार्थतत्त्वविद्विद्वज्जनहृदयविराजमानस्यापि, अभावम् = असत्ताम्, अन्ये = अपरे, जगदुः = ऊचुः ।

**तदभाववादिनां चामी विकल्पाः सम्भवन्ति ।**

**(क) तत्र केचिदाचक्षीरन्—शब्दार्थशरीरं तावत्काव्यम् । तस्य च शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव । अर्थगताश्चोपमादयः । वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते । तदनतिरिक्तवृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम् । रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ।**

यद् वस्तु सर्वथाऽसम्भवि तद् वस्तुखण्डनस्य नितरामयुक्तत्वेन ध्वन्यभाववादिनां सम्मतपक्षत्रयस्य सम्भावनां वर्णयितुं प्रारभते—तदभाववादिनामिति । तदभाववादिनाम् = ध्वन्यभाववादिनाम्, अमी च = वक्ष्यमाणाश्च, विकल्पाः = वाग्विकल्पाः, सम्भवन्ति = सम्भावनामात्रविषया भवन्तीत्यर्थः ।

(क) तत्र प्रथमं पक्षमुपपादयितुं प्रक्रमते—तत्र केचिदिति । तत्र = ध्वन्यभाववादिषु, केचित्, आद्याः, आचक्षीरन् = ब्रूयुः, अत्र सम्भावनायां लिङ् अत एव तदीयपक्षाणां सम्भावनामात्रं न तु तत्पक्षा यथार्थतः सन्तीति सम्भावनालिङा द्योत्यते । शब्दश्च अर्थश्च शब्दार्थौ तावेव शरीरं यस्य तत् शब्दार्थशरीरम्, तावत् = सिद्धान्तितम्, काव्यम् = काव्यलक्षणम्, तस्य = काव्यस्य, शब्दगताः = शब्दनिष्ठाः, चारुत्वहेतवः = सौन्दर्यकारणानि, अनुप्रासादयः = यमकादयः, प्रसिद्धा एव = नैव नूतना इत्यर्थः । च = पुनः, अर्थगताः = वाच्यनिष्ठाः, उपमादयः = अर्थालङ्काराश्च प्रसिद्धा एवेति शेषः । वर्णसंघटनाधर्माश्च = वर्णानां सार्थकनिरर्थकाक्षराणां संघटनाधर्माः विन्यासधर्माः ये माधुर्यादयः = माधुर्यौजःप्रसादाख्याः, तेऽपि, प्रतीयन्ते = उपलभ्यन्ते सर्वैरिति शेषः । तदनतिरिक्तवृत्तयः = ताभ्यः संघटनाभ्यः अनतिरिक्ताः न अतिरिक्ता अनतिरिक्ता अभिन्ना इति यावत् वृत्तिर्व्यापारो यासां तास्तथोक्ताः, अपि, उपनागरिकाद्याः = "माधुर्यव्यञ्जकैर्वर्णैरुपनागरिको"च्यते । "ओजःप्रकाशकैस्तैस्तु परुषा कोमलापरै"रिति मम्मटोक्त्या, उपनागरिकावृत्तिः, परुषावृत्तिः, कोमलावृत्तिश्चेति त्रिविधा वृत्तयः, याः, कैश्चित् विद्वद्भिः, काश्चिदिति

पाठे तु वृत्तिविशेषणम्। प्रकाशिताः = प्रकाशं नीताः। ता अपि श्रवणगोचरं गताः = कर्णाकर्णिश्रुताः, रीतयश्च वैदर्भीप्रभृतयः—

अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते।
ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः॥
समासबहुला गौडी, वर्णैः शेषैः पुनर्द्वयोः।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥
लाटी तु रीतिर्वैदर्भी पाञ्चाल्योरन्तरे स्थिता।

इत्युक्तलक्षणा विश्वनाथसम्मताः चतस्रो वृत्तयोऽपि स्थिता एव। तद्व्यतिरिक्तः = तेभ्यः प्रोक्तालङ्कारादिभ्यः व्यतिरिक्तो विभिन्नः, कोऽयं = नूतनः, ध्वनिर्नाम = न कोऽपीत्यर्थः। अयं ध्वनिश्चेत् वास्तवपक्षेऽभविष्यत्तदा बुधैरवश्यमेवास्थापिष्यतातो नास्त्येव ध्वनिरिति ध्वन्यभाववादिनां प्रथमविकल्पस्य सारांशः।

अभाववादियों के बहुत से विकल्प ( पक्ष ) हैं उनमें से प्रथमपक्षवादी किसी ने कहा है—कि शब्दार्थ ही को काव्य कहते हैं उसमें शब्द में रहनेवाले सौन्दर्य के कारण अनुप्रासादि अलङ्कार प्रसिद्ध ही हैं और अर्थ में रहनेवाले उपमादि अलङ्कार भी प्रसिद्ध हैं। वर्णों तथा शब्दों के धर्म माधुर्य्य वगैरह गुण भी प्रतीत होते हैं। उन गुणों से अभिन्न उपनागरिका आदि वृत्तियों को जो भट्टोद्भट ने माना है वे भी विश्रुत ही हैं। वैदर्भी प्रभृति ( वगैरह ) रीतियाँ भी प्रसिद्ध ही हैं उन सबों से पृथक् कौनसा ध्वनि है ?।

अन्ये ब्रूयुः—नास्त्येव ध्वनिः। प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः। सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति।

न च तत्समयान्तःपातिनः सहृदयान् कांश्चित्परिकल्पिततत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते।

ध्वन्यभाववादिनां द्वितीयपक्षमुद्भावयति—अन्ये ब्रूयुरिति। अन्ये = अपरे च ( इत्थं ) ब्रूयुः ध्वनिस्तु नास्त्येवेति। प्रसिद्धप्रस्थानव्यतिरेकिणः = प्रसिद्धं यत् प्रस्थानं = प्रतिष्ठन्ते परम्परया विहरन्ति येन मार्गेण तत् प्रस्थानम्, शब्दार्थौ तद्गुणालङ्काराश्च, इति प्राचीनपद्धतिः, तस्माद् व्यतिरेकिणो विभिन्नस्य, काव्य-

प्रकारस्य=काव्यभेदस्य, काव्यत्वहानेः=काव्यत्वाभावात्, ध्वनेरभाव एवेति तदभाववादिनां द्वितीयपक्षस्याभिप्रायः।

"स्वीयपक्षपुष्ट्यर्थं प्रथमं काव्यलक्षणं" प्रदर्श्य तत्समन्वयं कर्तुं प्रारभते—सहृदयेति। सहृदयजनानां हृदयस्याह्लादिनौ यौ शब्दार्थौ तन्मयं काव्यम्, तस्य भावस्तत्त्वमेव काव्यलक्षणम्।

प्रोक्तकाव्यलक्षणस्य समन्वयाभावं प्रदर्शयति—न चेत्यादि सन्दर्भद्वयेन। तत्=काव्यलक्षणम्, उक्तप्रस्थानातिरेकिणः=प्रोक्तालङ्कारादिभिन्नस्य, मार्गस्य=अध्वनः, न च =नैव, सम्भवति=समन्वेति, सहृदयहृदयाह्लादकशब्दार्थाभावात् ध्वनौ काव्यत्वं नास्तीति भावः।

ननु केषाञ्चित्सहृदयानां ध्वनेराह्लादोत्पादनात् कथं ध्वनौ पूर्वोक्तकाव्यलक्षणसमन्वयो न सङ्गच्छत इत्याह—न च तत्समयेति। तत्समयान्तःपातिनः=तस्य ध्वनेः यः समयः सिद्धान्तस्तस्य अन्तः पतितुं शीलं येषान्ते, तथोक्तान् ध्वनिसिद्धान्तपक्षपातिन इत्यर्थः। कांश्चित्=अज्ञातनाम्नः, सहृदयान् ( मूले "कांश्चित्परिकल्पिततत्प्रसिद्ध्या" इति पाठस्तु न समीचीनः कांश्चिदिति द्वितीयान्तस्यासङ्गत्यापत्तेः ) अतः "कांश्चित् परिकल्प्य तत्प्रसिद्ध्या" इत्येव पाठः साधीयान्। एतत्पाठे तु—परिकल्प्य=स्वीयपक्षपुष्ट्यर्थं सहृदयान् मत्वेत्यर्थः। तत्प्रसिद्ध्या=तेषां निजपक्षपरिपोषकसहृदयानां प्रसिद्ध्या प्रख्यात्या, ध्वनौ, काव्यव्यपदेशः=काव्यव्यवहारः, प्रवर्तितोऽपि प्रचारं प्रापितोऽपि, सकलविद्वन्मनोग्राहिताम्=निखिलविद्वज्जानहृदयाकर्षिताम्, न च=नह्येव, अवलम्बते=आश्रयति। कस्याप्येकस्य मनोऽनुकूलत्वेऽपि सर्व्वेषां मनोऽनुकूलत्वं न भवति विशेषचमत्कृतिजनकत्वाभावात् इति ध्वन्यभाववादिनां द्वितीयपक्षस्य सारांशः।

अभाववादियों का द्वितीय पक्ष यह है कि—प्राचीन पद्धति से अतिरिक्त किसी दूसरे प्रकार का काव्य काव्य नहीं है इसलिये ध्वनिकाव्य पृथक् नहीं है क्योंकि सज्जनों के हृदय को प्रसन्न करने वाला शब्दार्थ ही काव्य का लक्षण है, वह उक्त प्रस्थान अर्थात् अलङ्कार गुण वृत्ति और रीति से अन्य मार्ग (तरीके) का सम्भव नहीं है। यदि ध्वनि के सिद्धान्त पक्षपाती किन्हीं सज्जनों को लेकर ध्वनिकाव्य बलात् घोषित भी है तो क्या सभी विद्वानों के मनोग्राही हो सकता है ? कदापि नहीं।

**पुनरपरे तस्याभावमन्यथा कथयेयुः—न सम्भवत्येव ध्वनिर्नामापूर्वः कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात्। तेषामन्यतमस्यैव वाऽपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्।**

चारुत्वहेतोरपि, शब्दार्थगुणालङ्कारान्तर्भूतस्यापि तस्य ध्वनिरिति नूतननामकरणं सर्वथाऽसङ्गतमित्यभिप्रायेण तृतीयाभाववादमुपस्थापयति—**पुनरपरे तस्येत्यादिना**। अपरे = अन्ये, पुनः = च, तस्य = ध्वनेः,अभावम् = असत्ताम्, अन्यथा = अन्येन प्रकारेण, कथयेयुः = वक्तुं प्रारभेरन्, कश्चित् = कोऽपि, ध्वनिः नाम, अपूर्वः = प्रसिद्धप्रस्थानाद् विलक्षणः, न = नैव सम्भवति। एवकारस्य निषेधार्थक नञ्शब्देऽन्वयो योज्यः।

कामनीयकम् = कमनीयस्य कर्म, चारुत्वहेतुताम्, अनतिवर्तमानस्य = अनतिक्रममाणस्य, तस्य = ध्वनेः, उक्तेष्वेव = कथितेष्वेव, चारुत्वहेतुषु = अलङ्कारादिषु, अन्तर्भावात् = सन्निवेशात्। उक्तालङ्कारादिषु सत्सु तदपेक्षया समधिकचमत्कृत्यकरणात् तेष्वेव ध्वनेरन्तर्भावसत्वे पृथक्-ध्वनेः सम्भव एव नेति तत्तात्पर्य्यम्।

ननु प्रसिद्धया ध्वनेः सर्वथाऽपलापः कर्तुमशक्य इत्याशङ्कां परिहरति—**तेषामित्यादिना**। वा = अथवा, तेषाम्=अलङ्कारादीनाम्, अन्यतमस्य = कस्याप्येकस्य, एव, नान्यस्येति भावः। अपूर्वसमाख्यामात्रकरणे=ध्वनिरित्यपूर्वनाममात्रकरणे सतीति शेषः, यत्किञ्चनकथनम् = निष्फलकथनं, स्यात् = भवेत्। ध्वनिरिति नामकरणे चेद्विशेषस्पृहा तदाऽलङ्कारादीनामेव कस्याप्येकस्य मन्यतां ध्वनिनाम एतावता तु नापूर्वध्वनिपक्षसिद्धिरित्येतत्प्रघट्टकस्य सारांशः।

अभाववादियों का तृतीय पक्ष यह है—

किसी ने ध्वनि का अभाव और ही प्रकार से बतलाया है—कि सौन्दर्य्य सम्पादक ध्वनिका अत्यन्त चमत्कृति के कारण कहे हुए अलङ्कारादि में ही अन्तर्भाव होने के कारण अपूर्व ध्वनि कोई पदार्थ नहीं है। उन सबों में से यदि किसी एक का अपूर्व ध्वनि नाम रखलें तो अनर्गल ( अण्ट सण्ट ) कथन हो जायगा।

**किञ्च वाग्विकल्पानामानन्त्यात् सम्भवत्यपि वा कस्मिंश्चित्काव्य-**

लक्षणविधायिभिः प्रसिद्धैरप्रदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति तदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते ।

तत्र हेतुं न विद्मः । सहस्रशो हि महात्मभिरन्यैरलङ्कारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च । न च तेषामेषा दशा श्रूयते । तस्मात्प्रवादमात्रं ध्वनिः । न त्वस्य क्षोदक्षमं तत्त्वं किञ्चिदपि प्रकाशयितुं शक्यम् ।

ध्वनिं स्वीकृत्य खण्डयति—किञ्चेत्यादिना । किञ्च = पुनः वाग्विकल्पानाम् = वक्तीति वाक् शब्दः, उच्यत इति वाक् अर्थः, उच्यतेऽनयेति वाक् अभिधाव्यापारः, इति वाचः, विकल्पानाम् = शब्दार्थवैचित्र्यप्रकाराणाम्, आनन्त्यात् = असंख्येयत्वात्, कस्मिँश्चित् = असंख्येये सम्भवत्यपि = सम्भवविषयेऽपि, प्रकारलेशे = ध्वनेः सूक्ष्मभेदे, प्रसिद्धैः = प्रख्यातैरुद्भटादिभिः, काव्यलक्षणविधायिभिः = काव्यलक्षणकारिभिः, अदर्शिते = अनुपदिष्टे, ध्वनिर्ध्वनिरिति, उक्त्वा इति शेषः, तदलीकसहृदयत्वभावनामुकुलितलोचनैः = अलीकया मिथ्याभूतया सहृदयत्वस्य भावनया सम्भावनया मुकुलितानि सङ्कोचितानि लोचनानि नेत्राणि यैस्तैः नृत्यते, अक्षिसङ्कोचं विधाय नर्तनं तैः क्रियत इति भावः ।

तत्र = नृत्ये, हेतुं = कारणं, न, विद्मः = न जानीमः । हि = यतः अन्यैः महात्मभिः = भामहदण्डिप्रभृतिभिः, सहस्रशः = सहस्रसंख्याकाः, अलङ्कारप्रकाराः = अलङ्कारभेदाः, प्रकाशिताः = प्रकटिताः, प्रकाश्यन्ते च = इदानीं प्रकट्यन्ते च । तेषाम् = प्रकाशकानाम्, एषा दशा नर्तनदशेत्यर्थः । अथवा तेषाम् = अलङ्कारादीनाम्, एषा दशा = अप्रसिद्धिरूपा, न श्रूयते = नाकर्ण्यते । तस्मात् = कारणात् सर्वथाऽप्रसिद्धत्वात्, ध्वनिः = ध्वनिसत्ता, प्रवादमात्रम् = निरर्थकोद्घोषणम् । न तु, = नहि, अस्य = ध्वनेः, क्षोदक्षमं = वादिप्रतिवादिनिर्णयद्वारा विचारार्हम्, तत्त्वं = सारम्, किञ्चिदपि = किमपि, प्रकाशयितुम् = द्योतयितुं, शक्यम् ।

शब्दार्थों के अनन्त होने के कारण ध्वनि का सम्भव होने पर भी प्रसिद्ध काव्य लक्षण बतलानेवालों से यदि ध्वनि का प्रकार नहीं बतलाया गया है तब आँख मूँदकर ध्वनि ध्वनि कह कर नाचने में कोई कारण नहीं पता चलता । हजारों अन्य अन्य भामह दण्डि वगैरह कवियों से ध्वनि के प्रकार बतलाये गये हैं

और बंतलाये जा रहे हैं लेकिन उन लोगों की दशा इस प्रकार नहीं सुनी जाती है। इसलिये ध्वनि केवल प्रवादमात्र है उसका निष्कृष्ट तत्त्व कुछ नहीं है।

तथा चान्येन कृत एवाऽत्र श्लोकः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति,
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत्।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो,
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः॥

अन्वयः—यस्मिन्, मनःप्रह्लादि, सालंकृति, किञ्चन, वस्तु, न, अस्ति, यत् व्युत्पन्नैः, वचनैः, च, नैव, रचितं, वक्रोक्तिशून्यं, च, तत्, काव्यं, ध्वनिना, समन्वितम्, इति प्रीत्या, प्रशंसन्, जडः सुमतिना, ध्वनेः, स्वरूपं, पृष्टः, किम्, अभिदधाति, नो विद्मः।

ध्वन्यभाववादिनां मूर्खतां वर्णयितुं केषाञ्चित् पद्यमुदाहरति—तथा चेत्यादिना—तथा च, अन्येन=तत्सामयिकेन कविना, कृत एव=निर्मित एव, श्लोकः—यस्मिन्नित्यादि। यस्मिन्=काव्ये, मनःप्रह्लादि=चेतो हर्षकम्, सालङ्कृति=अलङ्कारसहितम्, किञ्चन=किमपि, वस्तु=तत्त्वम्, न, अस्ति, न विद्यते। यत्=काव्यम्, व्युत्पन्नैः=शब्दालङ्कारयुक्तैः वचनैः=शब्दैः, नैव =नह्येव, रचितम्=निर्मितम्, वक्रोक्तिशून्यञ्च=वक्रोक्त्या=भङ्ग्युक्त्या काव्यजीवितेनेति यावत्, शून्यम्=रहितम् तत्=काव्यम्=ध्वनिना=प्रधानीभूतव्यङ्ग्यर्थेन, समन्वितम्=युक्तम् इति=एवं, प्रीत्या=प्रेम्णा, प्रशंसन्=स्तुवन्, जडः=मूर्खः, सुमतिना=बुद्धिमता, ध्वनेः, स्वरूपं=लक्षणं, पृष्टः जिज्ञासितः, किम्=उत्तरम् अभिदधाति=कथयितुं प्रारभते, नो, (वयम्) विद्मः=जानीमः। ध्वनेः स्वरूपप्रदर्शनेऽसमर्थत्वात्तदीयं तत्त्वमपूर्वन्नास्तीति तृतीयस्य ध्वन्याभाववादस्य सारांशः।

इस विषय में किसी ने श्लोकबद्ध किया है—

जिस काव्य में मन के खुश करने वाला पदार्थ तथा अलङ्कार नहीं है, जो शब्दालङ्कार वगैरह देकर काव्य नहीं बना है और वक्रोक्ति रहित है, वह काव्य

ध्वनियुक्त है—इस प्रकार प्रशंसा करने वाला मूर्ख अच्छे लोगों से ध्वनि का स्वरूप पूछे जाने पर क्या कहेगा ? यह मैं नहीं समझता।

"भाक्तमाहुस्तमन्ये"।

अन्ये च तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः। यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक् स्पृष्ट इति परिकल्प्यैवमुक्तम्—"भाक्तमाहुस्तमन्ये" इति।

एवं ध्वन्याभाववादिनां मतत्रयं प्रकाश्य भाक्तत्ववादिनः पक्षं प्रदर्शयति—"भाक्तमाहुस्तमन्य इति"। अन्ये = लक्षणावादिनो भट्टोद्भटादयः, तम् = पूर्वोक्तम्, ध्वनिसंज्ञितं = ध्वनिनामानम्, काव्यात्मानं = काव्यजीवनाधायकम्, भाक्तमित्यस्य व्याख्यानं गुणवृत्तिरिति भज्यते सेव्यते प्रसिद्धतया उद्घोष्यते इति भक्तिः गौणीशक्तिस्तत आगतोऽर्थात् तज्ज्ञानप्रयोज्या या आरोपीयविषयता तदाश्रयो भाक्तस्तम् अर्थात् गुणवृत्तिरिति आहुरूचुरित्यर्थः। ननु तमिति द्वितीयान्तस्य विशेषणसार्थक्याय गुणवृत्तिपदे द्वितीयया भाव्यमिति चेन्न, निपातेन इतिशब्दयोगेनाभिधानात्। गुणवृत्त्यैव व्यङ्ग्यार्थस्यापि बोधसम्भवेऽलं व्यञ्जनयाऽर्थात् ध्वनिस्वीकारेणेति भाक्तत्ववादिनां भट्टोद्भटादीनामभिप्रायः।

गुणवृत्तौ ध्वनेरन्तर्भावस्य खपुष्पप्रायत्वात् तद्विवेचयति—यद्यपीत्यादिना। यद्यपि च, ध्वनिशब्दसङ्कीर्तनेन = ध्वनिशब्दस्पष्टप्रतिपादनेन, काव्यलक्षणविधायिभिः = काव्यलक्षणकारिभिः; भामहादिभिः, गुणवृत्तिः = भक्तिः, अन्यो वा कश्चित् प्रकारः = गुणालङ्कारादिः, न प्रकाशितः = नैव प्राकाश्यं नीतः तथापि, अमुख्यवृत्त्या = गौण्या वृत्त्या, काव्येषु, व्यवहारं = प्रचारं, दर्शयता = प्रकटयता भट्टोद्भटादिना, ध्वनिर्मार्गः ध्वनेः पन्थाः सिद्धान्त इति यावत्, मनाक् = ईषत्, स्पृष्टः, इति = एवं, परिकल्प्य = अनुसन्धाय, एवमुक्तम्—कारिकाकारेण भाक्तमाहुस्तमन्य इति।

लक्षणा माननेवाले भट्टोद्भट्ट ने ध्वनि को गौण इस आशय से माना है कि-यद्यपि ध्वनिशब्द कहकर काव्यलक्षणकार भामहवगैरह ने गौणीवृत्ति या गुण

अलङ्कार आदि नहीं बतलाया है तथापि कहीं कहीं काव्यों में गौण रूप से ध्वनि का मार्ग स्पष्ट है इसलिये ध्वनि को काव्यात्मा गौणरूप माना है।

केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः। तेनैवंविधासु विमतिषु स्थितासु सहृदयमनःप्रीतये तत्स्वरूपं ब्रूमः। तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिश्चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते।

ध्वनेरनिर्वचनीयत्वं प्रदर्शयितुमाह—केचिदित्यादिना। लक्षणकरणशालीनबुद्धयः = लक्षणस्य स्वरूपस्य करणे शालीना कोमला बुद्धिर्येषान्ते तथोक्ताः अव्याप्त्यतिव्याप्त्यसम्भवाख्यदोषपरिहारपूर्वकं ध्वनिलक्षणविधाने कोमलबुद्धय इत्यर्थः, केचित् आचार्य्याः, ध्वनेः = उत्तमकाव्यस्य, तत्वं = व्यङ्ग्यं स्वरूपं वा, गिरामगोचरं = वक्तुमशक्यम्, सहृदयहृदयसंवेद्यमेव = सहृदयानामेव हृदयगम्यम्, समाख्यातवन्तः = प्रोचुः। अत्रायं निष्कर्षः—ध्वनौ विवदमानाः प्रथमे विद्यमानस्यापि ध्वनेरभावं वदन्तो भ्रान्ता इव प्रतिभान्ति, मध्यमाश्च प्रधानस्यापि ध्वनेस्तत्त्वमपह्नुवाना इव संशयपथे स्थिताः, अन्तिमाश्च ध्वनेः स्वरूपं वर्णयितुमक्षमा नितरामज्ञा इति तेषां वैचित्र्यम्।

कारिकायां "तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्" इत्यंशं व्याचिख्यासुराह—तैनेवंविधासु इत्यादिना। तेन = हेतुना, एवंविधासु = ईदृशीषु, विमतिषु = विरुद्धबुद्धिषु, स्थितासु = वर्तमानासु, सहृदयमनःप्रीतये = सहृदयचेतःप्रासादाय, तत्स्वरूपं = ध्वनिस्वरूपम्, ब्रूमः = कथयामः। तस्य हि = पूर्वोक्तस्य हि, ध्वनेः, स्वरूपम्, सकलसत्कविकाव्योपनिषद्भूतम्=निखिलप्रसिद्धकविकाव्यसारभूतम्, अतिरमणीयम् = शब्दवाच्यलक्ष्यापेक्षयाऽतिमनोरमम्, अणीयसीभिः = अतिसूक्ष्माभिः चिरन्तनकाव्यलक्षणविधायिनाम् = प्राक्तनकाव्यलक्षणकारिणाम्, बुद्धिभिः = मतिभिः, अनुन्मीलितपूर्वम् = अप्रकाशितपूर्वम्, अथ च = तथा, रामायणमहाभारतप्रभृतिनि लक्ष्ये = उदाहरणे, सर्वत्र प्रसिद्धव्यवहारं = प्रख्यातव्यवहारं, लक्षणतां = लक्ष्यते

ऽनेनेति लक्ष्यो लक्षणम् । लक्ष्येण निरूपयन्ति लक्षयन्ति ये ते लक्षयन्तस्तेषाम् अर्थात् लक्षणद्वारेण निरूपयताम् । सहृदयानाम् = योऽर्थो हृदयसम्वादी तस्य भावो रसोद्भवः । "शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥" इत्यभियुक्तोक्त्या ये काव्यानुशीलनाभ्यासवशाद्विशदीभूतमनोदर्पणे वर्णनीयतन्मयीभवनयोग्यताशालिनस्त एव सहृदयास्तेषाम्, सज्जनानाम्, मनसि = चेतसि, आनन्दः = प्रहर्षः, अथवा आनन्द, आनन्दवर्धनाचार्य्यो ग्रन्थकारः । प्रतिष्ठाम् = प्रकर्षेण स्थितिम्, लभताम् = प्राप्नुताम्, इतिकारणात् प्रकाश्यते = ध्वनिस्वरूपं निर्दिश्यते ।

अत्रेदमाकूतम्—सकलशब्देन सत्कविशब्देन च ध्वनेरपूर्वत्वन्तेन च "सम्भवत्यपि कस्मिंश्चित्प्रकारलेश इत्यादिकथनस्य निराकरणम् । उपनिषद्भूतशब्देन "अपूर्वसमाख्यामात्रकरणे" इत्यादेर्निराकृतिः । अतिरमणीयमिति शब्देन । "सिंहो वटुः" "गङ्गायां घोषः" इत्यादिवद्ध्वनिव्यतिरिक्तस्याचारुत्वं प्रतीयते । अणीयसीभिरित्यनेन ध्वनेर्गुणालङ्कारादिष्वनन्तर्भावः सूच्यते । रामायणमहाभारतेत्यादिपददानेनादिकवेरपि मा निषादेत्यादिपद्ये ध्वनेरभिप्रेतत्वं व्यज्यते । आनन्दशब्देन ग्रन्थकर्तृनाम प्रतीयते । एतेन ध्वनिस्वरूपमभिधेयम्, तज्ज्ञानद्वाराऽऽनन्दप्राप्तिः प्रयोजनम्, तज्जिज्ञासुरधिकारी, साध्यसाधनभावः सम्बन्धः" इत्यनुबन्धचतुष्टयस्याभिधानम् ।

ध्वनि का लक्षण बताने में कोमल बुद्धि अर्थात् तुच्छ बुद्धिवाले किसी ने ध्वनि का तत्त्व अकथनीय तथा सज्जनों के हृदयगम्य ही बतलाया है । इस हेतु से अनेक प्रकार का विरुद्ध मत आने पर सज्जनों के मनःसन्तोषार्थ ध्वनि का स्वरूप बतलाता हूँ । उस ध्वनि का स्वरूप सभी अच्छे अच्छे कवियों के काव्य का उपनिषत् स्वरूप है और अत्यन्त मनोरम है तथा प्राचीन काव्य लक्षणकारों की अति सूक्ष्म बुद्धियों से पूर्व में अप्रकाशित है । और रामायण महाभारत वगैरह काव्यों में ध्वनि का व्यवहार पाते हुए सज्जनों के हृदय में आनन्द हो इसलिये ध्वनिका स्वरूप प्रकाशित किय ।जाता है ।

तत्र पुनर्ध्वनेर्लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—

अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥२॥

अन्वयः—सहृदयश्लाघ्यः, काव्यात्मा, यः, अर्थः, व्यवस्थितः, तस्य, वाच्यप्रतीयमानाख्यौ, उभौ, भेदौ, स्मृतौ।

तत्र ध्वनेरिति—तत्र = अनुबन्धचतुष्टये प्रदर्शिते, ध्वनेरेव, लक्षयितुमारब्धस्य = लक्षणं विधातुं प्रारब्धस्य, भूमिकाम् = भूमिरेव भूमिका ताम्, यथा प्रासादनिर्माणे पूर्वं भूमिरेव प्रसाध्यते तथा ध्वनिस्वरूपे निरूपयितव्ये निर्विवादसिद्धवाच्याभिधानरूपां भूमिकाम्, रचयितुम् = निर्मातुम्, इदम् = वक्ष्यमाणम्, उच्यते = कथ्यते।

ध्वनिं निरूपयितुं कारिकामवतारयति वृत्तिकारः—अर्थः सहृदयश्लाघ्य इति। सहृदयैः काव्यानुशीलनपरैः, श्लाघ्यः = प्रशंसनीयः, काव्यात्मा = काव्यस्य शब्दार्थमयस्य आत्मा प्रधानम्, यः, अर्थः = ध्वनिः, तस्य = ध्वनेः, वाच्यप्रतीयमानाख्यौ = एकः वाच्यः अभिधेयः, द्वितीयश्च प्रतीयमानः व्यङ्ग्यश्च तदाख्यौ, उभौ भेदौ स्मृतौ = कथितौ।

इदमत्र विवेचनीयम्—ननु कथञ्च ध्वनिरेव काव्यस्यात्मेति चेदुच्यते वाच्यव्यङ्ग्ययोस्तुल्येऽर्थरूपत्वे कथं कस्मैचिदेव सहृदयाः श्लाघन्तेऽतोऽस्ति कश्चिद्विशेषः। यश्च विशेषः स एव प्रतीयमानभागः सहृदयैः काव्यस्यात्मा गण्यते। नैव वाच्योऽर्थः काव्यस्यात्मा। अत एव कारिकायामर्थ इति एकवचनान्तस्यैव प्रयोगः कृतः सोऽप्यर्थः सहृदयश्लाघ्यत्वविशेषणद्वारा प्रतीयमान एवार्थात् ध्वनिरेव तदात्मा। अत एव तस्य द्वौ भेदौ प्रदर्शितौ, वाच्यः प्रतीयमानश्च, एकश्च विशेषविच्छित्त्यभावादेव नात्मा काव्यस्य द्वितीयश्च प्रतीयमानः विशेषविच्छित्त्याधायकत्वेनैव काव्यस्यात्मेति सारांशः।

सभी बातों के निर्णय हो जाने पर ध्वनि के ही लक्षण बतानेके लिये प्रारब्ध वस्तु की भूमि का निर्माण के लिये ग्रन्थकार कहते हैं—

सहृदयों से प्रशंसनीय जो अर्थ ध्वनि काव्य की आत्मा मानी गई है उसके दो भेद हैं एक वाच्य, दूसरा प्रतीयमान ( ध्वनि )।

काव्यस्य हि ललितोचितसंनिवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ।

'तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः, सोऽन्यैः काव्यलक्ष्मविधायिभिः॥ ३॥

ततो नेह प्रतन्यते केवलमनूद्यते पुनर्यथोपयोगमिति ।

काव्यात्मा यो व्यवस्थित इति कारिकागतं काव्यशब्दं व्याचष्टे—काव्यस्येति। ललितोचितसन्निवेशचारुणः = ललितः = गुणालङ्कारादिसुन्दरः उचितः = रसव्यञ्जनानुकूलः, यः सन्निवेशः = शब्दार्थगुम्फनम्, तेन चारुणः मनोरमस्य, काव्यस्य = शब्दार्थशरीरस्य, शरीरस्य = देहस्य, आत्मा = जीवः इव, साररूपतया = जीवनाधायकतया, सहृदयश्लाघ्यः = सहृदयप्रशंसनीयः, योऽर्थः = ध्वनिः, तस्य = ध्वनेः, वाच्यः = अभिधेयः, प्रतीयमानश्च = व्यङ्ग्योऽर्थः, इति द्वौ भेदौ ।

अन्वयः—तत्र, यः, वाच्यः, प्रसिद्धः, सः, अन्यैः, काव्यलक्ष्मविधायिभिः, बहुधा, व्याकृतः ।

प्रतीयमानस्यैवार्थस्य पुरस्कारे वाच्यार्थनिरूपणस्यानावश्यकत्वमाह—तत्र वाच्य इति कारिकया । तत्र = वाच्यप्रतीयमानयोरर्थयोर्मध्ये, यः, वाच्यः = वाच्यार्थः, प्रसिद्धः = प्रख्यातः, सः, अन्यैः = उद्भटादिभिः, काव्यलक्ष्मविधायिभिः = काव्यलक्षणकृद्भिः, उपमादिभिः प्रकारैः = उपमाद्यलङ्कारवर्णनैः, बहुधा = प्रचुरप्रकारैः, व्याकृतः = वर्णितः । प्राचीनैर्वाच्यार्थस्य पूर्णं वर्णितत्वेन पिष्टपेषणमिव नैव वाच्यार्थस्य विस्तरेण वर्णनं क्रियते किन्तु यथोपयोगं क्वचित् क्वचिदुपादीयते इत्याह—ततो नेहेति । ततः = हेतोः, इह = ग्रन्थे, न, प्रतन्यते = विस्तरेण वर्ण्यते, केवलं पुनः = वारम्वारं, यथोपयोगं = उपयोगानुकूलं अनूद्यते = वाच्यार्थस्यानुवादः क्रियते ।

उन दो भेदों में जो प्रसिद्ध वाच्य है वह उपमादि प्रकारों से अन्य काव्यलक्षणकार उद्भटादि आचार्यों के द्वारा बहुत प्रकार बतलाया गया है । इसलिये उसका विस्तृत वर्णन नहीं किया जाता है केवल उपयोगिता के अनुसार अनुवाद किया जाता है ।

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ ४ ॥

प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वाऽवयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु । यथा ह्यङ्गनासु लावण्यं

पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्वान्तरं तद्वदेव सोऽर्थः ।

व्यङ्ग्यार्थस्यैव प्राधान्यं दृष्टान्तमुखेन वर्णयति—प्रतीयमानमिति । महाकवीनाम्=प्रसिद्धकवीनाम्, वाणीषु=भारतीषु, यत् पुनः प्रतीयमानं=ध्वनिरूपं, वस्तु, अस्ति=आस्ते, तत्=वस्तु, अङ्गनासु=प्रशस्तनारीषु, प्रसिद्धावयवातिरिक्तम्=प्रसिद्धा येऽवयवाः हस्तपादादयस्तेभ्योऽतिरिक्तं भिन्नम्, लावण्यम् इव, "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति शिङ्गभूपवर्णितं, कान्तिपूरम् इव, अन्यत् एव=नतु शब्दार्थमात्रम्, विभाति=प्रकाशते ।

अन्वयः—महाकवीनां, वाणीषु, यत्, पुनः, प्रतीयमानं वस्तु, अस्ति, तत्, अङ्गनासु, लावण्यम्, इव प्रसिद्धावयवातिरिक्तम्, अन्यत्, एव, विभाति ।

कारिकां व्याचष्टे वृत्तिकारः—प्रतीयमानमित्यादिना । प्रतीयमानम्=ध्वनिरूपं, पुनः, वाच्यात्=वाच्यार्थात्, अन्यदेव, वस्तु, महाकवीनाम्=कविवराणाम्, वाणीषु=कवित्वमद्वाक्षु, अस्ति । यद्वस्तु अस्ति, तत्, वस्तु, सहृदयहृदयसुप्रसिद्धम्=सहृदयानां हृदयेषु चित्तेषु सुप्रसिद्धम्—निरन्तरप्रतीतिविषयीभूतम्, प्रसिद्धेभ्यः=प्रसिद्धिं गतेभ्यः, अलङ्कृतेभ्यः=अङ्गनापक्षे भूषणविभूषितेभ्यः, प्रतीतेभ्यः=प्रख्यातेभ्यः, अवयवेभ्यः=करचरणाद्यवयवेभ्यः, ध्वनिपक्षे तु, अलङ्कृतेभ्यः=उपमाद्यलङ्कारैरलंकृतेभ्यः, प्रतीतेभ्यः=प्रतीतिविषयीभूतेभ्यः, अवयवेभ्यः=वाच्यार्थावयवेभ्यः, व्यतिरिक्तत्वेन=पृथक्त्वेन, अङ्गनासु,लावण्यमिव (प्राग्व्याख्यातम्) प्रकाशते=प्रतिभाति । यथा हि अङ्गनासु=नारीषु, पृथक् निर्वर्ण्यमाणम्=दृश्यमानं निखिलावयवव्यतिरेकि=निखिलेभ्यः सम्पूर्णेभ्यः, अवयवेभ्यः हस्तपादादिभ्यः व्यतिरेकि विभिन्नम्, लावण्यम्=सौन्दर्य्यम्, सहृदयलोचनामृतं=लावण्यमपि, सहृदयानां लोचनस्य नेत्रस्यामृतम्, किमपि, अन्यदेव, तत्त्वान्तरं=सारवस्तु, तद्वदेव, सोऽर्थः=प्रतीयमानोऽर्थः ।

प्रतीयमान ( व्यङ्ग्य अर्थात् ध्वनि ) जो वस्तु है वह जिस प्रकार स्त्रियों में प्रसिद्ध हाथ पैर के अतिरिक्त एक दूसरा लावण्य ( सौन्दर्य्य ) मोती के समान चमकता रहता है उसी प्रकार महाकवियों की वाणी में प्रसिद्ध अलङ्कार आदि से अतिरिक्त एक दूसरा ही रहता है ।

सह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्कारा रसादयश्चेत्यनेकप्रभेदभिन्नो दर्शयिष्यते। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्त्वम्। तथा ह्याद्यस्तावत्प्रभेदो वाच्याद् दूरं विभेदवान्।

प्रतीयमानार्थस्य वाच्यात् विभिन्नत्वं प्रदर्श्य तस्य प्रकारत्रयं निर्दिशति—सह्यर्थ इत्यादिना। स हि अर्थः=व्यङ्ग्यार्थः, वाच्यसामर्थ्याक्षिप्तम्=वाच्यस्य, सामर्थ्येन, आक्षिप्तं, प्रत्यायितम्, वस्तुमात्रम्=केवलं वस्तु, ( एक प्रकारः ) अलङ्काराः वाच्यसामर्थ्याक्षिप्ता एव। द्वितीयप्रकारः। तदाक्षिप्ता रसादयश्चेति तृतीयः प्रकारः। इति=एवं,अनेकप्रभेदप्रभिन्नः=अनेकैः प्रभेदैः प्रभिन्नः, दर्शयिष्यते,-पश्चात्। सर्वेषु च=सकलेषु च, तेषु=पूर्वोक्तेषु, प्रकारेषु=भेदेषु, तस्य=ध्वनेः, वाच्यात्=अभिधेयार्थात्, अन्यत्वम्=भिन्नत्वम्। पूर्वोक्तं दर्शयति—तथा हीत्यादिना। तथा हि, आद्यः=प्रथमस्तावत् वस्तुरूपप्रभेदः, वाच्यात्=वाच्यार्थात्, दूरम्=अत्यन्तं, विभेदवान्=विभिन्नः।

वह प्रतीयमान अर्थ ( ध्वनि ) वाच्य के सामर्थ्य से आक्षिप्त होकर वस्तुध्वनि, अलङ्कारध्वनि रसादि ध्वनि अदि अनेक प्रकार के दिखलाये जायगें किन्तु सभी भेदों में वाच्यार्थ से भिन्नता रहेगी, उसमें पहला वस्तु ध्वनि तो वाच्य से बिलकुल ही भिन्न है।

सहि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः।

यथा—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥

( छाया ) भ्रम धार्मिक ! विश्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥

अन्वयः—धार्मिक ! विश्रब्धः, भ्रम, अद्य, सः, शुनकः, गोदानदीकच्छकुञ्जवासिना तेन दृप्तसिंहेन, मारितः।

सहि=वस्तुरूपो व्यङ्ग्यः, कदाचित्, वाच्ये=वाच्यार्थे, विधिरूपे, विधीयमानस्वरूपे, प्रतिषेधरूपः=निषेधरूपः। अर्थात् वाच्यार्थस्य, विधानस्वरूपभानेऽपि व्यङ्ग्यार्थस्य निषेधरूपेण भानं भवति, तद्यथा—तदेवोदाहरति-भम धम्मिअ इति।

पुष्पावचयार्थं स्वीयसङ्केतस्थानभूते गोदावरीनदीकूलनिकुञ्जे यान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं भीषयितुं कस्याश्चिदभिसारिकायाः स्वविनयं सूचयन्त्या उक्तिरियम्। हे धार्मिक ! = परश्रेयोविघातकत्वेन साक्षेपसम्बोधनमिदम्; त्वं, विश्रब्धः=विश्वस्तः, सन्, भ्रम = यथेच्छं कुसुमावचयं कुरु। अद्य = दिनेऽस्मिन्, स शुनकः = श्वा (यद्भयात् ग्रामे भ्रमणं त्यक्तमासीत् स 'शुनको भषकः श्वा स्यादित्य'मरः। गोदानदी-कच्छकुञ्जवासिना = गोदानद्याः गोदावर्य्याख्यनद्याः कच्छस्तटं तत्र कुञ्जं समन्ता-ल्लतादिभिराच्छन्नो देशस्तत्र वासिना, "कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च" इति हैमः, "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः। दृप्तसिंहेन = दर्प-युक्तेन सिंहेन, मारितः = मृत्युं प्रापितः। पद्यमिदं हालकविकृताया गाथासप्तशत्या द्वितीये शतके पञ्चसप्ततिसंख्याकम्। अत्र च जघनविपुलाच्छन्दः। तल्लक्षणं यथा—"संलङ्घ्य गणत्रयमादिमं शकलद्वयोर्भवति पादः। यस्या (आर्यायाः) स्तां पिङ्गलनागो विपुलामिति समाख्याति।" अत्रायं निष्कर्षः—कस्याश्चित्कुलटाया गोदावर्य्यास्तीरे कुञ्जस्थलमेव सङ्केतस्थलं तत्र च पवित्राणां पुष्पाणामवचयाय अवगहनाय च प्रतिदिनं कस्यचिद्धार्मिकस्य गमनं तदेवं कृतसङ्केतभङ्गं स्वप्रेरित-दुष्टकुक्कुरभयेनापि अपरित्यक्तसञ्चारं तं प्रति तस्या एव दिनान्तरे प्रभाते सिंहद्वारा शुनो विनाशोपन्यासेन भ्रमणनिषेधायैवोक्तिः। अत्र शुनो जातभयस्य धार्मिकस्य श्वनिवृत्त्या भ्रमणविधानं वाच्यम् सिंहनिवासश्रुत्या च तदीयभ्रमणनिषेधो वस्तुरूपो व्यङ्ग्यः। न च भ्रमेत्यस्य भ्रमणनिषेधे पर्यवसानाद्विपरीतलक्षणाया अवसरे कथं ध्वनिसम्भव इति वाच्यम्। विधिनिषेधयोरुत्पत्स्यमानयोरेव निषेधविध्योः पर्य्यवसाने एव लक्षणाया विषयत्वात्। प्रकरणादिपर्यालोचनेन विधिनिषेधयोर्निषेधविध्योः पर्यवसाने तु नितरां ध्वनित्वस्यैव सम्भवाच्च।

वह वस्तु ध्वनि कहीं वाच्य विधिरूप में रहता है तो निषेधात्मक रहता है जैसे—

किसी अभिसारिका नायिका के संकेतस्थल गोदावरी के किनारे कुञ्ज में फूल तोड़ने के लिए आता हुआ विघ्नस्वरूप किसी धार्मिक के प्रति कोई कुलटा नायिका कहती है:—पण्डित जी महाराज! गोदावरी के किनारे कुञ्ज में रहने वाले मदमत्त सिंह ने आज [ आप को तंग करने वाले, आप पर दौड़ने वाले ] उस कुत्ते को मार डाला है अब आप निश्चिन्त होकर भ्रमण करें। सारांश यह

है कि केवल कुत्ते से डरने वाले धार्मिक को सिंह से मारे जाने की सूचना उस संकेतस्थल में आना बन्द करने के लिए दी जारही है। यहां वाच्यार्थ विधि रूप में और व्यङ्ग्यार्थ निषेध रूप में परिणत है; इसलिए वाच्यार्थ से व्यङ्ग्यार्थ अत्यन्त ही भिन्न है।

क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ रत्तिअन्धअ सेज्जाए महण मज्जहिसि॥

( छाया ) श्वश्रूरत्र निमज्जति ( शेते ) अत्राहं दिवसकं प्रलोकय।
मा पथिक! राज्यन्धक! शय्यायामावयोर्माङ्क्षीः॥

क्वचिद्वाच्ये = वाच्यार्थे, प्रतिषेधरूपे ( गम्यमाने ) विधिरूपः = विधानरूपो गम्यमानो वस्तुरूपो यथा—अत्ता एत्थेति। विरामाय वासं प्रार्थयमानं कमपि कमनीयं कामुकं युवानं पथिकं प्रति पतिविरहिततया चिरादुत्कण्ठितनिजोपभोगाया यौवनभराक्रान्ततया चोन्मत्तमदनायाः कस्याश्चित्स्वयं दूत्या उक्तिरियम्। हे पथिक! = पान्थ, अत्र = अस्मिन् स्थाने, अत्ता = श्वश्रूः, निमज्जति = जरत्तरतया मृतप्राया निपतति शेत इति सारांशः। अत्र = अस्मिन् स्थाने, अहम् निमज्जामीति शेषः, ( तत्तस्मात् ) दिवसकं = दिनं व्याप्यैव, ( अल्पः कुत्सितो वा देश इत्यर्थे अल्पे इति, कुत्सिते इति वा कः। प्रलोकय = पश्य, हे राज्यन्धक = ! रात्रौ अन्धक इति तत्सम्बुद्धौ, सप्तमी शौण्डैरिति समासः, यद्वा रात्रेरन्धक इति षष्ठीतत्पुरुषः। कुत्सितोऽन्ध इति अन्धकः। यद्वा अन्ध इवेत्यन्धकः। इवे प्रतिकृतौ इति कन्। आवयोः=श्वश्रू-स्नुषयोः, शय्यायां=पर्य्यङ्के, मा=नैव, माङ्क्षीः = निश्चेतनः पतेत्यर्थः। गाथावृत्तमिदम्। तदुक्तं पिङ्गलाचार्य्यैः—पढमं वारह मत्ता वीए अट्ठारहेहि संजुत्ता। जह पढमं तह तीअं पञ्चदह विहूसिआगाहा॥ प्रथमं द्वादशमात्रा द्वितीयेऽष्टादशसंयुक्ताः। यथा प्रथमं तथा तृतीयं पञ्चदशविभूषिता गाथा। इति संस्कृतम्। अत्र शय्यायां पतननिषेधो वाच्यः। अन्यपदार्थविवेचनेन तु शय्या-पतनस्य विधानरूपो वस्तुध्वनिः—यथा—अत्र पथिकशब्देन "त्वं पथिकोऽसि नास्य देशस्याभिज्ञः, सञ्चरणेन श्रमार्तश्चेति कुत्रापि पतिष्यसीति गृहस्य दविष्ठतया भार्य्या विरहिततया च कियन्तं समयमारिरंसीति प्रत्यायनं ध्वन्यते। निमज्ज-

तोतिपदेन श्वश्र्वां स्वानुरागाभावः, तस्यास्तथात्वे यथेष्टं मया समं रमस्व, नात्र तत्प्रतिबन्धकताभीतिलेश इति व्यज्यते । अत्राहं दिवसमेव प्रलोकयेत्यनेन इदानीमेव दृश्यतां मम योग्यतायां सन्देहो न कार्य्यः इति तस्या वृद्धहतकाया वधिरत्वान्धत्वास-हृदयत्वानि च ज्ञेयानीति च द्योत्यते। दिवसकपदेऽल्पार्थककुत्सार्थककप्रत्ययेन यद्यपि दिने रमणे नात्र प्रतिबन्धकत्वम् , तथापि क्षणं प्रतीक्ष्यतामिति द्योतयितुं दिनस्या-ल्पत्वं, दिवसे रमणस्य निषिद्धतया तस्य कुत्सितत्वञ्च व्यज्यते । प्रलोकयेत्यनेन, दृश्यतामन्यथाकरणे सकलं विपर्य्येष्यतीति व्यज्यते। रात्र्यन्धकत्वेन कदाचित् शय्यायां पतनेन परैर्दृष्टेऽपि न कापि क्षतिरिति द्योत्यते । अन्धकपदे इवे प्रतिकृता-विति कन्प्रत्ययेन "काकेनेव त्वया मम तालोपभोगः कार्य्यः" इति द्योत्यते । इह गृहे श्वश्रू द्वितीयाऽहं श्वश्रूश्च मृतप्रायेति स्वच्छन्दं मया सह विहर, अपगमय सर्वं श्रम-मिति विधिरूपो वस्तुध्वनिरिति निष्कर्षः ।

कहीं वाच्यार्थ प्रतिषेध रूप रहता है और व्यङ्ग्य विधि रूप में परिणत रहता है । जैसे—

किसी प्रोषितभर्तृका नायिका संध्या समय रहने के लिए आये हुए किसी पथिक से कहती है:—

हे पथिक ! यहाँ सास सोती है और यहाँ मैं सोती हूँ । दिन में ही अच्छी तरह देखलो ऐसा नहीं कि रात में रतौंधी ग्रस्त होकर हमारी चारपाई पर (न) गिर पड़ना ।

यहाँ वाच्यार्थ निषेध रूप है परन्तु व्यङ्ग्यार्थ विधि रूप है । अर्थात् पथिक को अपनी चारपाई पर आने के लिए बतला रही है ।

कचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—

'वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्ज वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥

( छाया ) व्रज ममैवैकस्या भवन्तु निश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥

अन्वयः—व्रज, एकस्याः, मम, एव, निश्वासरोदितव्यानि, भवन्तु, दाक्षिण्य-हतस्य, तव, अपि, तया, विना, मा, जनिषत ।

क्वचिद्वाच्ये विधिरूपेऽनुभयरूपः = नैव विधानं नैव निषेधश्च गम्येते तद्यथा— वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइँ । मा तुज्झ वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥ इति । अन्यस्यामासक्तं तन्निकटे जिगमिषुं नायकं प्रति विलम्बमसहमानायाः कस्याश्चिदुक्तिरियम् । हे कान्त ! व्रज = स्वेष्टां नायिकां गच्छ, एकस्याः = एकाकिन्याः, ममैव त्वद्विरहेण, निश्श्वासरोदितव्यानि = दीर्घश्वासरोदनानि, भवन्तु । दाक्षिण्यहतकस्य = दाक्षिण्येन अनेककान्ताविषयकप्रतिकूलप्रेम्णा हतस्य नष्टस्येत्यर्थः, तवापि तया = नायिकया विना, निश्श्वासरोदितव्यानि, मा जनिषत = माभूवन्नित्यर्थः । इह व्रजेति क्रियया अनभिलषितस्यापि त्वद्गमनस्य विधिर्वाच्यः, तस्याश्च त्वदीयं मनोऽत्यासक्तमिति सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायोऽत्र गम्यते । किन्तु न विधानरूपो नैव निषेधरूप एव वस्तुध्वनिरवगम्यते इति तात्पर्य्यम् ।

कहीं वाच्य विधि रूप रहता है और व्यङ्ग्यार्थ ( अनुभयात्मक ) ( विधि निषेध दोनों से भिन्न ) होता है । जैसे—

तुम जाओ, मुझे अकेली ही फूट-फूट कर रोना पड़े तो पड़े; किन्तु दाक्षिण्य से अर्थात् अनेक नायिकाओं में अनुरागवश नष्ट तुझे भी उस नायिका के बिना भोगना न पड़े । यहाँ किसी खण्डिता नायिका का अत्यन्त दुःख प्रतीयमान है । वह न तो निषेध ही है और न विधि ही है । इसलिए यहाँ व्यङ्ग्यार्थ अनुभयरूप है ।

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

"दे आ पसिअ णिवत्तसु मुहससिजोह्णाविलुत्ततमणिवहे ।
अहिसारिआणँ विग्घं करोसि अण्णाणं वि हआसे ॥

( छाया ) प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥ इति संस्कृतम् ॥

अन्वयः—( हे ) मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! प्रार्थये, तावत्, प्रसीद, निवर्तस्व, ( हे ) हताशे ! अन्यासाम्, अपि, अभिसारिकाणां, विघ्नं, करोषि ।

क्वचिद्वाच्यार्थे प्रतिषेधरूपे गम्यमानेऽपि न विधानं नैव निषेध एव गम्यते इत्यनुभयरूपस्य वस्तुमात्रस्योदाहरणमाह—दे आ इति । हे मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! मुखमेव शशी चन्द्रस्तस्य ज्योत्स्नया कान्त्या विलुप्तं तमोनिवहः

अन्धकारसमूहो यया सा तत्सम्बुद्धौ, प्रार्थये=त्वामभ्यर्थये, तावत्, प्रसीद =प्रसन्ना भव, निवर्तस्व=परावर्तस्व, हे हताशे!=नष्टाशे! अन्यासामपि =न केवलं स्वस्या एव, अभिसारिकाणां=सङ्केतस्थलं गच्छन्तीनां, विघ्नं करोषि =स्वकीयमुखकान्त्या प्रकाशकरणेनान्यस्या अपि नायिकायाः गमने विघ्नमुत्पादयसीति सारांशः। अत्र स्वकर्तव्यान्निवर्तस्वेति प्रतीतिनिषेधो वाच्यः। गृहागतां गोत्रस्खलिताद्यपराधिनि नायके सति तस्मात्स्थानात्प्रतिगन्तुं प्रवृत्तां नायिकां प्रति चाटूपक्रमपूर्वकं निवर्तयितुमुद्यतस्य कस्यापि नायकस्योक्तिः—न केवलं स्वात्मन एव विघ्नं करोषि, यावदन्यासामपि ततस्तव कदापि न सुखमिति वल्लभाभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः। यद्वा—सख्योपदिश्यमानापि तदवधीरणया गच्छन्ती कयाचित्सख्योपदिश्यते—न केवलमात्मन एव विघ्नं करोषि किन्तु हताशा स्वीयमुखचन्द्रप्रकाशितपथतयाऽन्यासामपि अभिसरन्तीनां विघ्नं करोषीति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः। परं व्याख्यानद्वयेऽपि स्वकर्तव्यान्निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेर्गुणीभूतव्यङ्ग्यस्यैवोदाहरणसम्भवे ध्वनेरुदाहरणं न स्यादिति तृतीयव्याख्यानप्रकारश्चेत्थम्—सवेगप्रियतमावासमभिसरन्ती काचिन्नायिका तद्गृहाभिमुखमागच्छता तेनैव प्रियतमेनाप्रत्यभिज्ञानच्छलेनोपश्लोक्यते—स्वीयमुखकान्त्या मार्गे तमोविध्वंसेन यदन्यासां विघ्नं करोषि तेन कस्तवेप्सितलाभो न कोऽपीति मदीयं गृहमागच्छ त्वदीयं वा गृहं गच्छाव इत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाटूवात्मा व्यङ्ग्य इत्येव सारम्।

कहीं वाच्यार्थ प्रतिषेधरूप रहता है। तो व्यङ्ग्यार्थ अनुभयरूप रहता है। जैसे—

कोई नायक अपना अपराध समझकर संकेतस्थल से लौटती हुई नायिका को लौटाता हुआ सान्त्वना दे रहा है।—(मैं) प्रार्थना करता हूँ, मान जाओ, लौट जाओ। अपने मुख-चन्द्र की ज्योत्स्ना से गाढ़ अंधकार का नाश करके अरी हताशे! तुम अन्य अभिसारिकाओं (के कार्य) का भी विघ्न कर रही है।

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम्।
सभमरपउमग्घाइणि वारिअवामे सहसु एह्णिम्॥

( छाया ) कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

अन्वयः—प्रियायाः, सव्रणम्, अधरम्, दृष्ट्वा, कस्य, वा, रोषः, न, भवति, ( हे ) सभ्रमरपद्माघ्राणशीले ! वारितवामे ! इदानीं, सहस्व ।

क्वचित् वाच्यात् = वाच्यार्थात्, विभिन्नविषयत्वेन = व्यतिरिक्तविषयत्वेन, व्यवस्थापितः = व्यवस्थया दृढीकृतः, ( वस्तुरूपो ध्वनिः ) इति तस्योदाहरणमाह—कस्य वा न भवतीति । उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्याः कस्याचिद् विदग्धायास्तत्सख्या उक्तिरियम् । प्रियायाः=कान्तायाः, सव्रणम्=आघात-पद्मस्थेन भ्रमरेण दष्ट्वा कृतव्रणम्, अधरम् = ओष्ठम्, दृष्ट्वा = अवलोक्य, कस्य = क्लीबव्यतिरिक्तस्य, वा, रोषः = क्रोधः, न, भवति = जायते ; अपि तु सर्वस्ये-त्यर्थः । ( हे ) सभ्रमरपद्माघ्राणशीले ! = सभ्रमरं यत् पद्मं कमलं तदाघ्रातुं शील-मस्या अस्तीति तत्सम्बुद्धौ तथोक्ते, तथा ( हे ) वारितवामे ! = वारिता निवारि-ताऽपि वामा तत्प्रतिकूलाचरणेति तत्सम्बुद्धौ तथोक्ते, इदानीम् = पश्चात्ता-पावसरे, सहस्व = पत्युस्तर्जनां, भ्रमरदंशनजन्यव्रणवेदनाञ्च मर्षयेत्यर्थः । अत्रा-वाच्यव्यङ्ग्ययोर्भेदः प्रदर्श्यते—त्वं सर्वथाऽविवेकिनी परेणोपदिष्टस्य स्वहितस्याप्य-नङ्गीकारिणी प्रत्युत तद्विरुद्धाचरणाऽसि, अतो वारम्वारं "पद्ममिदं मा घ्रासीः, अत्रत्य एष भ्रमरहतकस्त्वां दक्ष्यति" इति निवार्य्यमाणापि तत्पद्मं घ्रातवत्येव, भ्रमरेणापि पुनर्दष्टैव, नहि खलः कदापि दौर्जन्याद्विरमति" इति तत्कष्टं कयाऽन्य-याऽनुभूयेतेति त्वमेव सहस्वेति वाच्यम् । यद्वा भ्रमरेणैव प्रियाया अधरो दष्टस्ताह-शमधरं दृष्ट्वा कस्य चेतसि "दुष्टा सा कश्चिदन्योऽपि नायकोऽस्त्यस्या इत्याशङ्कया रोषो न स्यात्स च नायकोऽत्रैव वरीवर्ति," इति त्वयैव सोढव्यः । यदा मद्वारिता पद्मं नाघ्रा-स्यस्तर्हि मृषा कलङ्कपात्रन्नाभविष्य इति च वाच्यम् । वाच्यार्थे चास्मिन् सख्येवोद्देश्या । भ्रमरेणैवास्या अधरो दष्टो न केनाप्यन्येन नायकेनेति च व्यङ्ग्यम् । अत्र च कान्त एवोद्देश्य इति स्फुट एव वाच्य-व्यङ्ग्ययोर्भेदः सखीतत्कान्तविषयत्वेन विषयभेदात् । यद्यपि प्रतिवेशि-सपत्नी-नायिकात-दुपपति तटस्थादिविषयाणां बहूनां व्यङ्ग्यानां सम्भ-वस्तथापि विस्तरभयान्नालोचितानीति विद्वद्भिर्ज्ञेयम् । अत्रायं संक्षेपः—अविनयवती-विषयं हि वाच्यम् । भर्तृविषयन्तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् ।

कहीं वाच्य से व्यङ्ग्य का विषय भिन्न ही दिखलाई पड़ता है। जैसे—

किसी अविनीता नायिका के अधर में दशनजन्य व्रण कहीं चौर्य रति के समय हो गया है। उसका पति जब उसे देखेगा तो उसकी दुश्चरित्रता को समझ जावेगा और अप्रसन्न होगा। इसलिए उसकी सखी उसको छिपाने के लिए भ्रमरदशनजन्य व्रण इस श्लोक के द्वारा बनाती है।

प्रिया के सव्रण अधर को देखकर किसको क्रोध नहीं हो सकता है। मना करने पर भी न मानकर भ्रमर सहित कमल को सूँघने वाली तू अब उसका फल भोग।

इस श्लोक में वाच्यार्थ और व्यङ्ग्यार्थ का विषय अत्यन्त ही भिन्न है। इसका व्यङ्ग्यार्थ और भी हो सकता है, जैसे—आज तो इस प्रकार से बच गई, आगे कभी इस प्रकार के प्रकट चिह्नों का अवसर न आने देना।

**अन्ये चैवंविधाः प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदाः सम्भवन्ति। तेषां दिङ्मात्रमेतत्प्रदर्शितम्। द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते।**

**तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते। न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव।**

अन्ये च = अपरे च, एवंविधाः = एतादृशाः, प्रकाराः, प्रतीयमानभेदाः = व्यङ्ग्यभेदाः, वाच्यात् = वाच्यार्थात्, विभेदिनः = भिन्नाः, सम्भवन्ति = सम्भवस्य विषया भवन्तीत्यर्थः। तेषां = प्रतीयमानभेदानाम्, दिङ्मात्रम् = पथप्रदर्शनमात्रम्, एतत् = पूर्वोक्तम्, प्रदर्शितम् = वर्णितम्।

प्रतीयमानभेदाश्च दर्पणे प्रोक्ता यथा—

"बोद्धृस्वरूपसंख्यानिमित्तकार्य्यप्रतीतिकालानाम्।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः॥" इति॥

द्वितीयभेदस्यापि वाच्याद्व्यतिरिक्तत्वं प्रदर्शयति—द्वितीयोऽपि प्रभेद इति। द्वितीयोऽपि प्रभेदः = अलङ्काररूपो भेदः, वाच्याद्, विभिन्नः = व्यतिरिक्तः सप्रपञ्चं = सविस्तरम्, अग्रे = द्वितीयोद्योते "असंलक्ष्यक्रमव्यङ्ग्यः क्रमेणोद्योतितः परः" इति विवक्षितान्यपरवाच्यस्य द्वितीयभेदवर्णनकाले।

व्यङ्ग्यस्य तृतीयभेदोऽपि वाच्याद्विभिन्नः प्रदर्श्यते—तृतीयस्त्विति। तृतीयस्तु रसादिलक्षणः = रस-भाव-तदाभास-तदुदय-शान्ति-सन्धि-शबलताध्वनिरूपः, प्रभेदः, वाच्यसामर्थ्याक्षिप्तः = वाच्यसामर्थ्येनाक्षिप्तः, प्रकाशते = प्रकर्षेण भासत इत्यर्थः। न तु = नैव, साक्षात्, शब्दव्यापारविषयः = शब्दव्यापारस्याभिधाशक्तेर्विषयः, इति वाच्याद् विभिन्न एव = विविक्त एव ध्वनिरिति तात्पर्य्यम्।

और भी इस प्रकार के प्रतीयमान अर्थात् व्यङ्ग्य के भेद वाच्य से भिन्न ही संभव हो सकते हैं। उन सबों का दिग्दर्शन मात्र बतलाया गया है। दूसरा अलंकार रूप जो व्यङ्ग्य का भेद है वह भी वाच्य से भिन्न ही है। उसे विस्तार पूर्वक आगे द्वितीयोद्योत में दिखलाया जायगा।

तीसरा ( रसध्वनि ) रसादिरूप भेद वाच्य के सामर्थ्य से आक्षिप्त हो कर ही प्रकाशित होता है। साक्षात् शब्द व्यापार ( अभिधा, लक्षणा, तात्पर्य्याशक्ति व्यापार ) का विषय नहीं होता इसलिए वाच्यार्थ से भिन्न ही है।

**तथा हि वाच्यत्व तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा ॥**

**पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम्। यत्राप्यस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः।**

रसादिलक्षणध्वनेर्वाच्यत्वखण्डने प्रकारद्वयं दर्शयति—तथा हीत्यादिना। तस्य = रसादेः, वाच्यत्वम्, स्वशब्दनिवेदितत्वेन वा = स्वशब्दै रसादिशब्दैः शृङ्गारादिशब्दैर्वा निवेदितत्वेन = अभिहितत्वेन स्यात्, विभावादिप्रतिपादनमुखेन वा = विभावादीनां विभावादिवाचकशब्दानां प्रतिपादनमुखेन = कथनमुखेन वा स्यात् तात्पर्य्यशक्त्येत्यर्थः।

तत्र प्रथमपक्षे दोषं व्यनक्ति—पूर्वस्मिन्निति। पूर्वस्मिन् पक्षे = स्वशब्दनिवेदितत्वपक्षे, स्वशब्दनिवेदितत्वाभावे = यत्र स्वशब्दनिवेदितत्वं रसादिशब्दनिवेदित्वं नास्ति तत्र यथा—

"कर्णकल्पितरसालमञ्जरी–पिञ्जरीकृतकपोलमण्डलः।
निष्पतन्नयनधारया, राधया मधुरिपुर्निरीक्ष्यते ॥

इति भानुमिश्रितोदाहृते पद्ये, रसादीनामप्रतीतिप्रसङ्गः स्यात्। न च = नह्येव, सर्वत्र = रसादिबोधके काव्ये, तेषां = रसादीनां, स्वशब्दनिवेदितत्वमस्ति।

यत्राप्यस्ति स्वशब्दनिवेदितत्वम्, यथा—

"मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती।
शैवालिनी च केशैः सुरसेयं सुरसो सरसी॥" इत्यादौ रसस्य,

तथा—त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या॥

इत्यादौ भावस्य च स्वशब्दनिवेदितत्वमस्ति। तत्रापि स्थले विशिष्टविभावादि-प्रतिपादनमुखेनैव = विशिष्टानां परस्परसंसर्गभानवशात् विलक्षणानां, विभावादीनां प्रतिपादनमुखेनैव, एषाम् = रसादीनाम् प्रतीतिः = आस्वादो भवतीत्यर्थः।

क्योंकि (यदि उसको वाच्य माना जाय तो) उसकी वाच्यता (दो ही प्रकार से हो सकती है) या तो स्वशब्द (अर्थात् रसादि शब्द अथवा शृंगारादि नामों) से हो सकती है। अथवा विभावादि प्रतिपादन द्वारा। (इन दोनों में से) पूर्व पक्ष में जहाँ रस शब्द अथवा शृंगारादि शब्द का प्रयोग नहीं किया गया है; परन्तु विभावादि का प्रतिपादन किया गया है। वहाँ स्वशब्द से निवेदित होने पर रसादि की प्रतीति नहीं होगी। सभी जगहों में रसादि की स्वशब्द से निवेदितत्व नहीं होता, जहाँ कहीं (स्वशब्द रसादि अथवा शृंगारादि संज्ञा पदों का प्रयोग) होता भी है वहाँ भी विशेष विभावादि के प्रतिपादन द्वारा ही रसादि की प्रतीति होती है।

**स्वशब्देन सा केवलमनूद्यते। न तु तत्कृता। विषयान्तरे तथा तस्या अदर्शनात्। न हि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति।**

स्वशब्देन = रसादिशब्देन, सा = रसादिप्रतीतिः, केवलमनूद्यते, न तु तत्कृता = तेन रसादिशब्देन कृता प्रयोज्या नेत्यर्थः। तत्र व्यतिरेकं दर्शयति—विषयान्तर इति। विषयान्तरे = रसादिशब्दघटिते विभावादिवाचकशब्दाभाववति, तस्याः = रसादिप्रतीतेः, अदर्शनात् = दृष्टिगोचराभावात्। तद्यथा—

"सरसो विपरीतश्चेत् सरसत्वं न मुञ्चति।
साक्षरा विपरीताश्चेत् राक्षसा एव केवलम्॥

इत्यादौ यदि रसादिशब्देभ्य एव रसाद्यास्वादो, न तु विभावादिवाचकशब्देभ्यः, तदा विभावादिवाचकशब्दाभावेऽपि रसादिप्रतीतिः स्यात्। अदर्शनमेव द्रढयति—नहीत्यादिना। केवलशृङ्गारादिशब्दमात्रभाजि = अत्रादिशब्देन वीर-करुणाद्भुत-हास्य-भयानक-वीभत्स-रौद्र-शान्तानां ग्रहणम्, केवलं यत्र शृङ्गारादिशब्दानां भानं तत्र, विभावादिप्रतिपादनरहिते = विभावादीनां यत्प्रतिपादनं कथनं तद्रहिते, काव्ये, मनागपि = ईषदपि, रसवत्त्वप्रारितिः = रसवत्त्वस्य प्रतीतिरास्वादः, अस्ति।

शृङ्गार–हास्य–करुण–रौद्र–वीर–भयानकाः ।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ इति ।

स्वशब्द से अर्थात् संज्ञा शब्द से तो वह केवल अनूदित होती है। उन से जन्य नहीं होती। क्योंकि विषयान्तर में उस प्रकार से रसादि प्रतीति नहीं देखी गई है। विभावादि के प्रतिपादन रहित केवल ( रस या ) शृंगारादि शब्द के प्रयोग वाले काव्य में तनिक भी रसवत्ता प्रतीति नहीं होतीं।

यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः। केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्त्वमेव रसादीनाम्। न त्वभिधेयत्वं कथञ्चित् इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम्। वाच्येन त्वस्य सहैव प्रतीतिरित्यग्रे दर्शयिष्यते।

पूर्वोक्तविषयस्यैवोपसंहारं वक्तुमारभते—यतश्चेत्यादिना। यतश्च = हेतोः स्वाभिधानम्=अभिधीयतेऽभिधया वोच्यतेऽनेनेत्यभिधानं वाचकशब्दः, स्वस्याभिधानं स्वाभिधानम्, अन्तरेण = विना केवलेभ्योऽपि = अन्यानपेक्षेभ्योऽपि, विभावादिभ्यः, विशिष्टेभ्यः, रसादीनां प्रतीतिः। केवलाच्च स्वाभिधानात्=रसाद्यभिधानात्, अप्रतीतिः, रसादीनामप्रतीतिः। तस्मात् कारणात्, अन्वयव्यतिरेकाभ्याम् = तत्सत्त्वे तत्सत्त्वमन्वयः तदभावे तदभावो व्यतिरेकः, कार्य्यसत्त्वे कारणसत्त्वम्, कारणाभावे कार्य्याभावः, इत्यन्वयव्यतिरेकाभ्याम्, रसादीनाम्, अभिधेयसामर्थ्याक्षिप्तत्वमेव = अभिधेयं यत् सहकारिशक्तिरूपं विभावादिकं तत् सामर्थ्यात् आक्षिप्तत्वमेव; रसादीनामाक्षेपसम्भव इति भावः। न तु कथञ्चित् केनापि प्रकारेण, अभिधेयत्वम्, रसादीना-

मभिधाशक्तिप्रतिपाद्यत्वम्। इति हेतोः तृतीयोऽपि प्रभेदः = रसादिः, अपिना वस्त्वलङ्कारौ अर्थात् प्रतीयमानप्रकाराः त्रयोऽपि, वाच्याद् भिन्न एव, अतिरिक्त एव इति स्थितम् = पर्यवसितमित्यर्थः। वाच्येनेति—अस्य तु = रसादिरूपव्यङ्ग्यस्य, प्रतीतिः = आस्वादः, वाच्येन, सहैव = सममेव, इति, अग्रे = द्वितीयोद्योते–'रस-भावतदाभासभावशान्त्यादिरक्रमः" इति कारिकायाम्, दर्शयिष्यते = प्रपञ्चयिष्यत इत्यर्थः।

क्योंकि (रसादि संज्ञा) शब्दों के विना केवल विशिष्ट विभावादि से भी रसादि की प्रतीति होती है। और (विभावादि के विना) केवल रसादि संज्ञा शब्दों से प्रतीति नहीं होती है। इसलिए अन्वय व्यतिरेक से रसादिवाच्य के सामर्थ्य से आक्षिप्त ही होते हैं। किसी दशा में वाच्य नहीं होते हैं। इस लिए तीसरा (रस भाव, रसाभास, भावाभास, भावप्रशम, भावोदय, भावसन्धि, भाव शबलता आदि रूप) भेद भी वाच्य से भिन्न ही है यह निश्चित है। व्यङ्ग्य की प्रतीति वाच्य के साथ ही होती है—यह आगे तृतीयोद्योत में दिखलाया जायगा।

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥

अन्वयः—स, एव, अर्थः, काव्यस्य, आत्मा, तथा, च, आदिकवेः, पुरा, क्रौञ्चद्वन्द्ववियोगोत्थः, शोकः, श्लोकत्वम्, आगतः।

स एव = रसादिरूपव्यङ्ग्य एव, अर्थः, (शरीरस्य यथा जीवः जीवनाधायकत्वात् आत्मा प्रधानम्) तथा, काव्यस्य, आत्मा = प्रधानम्। तथा च, आदिकवेः = वाल्मीकेः, क्रौञ्चद्वन्द्ववियोगोत्थः = क्रौञ्चद्वन्द्वस्य चक्रवाकमिथुनस्य, वियोगात् विरहात् व्याधहननजन्यविरहादिति भावः, उत्थः, उत्पन्नः, शोकः = करुणरसस्थायिभावः, श्लोकत्वम् = पद्यत्वम्, आगतः = प्राप्तः।

काव्य की आत्मा वही (प्रतीयमान रस) अर्थ है इसी से प्राचीन काल में क्रौंच (पक्षी) के जोड़े के वियोग से उत्पन्न आदिकवि वाल्मीकि का शोक (करुण रस का स्थायीभाव) श्लोक (मा निषाद प्रतिष्ठां त्वमित्यादि काव्य रूप) में परिणत हुआ।

विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः

सारभूतः। तथा चादिकवेर्वाल्मीकेर्निहतसहचरविरहकातरक्रौञ्चाक्रन्द-जनितः शोक एव श्लोकतया परिणतः।

कारिकार्थं स्पष्टं विवृणुते—विविधेत्यादिना। विविधेन = अनेकेन वाच्य-वाचकयोः = अर्थशब्दयोः, रचनायाः = विन्यासस्य, प्रपञ्चेन = विस्तारेण, चारुणः = मनोहरस्य, काव्यस्य = शब्दार्थमयस्य, स एवार्थः = रसादिरेवार्थयः, सारभूतः = प्रधानम्। तथा च, आदिकवेः = वाल्मीकेः। निहतेत्यादि—निहतस्य = व्याधेन हतस्य, सहचरस्य = कान्तस्य, विरहेण = वियोगेन, कातरायाः = व्याकुलायाः, क्रौञ्च्याः, चक्रवाक्याः, आक्रन्दात् = सम्यक् क्रन्दनात्, जनितः = उत्पन्नः, शोक एव श्लोकतया = पद्यरूपतया, परिणतः = पर्यवसन्नः।

नाना प्रकार के शब्द, अर्थ और संघटना के प्रपंच से मनोहर काव्य का सारभूत ( आत्मा वही प्रतीयमान रस रूप ) अर्थ है। तभी [ निषाद के बाण से विद्ध किये गये, मरणासन्न, अतः ] सहचरी के वियोग से कातर ( जो ) क्रौंच ( तत्कर्तृक, अथवा क्रौंचोद्देश्यक क्रौंचीकर्तृक ) के क्रन्दन से उत्पन्न आदिकवि वाल्मीकि ( वाल्मीकिनिष्ठ करुण रस का स्थायीभाव ) का शोक ही श्लोक रूप में परिणत हो गया।

मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

अन्वयः—निषादपक्षे-( हे ) निषाद! ( हे ) अम! त्वं, शाश्वतीः, समाः, प्रतिष्ठां, मा, गमः, यत्, क्रौञ्चमिथुनात्, काममोहितम्, एकम्, अवधीः।

अन्वयः—रामपक्षे— ( हे ) मानिषाद! त्वम्, शाश्वतीः, समाः, प्रतिष्ठां, अगमः, यत्, क्रौञ्चमिथुनात्, काममोहितम्, एकम्, अवधीः।

पद्यमिदं पक्षत्रये संलगयति कविः—निषादपक्षे, रामपक्षे, कुबेरपक्षे च; तत्र प्रथमं निषादपक्षे शोकं प्रकटयितुं कवेरुत्प्रेक्षणम्। हे अम! मा लक्ष्मीस्तया रहितः अमस्तत्सम्बुद्धौ हे अम! = लक्ष्मीरहित! निषाद! = कैवर्त! त्वम्, शाश्वतीः = असंख्याः, समाः = वर्षाणि ( यावत् ) प्रतिष्ठाम् = मर्यादाम्, मागमः = न आप्नुहि। शीघ्रं म्रियस्वेति तात्पर्य्यम्। अत्र माङ्योगेऽटोलोपो बोध्यः। यत् = यस्मात् काममोहितम् = कामेन मोहितम् काममोहितम् कामविह्वलमित्यर्थः, क्रौञ्चमिथुनात् = वकयुगलात्, एकं = पुमांसम्, अवधीः = हतवान्, इति शोकपक्षीयोऽर्थः।

रामपक्षे तु—हे मानिषाद ! निषीदति तिष्ठत्यस्मिन्निति निषादः आश्रयः, माया लक्ष्म्याः निषादः मानिषादस्तत्संबुद्धौ मानिषाद ! = लक्ष्मीनिवास ! रामचन्द्र ! त्वं शाश्वतीः समाः निरन्तरवर्षाणि यावत् प्रतिष्ठाम् = मर्यादाम्, अगमः, प्राप्तवान्, यत् = यस्मात् क्रौञ्चमिथुनात् = क्रुञ्चा कुटिला गतिः कैकसी राक्षसीः तस्या अपत्यं पुमान् क्रौञ्चो रावणः तत्पत्नी च क्रौञ्ची मन्दोदरी तयोर्मिथुनादेकं काममोहितं रावणम्, अवधीः, हतवान् इति—रामपक्षीयोऽर्थः।

कश्चित् कुबेरपक्षेऽपि पद्यमिदं गतार्थयति—हे मानिषाद ! = लक्ष्म्याश्रय ! कुबेर ! त्वं शाश्वतीः क्षमाः प्रतिष्ठामगमः। यत् क्रौञ्चमिथुनात् = क्रुञ्चा कौटिल्य-गमनं शीलं यस्येति क्रौञ्चो यक्षः स्वस्वामिनः कुबेरस्य शासनोल्लङ्घनकारित्वात् कौ-टिल्यगमनं यक्षस्येति भावः, तत्पत्नी च क्रौञ्ची तयोर्मिथुनादेकं काममोहितं यक्षं यत् यस्मात् अवधीः = तदीयाज्ञानं हतवान् तदीयाभिमानमपाकर्तुं दूरं प्रेषितवा-निति कुबेरपक्षीयोऽर्थः।

हे व्याध ! तू ने काममोहित, क्रौंच के जोड़े में से एक एक क्रौंच को मार डाला अतएव तू अनन्त काल तक ( कभी ) प्रतिष्ठा ( सुकीर्ति ) को प्राप्त नहीं हो। अर्थात् शीघ्र मर जाओ। यह शोक पक्षीय अर्थ है।

राम पक्षीय अर्थ यह है:—हे राम ! जिस कारण मन्दोदरी और रावण के जोड़े से 'काममोहित एक रावण को तू ने मार डाला इसलिए सैकड़ों वर्ष तक प्रतिष्ठा पाओ। ( प्राप्त करो )

**शोको हि करुणरसस्थायिभावः, प्रतीयमानरूप एवेति प्रतिपादितम्। प्रतीयमानस्य चान्यप्रभेदप्रदर्शनेऽपि रसभावमुखेनैवोपलक्षणं; प्राधान्यात्।**

**"सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम् ॥६॥"**

अन्वयः—स्वादु, तदर्थवस्तु, निःष्यन्दमाना, महतां, कवीनाम्, सरस्वती, अलोकसामान्यम्, प्रतिस्फुरन्तम्, प्रतिभाविशेषम्, अभिव्यनक्ति।

शोकस्यापि व्यङ्ग्यत्वं द्रढयितुमारभते—शोक इति। करुणरसस्थायिभावः = करुणरसस्य स्थायिभावः—

प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते ।
स एव भावः स्थायीति भरतादिभिरुच्यते ॥

इति भरतादिप्रतिपादितः, शोको हि=स्वेष्टपरिवारादिनिधनजन्यो मानसिकवृत्तिविशेषो विह्वलावस्थः, प्रतीयमानरूप एव = व्यङ्ग्यरूप एवेति (प्राक्) प्रतिपादितम् = वर्णितम् ।

ननु प्रतीयमानस्य वस्त्वलङ्काररसादिभेदत्रयप्रतिपादने रसस्यैव कथं काव्यात्मत्वमित्याशङ्कायामाह—प्रतीयमानस्येत्यादि । प्रतीयमानस्य च = व्यङ्ग्यस्य च, अन्यप्रभेदप्रदर्शनेऽपि = अन्यस्य वस्त्वलङ्काररूपस्य भेदद्वयस्य दर्शनेऽपि, प्राधान्यात् = विच्छित्तिविशेषाधायकत्वेन मुख्यत्वात्, रसभावमुखेनैव = रसभावद्वारेणैव, उपलक्षणम् = वस्त्वलङ्कारयोरपि भासनमित्यभिप्रायः ।

इतिहासमुखेन प्रतीयमानस्य काव्यात्मत्वं प्रदर्श्य तस्यैव प्रकारान्तरेणा व्यवस्थां करोति—सरस्वतीति । स्वादु = चर्वणार्हं, तदर्थवस्तु रसादिरूपं तत्वं, निःष्यन्दमाना = स्वयं प्रस्नुवाना, अत्रांशे सरस्वत्याः कामधेनुसाम्यं भट्टनायकेन प्रतिपादितम्—

"वाग्धेनुर्दुग्ध एकं हि रसं यद्बालतृष्णया ।
तेन नास्य समः सस्याद् दुह्यते योगिभिर्हि यः ॥"

यथा कामधेनुः सर्वकाले स्वयं दुग्धं जनहिताय प्रस्नुते, एवं सरस्वत्यपि कवेः सर्वथा व्यङ्ग्यरूपं तत्वं प्रस्नुते इति तात्पर्य्यम् । अत्रार्थे कुमारसम्भवेऽपि—

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥६॥

इत्यनेन साराग्रयवस्तुपात्रत्वं हिमवत उक्तम् । महतां = प्रतिभाशालिनाम्, कवीनाम्, सरस्वती = वाणी, अलोकसामान्यम् = अपूर्वम्, प्रतिस्फुरन्तम् = प्रतिभासमानम्, प्रतिभाविशेषम् = नवनवोन्मेषशालिनी या बुद्धिः सैव प्रतिभोच्यते, तद्विशेषम्, अभिव्यनक्ति = प्रकाशयति ।

शोक करुण रस का स्थायीभाव प्रतीयमान रूप ही है यह पहले कहा जा चुका हैं । यद्यपि प्रतीयमान के और भी भेद बतलाये गये हैं; किन्तु रस भावादि के द्वारा ही प्रधानतया प्रतीत होता है ।

उस आस्वादमय ( रस भाव रूप ) अर्थ तत्व को प्रवाहित करने वाली महाकवियों की वाणी ( उनके अलौकिक प्रतीभासमान प्रतिभा, अपूर्व वस्तु निर्माणक्षमा प्रज्ञा ) के वैशिष्ट्य को प्रकट करती है ॥ ६ ॥

वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां ( सरस्वती ) अलोकसामान्यं प्रतिभाविशेषं प्रतिस्फुरन्तमभिव्यनक्ति। येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते।

कारिकार्थमेव सुस्पष्टं विशदीकरोति वृत्तिकारः—वस्तुतत्त्वमित्यादिना। अभिव्यनक्तीत्यन्तमर्थो व्याख्यात एव । येन = अभिव्यक्तेन प्रतिस्फुरता प्रतिभाविशेषेण निमित्तेन, अतिविचित्रकविपरम्परावाहिनि = नवनवोन्मेषशालिप्रतिभावत्कविगणचमत्कृते अस्मिन् संसारे, कालिदासप्रभृतयः = कालिदासादयः, द्वित्राः = द्वौ वा त्रयो वेति द्वित्राः, पञ्च वा षड् वेति पञ्चषा एव महाकवय इति गण्यन्ते = संख्यायन्ते ।

उस ( प्रतीयमान रस भावादि ) अर्थतत्व को प्रवाहित करने वाली महाकवियों की वाणी ( उनके ) अलौकिक, प्रतिभासमान, प्रतिभा-विशेष को व्यक्त करती है। जिसके कारण नानाविधि कविपरम्पराशाली इस संसार में कालिदास आदि दो तीन अथवा पाँच छः ही महाकवि गिने जाते हैं ।

इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्वज्ञैरेव केवलम् ॥ ७ ॥

अन्वयः—स हि शब्दार्थशासनज्ञानमात्रेण, एव, न, वेद्यते, काव्यार्थतत्वज्ञैः, एव, केवलं, वेद्यते ।

साम्प्रतं वाच्यव्यङ्ग्ययोर्विशदतया भेदं दर्शयितुमुपक्रमते—इदं चापरमित्यादिना। इदञ्च, अपरम्, अन्यत् ( न केवलं "प्रतीयमानं पुनरन्यदेवेति कारिकोक्तमेवेति भावः, प्रतीयमानस्यार्थस्य = व्यङ्ग्यस्यार्थस्य, सद्भावसाधनम् = सत्ताया व्यवस्थापकं, प्रमाणम् = बीजम् ।

शब्दार्थेति । सः = प्रतीयमानोऽर्थः, हि = यतः, शब्दार्थशासनज्ञानमात्रेणैव =

शब्दार्थयोर्यत् शासनं व्युत्पादनं येन तद् शब्दार्थशासनं व्याकरणं तज्ज्ञानमात्रेणैव, न = नैव, वेद्यते = ज्ञायते, ( किन्तु ) सहृदयैः, काव्यार्थतत्त्वज्ञैरेव = काव्यसारविद्भिरेव, वेद्यते = ज्ञायतेऽर्थात् व्यङ्ग्यार्थस्तु वाच्यान्नितरां विभिन्न एवेति सारांशः।

प्रतीयमान अर्थ सत्तासिद्ध करनेवाला यह और भी एक प्रमाण है:—

वह प्रतीयमान अर्थ शब्दशास्त्र ( व्याकरणादि ) और अर्थशास्त्र ( कोशादि के ज्ञानमात्र ) से ही प्रतीत नहीं होता, वह तो केवल काव्यमर्मज्ञों को ही विदित होता है ॥ ७ ॥

शब्दार्थशासनज्ञानमात्रेऽपि परं न वेद्यते सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते, यदि च वाच्यरूप एवासावर्थः स्यात्, तद्वाच्यवाचकस्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव प्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः।

कारिकार्थमेवविवृणुते—शब्दार्थेत्यादिना ज्ञायत इत्यन्तं व्याख्यातप्रायम्।

वाच्यप्रतीयमानयोर्भेदं प्रदर्शयति—यदि चेत्यादिना। यदि च, असावर्थः = प्रतीयमानोऽर्थः, वाच्यरूप एव, स्यात् = भवेत्, तद्, वाच्यवाचकस्वरूपपरिज्ञानादेव = वाच्यवाचकयोः शब्दार्थयोः स्वरूपस्य परिज्ञानादेव परिचयादेव, तत्प्रतीतिः = व्यङ्ग्यार्थप्रतीतिः स्यात्।

तत्रैव दृष्टान्तमाह—अथ चेत्यादिना। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणाम् = वाच्यवाचकयोः शब्दार्थयोर्लक्षणमात्रे कृतः श्रमो यैस्ते तेषाम् वैयाकरणानां काव्यतत्त्वार्थभावनाविमुखानाम् = काव्यतत्त्वभूतो योऽर्थस्तत्र या भावना वाच्यव्यतिरेकेन निरन्तरचर्वणा तत्र विमुखानाम् = अप्रसक्तानाम्, यथा, गान्धर्वलक्षणविदाम् = गान्धर्वस्य सङ्गीतशास्त्रीयपदार्थस्य यानि लक्षणानि तद्विदन्ति ये ते तेषाम्, प्रगीतानाम् = प्रकृष्टं गीतं गानं येषां ते तेषाम्, स्वरश्रुत्यादिलक्षणम् = स्वरः = "श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वनो रञ्जयति श्रोतृश्चित्तं स स्वर उच्यते" इति सङ्गीतशास्त्रोक्तो निषादादिसप्तविधो ध्वनिविशेषः, श्रुतिः = "प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा"

इत्युक्तलक्षणः स्वराद्यावयवात्मकः स्वनः तल्लक्षणमगोचरं तथैव, असावर्थः = प्रतीयमानोऽर्थः, अगोचर एव = बुद्धेरविषय एव, केवलं वैयाकरणानामिति तात्पर्य्यम् ।

शब्दार्थ शासन ज्ञान केवल होनेपर भी वह प्रतीयमान अर्थ केवल काव्यमर्मज्ञों को ही विदित होता है। यदि प्रतीयमान अर्थ भी वाच्य रूप ही होता तो शब्द और अर्थ के ज्ञानमात्र से ही उसकी प्रतीति होती किन्तु केवल वाच्य वाचक ( कोशादि अर्थ निरूपक शास्त्र और व्याकरणादि शब्द शास्त्र ) में कृतश्रम और काव्यार्थ भावना से रहित पुरुषों के लिए केवल पुस्तक से गन्धर्व विद्या को सीख लेने वाले अनभ्यासी ( नव सिखिआ ) गायकों के लिए स्वरश्रुति आदि के रहस्य के समान वह प्रतीयमान अर्थ अज्ञात ही रहता है।

**एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति प्रतिपादयति—**

**"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥८॥"**

साम्प्रतं व्यङ्ग्यार्थस्यैव प्राधान्यं वक्तुं प्रारभते—एवमित्यादिना। एवं = प्रोक्तप्रकारेण, वाच्यव्यतिरेकिणः = वाच्याद्भिन्नस्य, व्यङ्ग्यस्य=प्रतीयमानार्थस्य, सद्भावं = स्थितिम्, प्रतिपाद्य = वर्णयित्वा, तस्यैव = प्रतीयमानस्यैवार्थस्य, प्राधान्यं = मुख्यत्वम्, प्रतिपादयति = कथयति ।

अन्वयः—सः, अर्थः, तद्व्यक्तिसामर्थ्ययोगी, कश्चन, शब्दश्च, तौ, शब्दार्थौ, महाकवेः, यत्नतः, प्रत्यभिज्ञेयौ ।

सोऽर्थ इति । सोऽर्थः = प्रतीयमानोऽर्थः, च = पुनः, तद्व्यक्तिसामर्थ्ययोगी = तस्य व्यङ्ग्यस्य व्यक्तिसामर्थ्येन = व्यञ्जनशक्त्या यः योगः सम्बन्धः सोऽस्यास्तीति तद्व्यक्तिसामर्थ्ययोगी, शब्दः, कश्चन = विरलः, न सर्वः । तौ शब्दार्थौ महाकवेः = महाकविना यत्नतः = यत्नेन प्रत्यभिज्ञेयौ = निरन्तरमनुसन्धेयावित्यर्थः ॥ ८ ॥

इस प्रकार वाच्यार्थ से भिन्न व्यंग्य की सत्ता को सिद्ध करके प्राधान्य ( भी ) उसी का है यह दिखलाते हैं—

वह ( प्रतीयमान ) अर्थ और उसकी अभिव्यक्ति में समर्थ विशेष शब्द इन

दोनों को भली प्रकार पहिचानने का प्रयत्न महाकवि को ( जो महाकवि बनना चाहे उसको ) करना चाहिए ॥८॥

स व्यङ्ग्योऽर्थस्तत्प्रकाशनसामर्थ्ययोगी शब्दश्च कश्चन, न सर्वः। तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ। व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण।

कारिकार्थमेव विशदीकरोति वृत्तिकारः—स व्यङ्ग्योऽर्थ इत्यादिना। अयम्भावः—व्यञ्जनया प्रतिपाद्यमानो योऽर्थः सः, तत्प्रकाशनपरश्च यः शब्दः स सर्व एव न व्यञ्जकः, किन्तु विरल एव। महाकवीनां हि व्यङ्ग्यव्यञ्जकाभ्यां सुष्ठु प्रयुक्ताभ्यामेव महाकवित्वलाभः, वाच्यवाचकरचनामात्रेण = शब्दार्थप्रतिपादनमात्रेण न महाकवयो गण्यन्त इति तात्पर्य्यम्।

वह व्यंग्य अर्थ और उसको अभिव्यक्त करने की शक्ति से युक्त कोई विशेष शब्द ही है। शब्दमात्र सारे शब्द नहीं। महाकवि बनने के अभिलाषी को वही शब्द और अर्थ भली प्रकार पहिचानने चाहिये। व्यंग्य और व्यंजक के सुन्दर प्रयोग से ही महाकवियों को महाकवि पद की प्राप्ति होती है, वाच्य-वाचक-रचना मात्र से नहीं।

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—

"आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥ ९ ॥

ध्वनिमार्गे व्यङ्ग्यव्यञ्जनयोः प्राधान्येऽपि वाच्यवाचकयोः प्रथमोपादानस्य किं प्रयोजनमित्याशङ्कां निराकरोति—इदानीमित्यादिना। स्फुटा व्याख्या।

अन्वयः—यथा, आलोकार्थी, जनः, दीपशिखायां, तदुपायतया यत्नवान्, तद्वत्, तद्, आदृतः, वाच्ये, अर्थे ( यत्नवान् भवति )।

आलोकार्थीति। यथा = येन प्रकारेण, आलोकार्थी = प्रकाशार्थी, जनः = मनुष्यः, तदुपायतया = स्वच्छवर्तिकातैलादि-दानाद्युपायेन, दीपशिखायाम् = दीपकलिकायाम्, यत्नवान् = प्रयत्नशीलो भवति = पुनः पुनः दीपकलिकायाः स्तृणखण्डेन प्रवर्धने निरन्तरासक्तो भवतीति तात्पर्य्यम्। तथैव, तद् = व्यङ्ग्यं प्रति, आदृतः = आदरवान्, व्यङ्ग्यार्थे बुभुत्सुर्जनः, वाच्येऽर्थे यत्नवान् भवतीत्यर्थः।

अब व्यंग्य और व्यंजक के प्राधान्य होते हुये भी जो पहिले वाच्य वाचक ही को कविलोग ग्रहण करते हैं वह भी युक्त ही है इस बात को यह कहते हैं—

जिस प्रकार प्रकाश चाहने वाला मनुष्य दीपक की शिखा में यत्नवान् होता है उसी प्रकार व्यंग्य अर्थ के प्रति आदरवान् पुरुष भी वाच्यार्थ में यत्नवान् होता है ॥ ९ ॥

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायतया। न हि दीपशिखामन्तरेणालोकः सम्भवति। तद्वद्व्यङ्ग्यमर्थं प्रत्याहृतो जनो वाच्येऽर्थे यत्नवान् भवति।

कारिकार्थमेव विवृणोति—यथा ह्यालोकार्थीत्यादिना। स्फुटा व्याख्या। अत्रेदं तात्पर्य्यम्—यथा प्रकाशार्थी जनः प्रथमदीपशिखायां तैलादिदानाद्युपायद्वारा प्रयत्नशीलो भवति, दीपशिखामन्तरेणालोकासम्भवात् तथैव व्यङ्ग्यार्थप्रकाशनपरो जनोऽपि प्रथमं वाच्यवाचकज्ञाने प्रयत्नशीलो भवेत्, वाच्य-वाचकज्ञानमन्तरा व्यङ्ग्यव्यञ्जकज्ञानं सर्वथाऽसम्भवमिति।

[ आवश्यकीय—'यथा' से 'यत्नवान् भवति' तक का अर्थ इसी से गतार्थ होगया ]

अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं प्रति व्यापारो दर्शितः।

प्रकृतोपयोगमाह—अनेनेत्यादिना। अनेन = व्यङ्ग्यार्थबोधे वाच्यार्थबोधकारणप्रदर्शनेन, प्रतिपादकस्य = वक्तुः, कवेः, व्यङ्ग्यमर्थं प्रति, व्यापारः = यत्नः, दर्शितः = परमावश्यकत्वेन वर्णित इति यावत्।

इस से प्रतिपादक [ वक्ता ] कवि का व्यंग्य अर्थ के प्रति व्यापार दिखाया।

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

"यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः ॥१०॥

अन्वयः—यथा, वाक्यार्थः, पदार्थद्वारेण, सम्प्रतीयते, तद्वत्, तस्य, वस्तुनः, वाच्यार्थपूर्विका, प्रतिपत्।

यथा पदार्थद्वारेणेति। यथा वाक्यार्थः, पदार्थद्वारेण = पदार्थबोधप्रतीतिपूर्वकं, सम्प्रतीयते = वाक्यार्थबोधो भवति, तद्वत् = तथैव, तस्य वस्तुनः = व्यङ्ग्यार्थवस्तुनः, वाच्यार्थपूर्विका = वाच्यार्थबोधप्रतीतिपुरस्सरा, प्रतिपत् = बोधः

सञ्जायते। यथा वाक्यार्थबोधे प्रथमं पदार्थबोधस्य कारणता तथैव व्यङ्ग्यार्थबोधे वाच्यार्थबोधस्य कारणत्वमिति तात्पर्य्यम् ॥१०॥

अब प्रतिपाद्य ( वाच्यार्थ ) के भी उस ( उस व्यंग बोधन के प्रति ) व्यापार को दिखलाने के लिए कहते हैं—

जैसे पदार्थ द्वारा ( पदार्थों की उपस्थिति होने के बाद पदार्थ संसर्गरूप ) वाच्यार्थ की प्रतीति होती है उसी प्रकार उस ( व्यंग्य ) अर्थ की प्रतीति वाच्यार्थ के ज्ञान पूर्वक होती है ॥ १० ॥

यथा हि पदार्थद्वारेण वाक्यार्थावगमः, तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः।

व्याख्यातप्रायमेतत्।

जैसे कि पदार्थ द्वारा वाच्यार्थ का बोध होता है उसी प्रकार वाच्यार्थ की प्रतीति पूर्वक व्यंग्यार्थ की प्रतीति होती है।

इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्येत तथा दर्शयति—

"स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥११॥"

अन्वयः—स्पष्ट एव ॥ ११ ॥

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया।

यथा = येन प्रकारेण, स्वसामर्थ्यवशेनैव = स्वस्य पदार्थस्य सामर्थ्यवशेन आकांक्षा-योग्यता सत्तितात्पर्य्यवशेन, वाक्यार्थम् = वाक्यबोधम्, प्रथयन्नपि = प्रकाशयन्नपि, व्यापारनिष्पत्तौ = "व्यापारो भावना सैवोत्पादना सैव च क्रिया" इत्युक्त लक्षणस्य व्यापारस्य = क्रियायाः वाक्यार्थबोधानुकूलक्रियाया इत्यर्थः, निष्पत्तौ = सिद्धौ, पदार्थः, विभक्ततया = पृथक्त्वेन, न, विभाव्यते = न ज्ञायते, तद्वदिति अग्रिमकारिकया सम्बन्धः ॥११॥

कारिकार्थमेव विशदीकरोति—यथेत्यादिना। स्फुटोऽर्थः।

अब व्यंग्यार्थ की प्रतीति वाच्यार्थ के बाद होनेपर पर भी व्यंग्यार्थ का प्राधान्य जिससे लुप्त न हो वह प्रकार दिखलाते हैं—

जैसे अपनी सामर्थ्य [ योग्यता, आकांक्षा, आसत्ति, रूप ] से वाच्यार्थ को प्रकाशित करने पर भी व्यापार के पूर्ण हो जाने पर पदार्थ विभक्त रूप में अलग प्रतीत नहीं होते ॥ ११ ॥

"तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥१२॥

अन्वयः—तद्वत्, वाच्यार्थविमुखात्मनाम्, सचेतसाम्, तत्त्वार्थदर्शिन्यां, बुद्धौ, सः, अर्थः, झटिति, एव, अवभासते ।

दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकं वक्तुं प्रारभते—तद्वत्सचेतसामिति । तद्वत् = पदपदार्थवत्, वाच्यार्थविमुखात्मनाम् = वाच्यो योऽर्थस्तस्माद् विमुखः, चमत्काररहित्येनासन्तुष्टः आत्मा हृदयं येषां ते तेषाम्, सचेतसाम् = सहृदयानाम्, तत्त्वार्थदर्शिन्याम् = सारानुसन्धानशीलायां, बुद्धौ = मतौ, सोऽर्थः = प्रतीयमानोऽर्थः, झटित्येव = शीघ्रमेव वाच्यार्थप्रतीतिसमकालमेवेति यावत्, अवभासते = प्रतीतिविषयो भवतीति तात्पर्य्यम् ।

अत्राऽयं निष्कर्षः—तद्धर्मावच्छिन्नतद्विषयताकशालिशाब्दबुद्धित्वावच्छेदकावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानाधीनतद्धर्मावच्छिन्नतद्विषयताकोपस्थितिरेव हेतुरिति शाब्दिकसिद्धान्तस्य जागरूकत्वेन पदार्थोपस्थितिर्ह्याकाङ्क्षायोग्यतासत्तितात्पर्य्यप्रतीतिसम्वलिता सती वाक्यार्थबोधं प्रथयन्ती यथा स्वयं विद्यमानाप्यविभक्ततया मुख्यत्वन्नावलम्बते तथैव व्यङ्ग्यार्थप्रतीतिं जनयन्नपि वाच्योऽर्थः पृथङ् नावभासते ।

उसी प्रकार वाच्यार्थ से विमुख आत्मा वाले सहृदयों की तत्त्वार्थ बताने वाली बुद्धि में वह प्रतीयमान अर्थ शीघ्र ही प्रतीति हो जाता है ॥ १२ ॥

ननु विलक्षणार्थावबोधने सचेतसां बुद्धेरेव महामहिमतया काव्ये न कोऽपि विशेष इत्याशङ्कामपाकर्तुं ब्रवीति—

यत्रावभासते ।

यत्र = काव्ये, सोऽर्थः प्रतीयमानोऽर्थ इति यावत् वाच्यप्रतीतिसहकारितया,

अवभासते = स्फुटं दीप्यते। एतेन काव्यस्यापि महत्त्वन्न केवलं बुद्धेरेव महत्त्वमिति तात्पर्य्यम्। एतेन वाच्यप्रतीत्योर्घटप्रदीपन्यायेन समकालिकत्वमेव व्यज्यते।

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उप-योजयन्नाह।

एवं = प्रोक्तप्रकारेण, वाच्यव्यतिरेकिणः = वाच्यादत्यन्तं विभिन्नस्य, व्यङ्ग्य-स्यार्थस्य = प्रतीयमानस्यार्थस्य, सद्भावं = सत्तां स्थितिमिति यावत्, प्रतिपाद्य = कथयित्वा, प्रकृते = ध्वनिनिरूपणावसरे उपयोजयन् = उपयोगं प्रतिपादयन् आह = ब्रवीति।

इस प्रकार वाच्यार्थ से अतिरिक्त व्यंग्यार्थ की सत्ता तथा प्राधान्य ( सद्भाव शब्द की स-सत्ता तथा साधुभाव अर्थात् प्राधान्य दोनों हैं ) प्रतिपादन करके प्रकृत में उसका उपयोग दिखलाते हुये कहते हैं।

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥१३॥

अन्वयः—यत्र, उपसर्जनीकृतस्वार्थौ, अर्थः, शब्दो वा तम्, अर्थम्, व्यङ्क्तः, सः, काव्यविशेषः, ध्वनिः, इति, सूरिभिः, कथितः।

यत्र = काव्ये, उपसर्जनीकृतस्वार्थौ = अत्र स्वशब्द आत्मवाची, स्वं चासावर्थश्चेति स्वार्थौ, उपसर्जनीकृतौ गुणीभूतौ स्वार्थौ याभ्यां तौ, अर्थः = गुणीकृतात्मा, शब्दश्च = गुणीकृताभिधेयः, तमर्थम् = सहृदयहृदयानन्दकरं व्यङ्ग्यार्थम्, व्यङ्क्तः = द्योतयतः, स काव्यविशेषः, ध्वनिः = उत्तमं काव्यम्, इति सूरिभिः = ध्वनिमर्मज्ञपण्डितैः, कथितः = स्वकीयहृदयेन स्वीकृत इति यावत्। इह व्यङ्क्त इति विपूर्वकादञ्जधातोर्लटि प्रथमपुरुषस्य द्विवचने रूपम्। ननु अर्थ इति शब्द इत्येकवचनान्तकर्तृयोगे द्वयोरेकतरस्य कथं व्यञ्जकत्वमिति चेन्न "शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः। एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता।" इति दर्पणोक्तदिशा द्वयोरपि व्यञ्जकत्वाक्षतेः। एतेन भट्टनायकेन प्रदर्शिता व्यङ्क्त इति द्विवचनासङ्गतिः प्रत्युक्ता। अत्र किल येषान्नये शब्दमात्रस्य काव्यत्वाङ्गीकारस्तन्नये शब्द एव व्यङ्ग्यवैशिष्ट्यम्। येषां नये तु विच्छित्तिविशेषाबाधकशब्दार्थयोः काव्यत्वमिति सिद्धान्तस्तन्नये तु—

"व्यङ्ग्यविशिष्टशब्दार्थोभयत्वमेव ध्वनेर्लक्षणम् वैशिष्ट्यञ्च स्वविषयकप्रतीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयकत्वस्वव्यञ्जकघटितत्वसम्बन्धाभ्याम् ।

यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति ।

व्याख्यातप्रायमेतत् ।

जहाँ पर शब्द और अर्थ अपने अर्थ को छोड़ कर उस प्रतीयमान अर्थ को बतलाते हैं उस काव्यविशेष को विद्वानों ने ध्वनि कहा है ॥ १३ ॥

अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषयक इति दर्शितम् ।

एवं ध्वनेर्लक्षणं प्रदर्श्य ध्वन्यभाववादिनां मतं खण्डयितुं प्रथमं ध्वनेरलङ्कारेष्वनन्तर्भावं ब्रवीति—अनेनेत्यादिना । अनेन = व्यङ्ग्यस्य प्राधान्यप्रदर्शनेन, शब्दार्थयोश्च गौणत्वप्रदर्शनेन च, वाच्यवाचकचारुत्वहेतुभ्यः = वाच्यमात्रचारुत्वोत्कर्षहेतुभ्यः उपमादिभ्यः, वाचकमात्रचारुत्वोत्कर्ष हेतुभ्यः, अनुप्रासादिभ्यश्च ध्वनेः = शब्दार्थातिशायिव्यङ्ग्योत्कर्षशालिध्वनेः, विभक्त एव = विभिन्न एव विषयः इति दर्शितम् ।

इस कथन से शब्दार्थ के सौन्दर्य के कारण उपमा आदि अर्थालंकार और अनुप्रासादि शब्दालंकारों से भिन्न ही ध्वनि का विषय है, यह दिखलाया गया है ।

यदप्युक्तम्—"प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति" इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् । ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः ।

ध्वन्यभाववादिनां द्वितीयविकल्पं खण्डयितुमारभते—यदप्युक्तमिति । यत् केनाप्युक्तम्—"प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति" इति, तदपि = तत्कथनमपि अयुक्तम् = नितरामसङ्गतम्, यतः = यस्माद्धेतोः, लक्षणकृतामेव = लक्षणविधायिनामेव, सः = व्यङ्ग्योऽर्थः, केवलं, न = नैव, प्रसिद्धः = प्रसिद्धिं नीतः, लक्ष्ये तु = ध्वनिविषयकलक्ष्ये तु परीक्ष्यमाणे = सम्यगालोच्यमाने, स एव = ध्वनिरेव, सहृदयहृदयाह्लादकारि = सहृदयानां हृदयस्यप्रमोदविधायि, काव्यतत्वम् = काव्यस्य सारम् । ततः = ध्वनेः, अन्यत् = अतिरिक्तं, चित्रमेव =

चित्रकाव्यमेव, इत्यग्रे = तृतीयोद्योते–"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितम्। द्विधा काव्यं, ततोऽन्यद् यद् तच्चित्रमभिधीयते" इति कारिकाव्याख्यानावसरे दर्शयिष्यामः = पूर्णं व्यवस्थापयिष्याम इति भावः।

अत्रेदं तात्पर्य्यम्—लक्षणविधानं हि लक्ष्यानुसारमेव भवतीति लक्ष्याप्रसिद्धिरेव ध्वनिसिद्धौ पूर्णं बाधिका न तु लक्षणाप्रसिद्धिः। काव्यजीवितभूतं ध्वनिलक्ष्यं तु महाभारतादौ बहुशः प्रसिद्धम्, इति लक्षणविधायिनामेव दोषः। अन्धस्य दृष्टिदोषे स्थाणोः कोऽपराधः ?। लक्षणकारिणां हि लक्षणकरणे न तादृशी बुद्धिमत्ता यादृशी लक्ष्यपरीक्षणकारिणामिति लक्ष्यस्य परीक्षण एव महद्विवेकस्यावश्यकतेति प्रोक्तमार्गानुसारिणो ध्वन्यभाववादिनो महती मूर्खता।

जो किसी ने कहा है कि प्रसिद्ध शब्दार्थ गुण अलंकार आदि से अतिरिक्त मार्ग के काव्यत्व ही नहीं है एतावता ध्वनि कोई वस्तु नहीं है। वह भी ठीक नहीं है। क्योंकि वह केवल लक्षणकारों को प्रसिद्ध नहीं है, परन्तु लक्ष्य ( रामायण महाभारत प्रभृति ) की परीक्षा हो जाने पर तो सहृदयों के हृदय को खुश करने वाला काव्य का सारभूत ध्वनि है। उस से भिन्न काव्य चित्रकाव्य ही है। यह हम आगे दिखलावेंगे।

यदप्युक्तम्—"कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भावः" इति, तदप्यसमीचीनम्। यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः। वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः, न तु तदेकरूप एवेति प्रतिपादयिष्यमाणत्वात्।

ध्वन्यभाववादिनां तृतीयविकल्पपक्षं प्रदर्श्य खण्डयितुं प्रारभते—यदप्युक्तमित्यादिना। यत् केनाप्युक्तम्—कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भाव इति, तदपि = तत्कथनमपि, असमीचीनम् = नैव साधु, यतः = यस्माद्धेतोः, वाच्यवाचकमात्राश्रयिणि = शब्दार्थशरीरावलम्बिनि, प्रस्थाने = प्रतिष्ठाने परम्परया विहरन्ति येन मार्गेण तत् प्रस्थानम् तस्मिन्, शब्दार्थगुणालङ्कारादि प्राचीनपद्धतावित्यर्थः व्यङ्ग्यव्यञ्जकसमाश्रयेण = व्यङ्ग्यव्यञ्जकयोः समासक्त्या, व्यवस्थितस्य = निर्णीतस्य, ध्वनेः, कथमन्तर्भावः।

अत्रेदमाकूतम्—ये च गुणालङ्कारादयः केवलं शब्दार्थावेवालम्ब्य तिष्ठन्तस्तेषु शब्दार्थातिरिक्तबहुविधव्यङ्ग्यव्यञ्जकत्वविच्छित्तिविशेषशालिनो ध्वनेः कथमपि विभिन्नाश्रयत्वेन नान्तर्भावो भवितुमर्हं इति ।

तत्र कारणं प्रदर्शयति—वाच्यवाचकेत्यादि । वाच्यवाचकचारुत्वहेतवः =शब्दार्थसौन्दर्य्यकारणभूता अनुप्रासोपमादयः, हि=यतः, तस्य=ध्वनेः, अङ्गभूताः उपकारका अङ्गत्वेन सहायका इति यावत्, न तु=नैव, तदेकरूप एव =ध्वनिरेव, इति=एवं, प्रतिपादयिष्यमाणत्वात्=कथयिष्यमाणत्वात् ।

जो किसी ने यह कहा है कि—रमणीकता का अतिक्रमण नहीं करता है तो उक्त ( गुण अलङ्कारादि ) चारुत्व हेतुओं में ही उस ध्वनि का अन्तर्भाव हो जाता है, वह भी ठीक नहीं है । क्योंकि केवल वाच्य वाचक ( शब्दार्थ ) भाव पर आश्रित मार्ग के अन्दर व्यंग्य-व्यंजक भाव पर आश्रित ध्वनि का अन्तरभाव कैसे हो सकता है । वाच्य-वाचक ( अर्थ और शब्द ) के चारुत्व हेतु ( उपमादि तथा अनुप्रासादि अलंकार तो उस ध्वनि के अंग हैं और वह ध्वनि तो अंगी होकर प्रधान रूप है, यह आगे प्रतिपादन करेंगे ।

परिकरश्लोकश्चाऽत्र—

'व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ? ॥

अत्र=ध्वनेः, उपमानुप्रासादेश्च भिन्नविषये, परिकरश्लोकः=परिकरोति प्रकृतविषयं स्फुटीकरोति यः श्लोकः स परिकरश्लोकः ( फुटकरश्लोक ) इति लोके कथ्यते ।

व्यङ्ग्येति । व्यङ्ग्यव्यञ्जकयोः यः सम्बन्धस्तन्निबन्धनतया तन्मूलकतया विराजमानस्येति शेषः, ध्वनेः, वाच्यवाचकचारुत्वहेतुषु=उपमाद्यलङ्कारेषु अन्तःपातिता=अन्तर्भावः, कुतः=कथं स्यादिति सारांशः ।

इस सम्बन्ध में परिकर ( फुटकर ) श्लोक भी हैं—

ध्वनि के व्यंग्य-व्यंजक भाव सम्बन्धी मूलक होने से वाच्य-वाचक के सौन्दर्य के कारण उन अलङ्कारों में अन्तर्भाव कैसे हो सकता है ? ॥

**ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः स नाम माभूद् ध्वने विषयः। यत्र तु प्रतीतिरस्ति, यथा समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्ति पर्यायोक्तापह्नुति-दीपक-सङ्करालङ्कारादौ, तत्र ध्वनेरन्तर्भावो भविष्य तीत्यादि निराकर्तुमभिहितम्—"उपसर्जनीकृतस्वार्थौ" इति।**

सन्दिह्यते नन्वित्यादिना। यत्र = उपमालङ्कारे, प्रतीयमानस्य = व्यङ्ग्यस्य अर्थस्य, वैशद्येन = स्फुटतया, अप्रतीतिः=प्रतीतिर्नास्ति स्फुटावभासो नेति तात्पर्यम्, तत्र, ध्वनेर्विषयः = ध्वनिस्थापनम्, माभूत् = न स्यात्। यत्र तु = समासोक्त्यादिषु प्रतीतिः = ध्वनिविषयस्यावभासः, अस्ति = विद्यते प्रतीतिस्थलानि निर्दिशति—यथा समासोक्त्येति। समासोक्तिः, आक्षेपः, अनुक्तनिमित्तविशेषोक्तिः, पर्यायोक्तम्, अपह्नुतिः, दीपकम्, संकरः, एतेऽलङ्काराः ध्वनिप्रतीतिविषयकाः। तत्र ध्वनेः अन्तर्भावो भविष्यति, कथन्नान्तर्भाव इत्याक्षेपः—इत्यादि शङ्कां निराकर्तुम् = अपा कर्तुम्, अभिहितम् = कथितम् कारिकायाम्, "उपसर्जनीकृतस्वार्थौ" इति।

यदि कोई यह कहे कि [ ननु ] जहाँ प्रतीयमान ( व्यंग्य ) की स्पष्ट प्रतीति नहीं हो, वह ध्वनिका विषय नहीं है। और जहाँ स्पष्टतया प्रतीति होती है जैसे— समासोक्ति, आक्षेप, अनुक्तनिमित्त विशेषोक्ति, पर्यायोक्त, अपह्नुति, दीपक, संकर अलंकारादि में, वहाँ ध्वनि का अन्तरभाव होगा। इस मत के खण्डन के लिए कहा है कि—"उपसर्जनीकृतस्वार्थौ"।

**अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरम भिव्यनक्ति स ध्वनिरिति। तेषु कथं तस्यान्तर्भावः। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतत्समासोक्त्यादिष्वस्ति।**

कारिकांशमेव व्याख्यातुकामस्तमेवार्थं द्रढयति—अर्थ इत्यादिना। "उप सर्जनीकृतस्वार्थौ" इत्यत्र उपसर्जनीकृत इत्यस्य व्याख्यानं गुणीकृत इति स्वशब्दार्थ आत्मा, तदेवोच्यते—अर्थो गुणीकृतात्मा = अर्थः वाच्यार्थः गुणीकृतः गौणत्व मापन्नः आत्मा यस्य सः, गुणीकृतः अभिधेयः वाच्यार्थो यस्य स शब्दो वा यत्र यस्मिन्, अर्थान्तरम् = अन्यमर्थम्, अभिव्यनक्ति = प्रकाशयति, स ध्वनिरिति कारिकार्थः। तेषु = समासोक्त्यादिषु, तस्य = ध्वनेः, कथमन्तर्भावः = गतार्थत्वम्। हि = यतः, व्यङ्ग्यस्य यत्र प्राधान्यं तत्रैव ध्वनिः इति सिद्धान्तः, एतत् = व्यङ्ग्य

प्राधान्यम्, समासोक्त्यादिषु अलङ्कारेषु, न चास्ति = नैवास्ति, अत्र एवार्थे च शब्दः।

अत्रायं निष्कर्षः—अन्तरेण व्यङ्ग्यप्राधान्यं ध्वनेः स्थित्यभावे निश्चिते समासोक्त्यादिषु व्यङ्ग्यं हि गौणरूपेण वाच्यार्थमुपस्करोति इति व्यङ्ग्यस्याप्राधान्ये ध्वनेस्तेष्वलङ्कारेषु कथमन्तर्भावसम्भावना।

जहाँ अर्थ या शब्द अपने अर्थ को गुणीभूत कर के अर्थान्तर [ प्रतीयमान ] को अभिव्यक्त करता है, वह ध्वनि है। उन [ समासोक्ति आदि अलंकारों ] में उस [ ध्वनि ] का अन्तरभाव कैसे हो सकता है ?। व्यंग्यार्थ की प्रधानता में ध्वनि काव्य होता है। और समासोक्ति आदि में यह [ व्यंग्य का ] प्राधान्य नहीं है।

समासोक्तौ तावत्—
'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥'

समासोक्तौ ध्वनेरनन्तर्भावं निर्देष्टुकामस्तदुदाहरणं प्रदर्शयति—समासोक्ताविति। समासोक्तिलक्षणं दर्पणकारेणाभिहितम्—

'समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥'

उपोढरागेणेति। पद्यमिदं वस्तुतः सायंसन्ध्यावर्णनपरं समासोक्तिमुखेन तु नायिकानायिकप्रेमवर्णनपरम्। तत्र प्रथमं सन्ध्यां वर्णयति—उपोढरागेण = उपोढः = धृतः, रागः सन्ध्यासामयिकलौहित्यं येन सः तेन, शशिना = चन्द्रमसा, विलोलतारकम् = विलोला उदयवेगेन चञ्चलाः तारकाः नक्षत्राणि यत्र तत्, निशामुखम् = निशाया रात्रेः मुखम् प्रारम्भम्, तथा = तेन प्रकारेण शीघ्रमिति यावत्, गृहीतम् = प्रकाशितम्, यथा = येन प्रकारेण, पुरोऽपि = पूर्वस्यां दिशि, रागात् = उदयकालीनलौहित्यात्, गलितं = नष्टम्, समस्तम् = सकलम्, तिमिरांशुकम् = अन्धकारसमूहम्, तया = निशया ( करणभूतया ) रात्र्या न लक्षितम् = नोपलक्षितम्।

अथ नायिकापक्षे व्याख्यानम्—उपोढरागेण = प्राप्तप्रेम्णा, केनापि नायकेन, विलोलतारकम् = चञ्चलकनीनिकम्, निशामुखम् = रात्रिरूपायाः कस्याश्चित् नायिकाया मुखं वदनम्, तथा गृहीतम् = चुम्बितम्, यथा पुरोऽपि = अग्रेऽपि

रागात्, प्रेमोल्लासात्, गलितम् अधःपतितम्, तिमिरांशुकम् = तिमिरमिवांशुकम् कृष्णवस्त्रम्, तया = नायिकया न लक्षितं = नावलोकितम्। अत्र सन्ध्यावर्णने प्रस्तुते निशाशशिनोः कार्य्यलिङ्गविशेषणसाम्यात् अप्रस्तुतस्य नायिकामुखचुम्बनव्यवहारस्य निशाशशिनोः समारोपात् समासोक्तिरलङ्कारः। अत्रोदाहरणे व्यङ्ग्यार्थस्य सत्त्वेऽपि वाच्यस्यैवोपस्कारकत्वेन गुणीभावाद् व्यङ्ग्यस्य नैव प्राधान्यम्—इति न ध्वनेर्विषयः।

समासोक्ति में तो—

सन्ध्याकालीन आरुण्य को धारण किये हुये (दूसरे पक्ष में प्रेमोत्पन्न) शशी (अर्थात् चन्द्र पक्ष में पुल्लिंग शशी पद से व्यंग्य नायक) ने निशा (रात्रि, पक्षान्तर में स्त्रीलिंग निशा शब्द से नायिका) के चंचल तारों से युक्त [तारक नक्षत्र, पक्षान्तर में नायिका के चंचल कनीनिका वाले मुख] प्रारम्भिक (अग्रभाग प्रदोष) काल (अन्यत्र आनन) को [चुम्बन करने लिए] इस प्रकार ग्रहण करने के लिए राग [सन्ध्याकालीन अरुण प्रकाश, पक्षान्तर में नायक के स्पर्श से समुद्भूत अनुरागातिशय] के कारण सारा तिमिर रूप वस्त्र गिर जाने पर भी उसे [निशा तथा नायिका को] दिखलाई नहीं दिया।

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते। समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात्।

इत्यादौ = उक्तोदाहरणे, व्यङ्ग्येन, अनुगतम् = उपस्कृतम्, वाच्यमेव = वाच्यार्थ एव, प्राधान्येन = मुख्यत्वेन, प्रतीयते = अवगम्यते। समारोपितौ यौ निशाशशिनोर्नायिकानायकव्यवहारौ तयोः, निशाशशिनोरेव = रात्रिचन्द्रमसोरेव, वाक्यार्थत्वात् = प्रधानतया वाक्यार्थबोधविषयत्वात्।

अत्रायं सारांशः—यद्यपि निशाशशिशब्दाभ्यां श्लिष्टविशेषणसाम्येन नायकयोः शृङ्गाररसस्य व्यङ्ग्यस्यापि प्रतीतिरस्ति तथापि व्यवहारसमारोपादारोपितनायिकानायकव्यवहारौ निशाशशिनावेव वाच्यौ प्रधानतया वाक्यार्थबोधजनकाविति व्यङ्ग्यस्य गुणीभावान्नैव ध्वनेर्विषय इति। ननु नायिका च नायकश्चेति विग्रहे सत्येकशेषसूत्रे नायिकानायकेति पदं सर्वथानुपपन्नमिति चेन्न, नायिकया सहितः नायक इति शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदलोपिसमासेन तत्सिद्धेः। नायिकाया नायके यो

व्यवहारः स निशायाम्, नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति व्याख्यानेन च तत्सिद्धेः ।

यहाँ समारोपित नायक नायिका व्यवहार से युक्त शशी और निशा के ही वाच्यार्थ होने से व्यंग्य से अनुगत वाच्य ही प्रधानतया प्रतीत होता है [ अर्थात् व्यंग्य का प्राधान्य न होने से यहाँ ध्वनि नहीं है, अतः ध्वनि का समासोक्ति में अन्तर्भाव नहीं हो सकता है ।

**आक्षेपेऽपि व्यङ्ग्यविशेषाक्षेपिणो वाच्यस्यैव चारुत्वम् । प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते ।**

आक्षेपेऽपि = आक्षेपालङ्कारेऽपि—

वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥

दर्पणसम्मते लक्षणे—

'विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् ? ।
दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥

एतस्मिन्नाक्षेपोदाहरणेऽपि दूत्या नायकं प्रत्युक्तौ नायिकाया नायकविरहे रात्र्यपयापनं दुःशकमित्यपि प्रसिद्धत्वरूपो यो व्यङ्ग्यः प्रतीयते सोऽपि "भणितेन किम्" इति कथनस्यैव निषेधद्वारा वाच्यस्यैवोपस्कारकत्वेन गुणीभूत इति सर्वथा व्यङ्ग्यस्याप्राधान्यम् । व्यङ्ग्यविशेषाक्षेपिणः व्यङ्ग्यविशेषमाक्षिपतः, वाच्यस्यैव = वाच्यार्थस्यैव, चारुत्वम् = सौन्दर्य्यम् । प्राधान्येन = प्रधानतया, आक्षेपोक्तिसामर्थ्यादेव, "भणितेन किम्" इति य आक्षेपस्तदुक्तिसामर्थ्यादेव, वाक्यार्थः = नायकं विना नायिकाया रात्रियापनं सर्वथा दुःसहमिति वाक्यार्थबोधः ज्ञायते = प्रतीयते ।

इस प्रकार आक्षेपालंकार में भी व्यंग्य विशेषका आक्षेप कराने वाले होने पर भी वाच्य का ही चारुत्व है । क्योंकि आक्षेप वचन के सामर्थ्य से ही प्रधानतः वाच्यार्थ प्रतीत होता है । क्योंकि वहाँ विशेष की बोधन की इच्छा से शब्दोपात्त प्रतिषेध रूप जो आक्षेप है ।

**तत्र शब्दोपारूढरूपो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः**

स एव व्यङ्ग्यविशेषमाक्षिपन् मुख्यं काव्यशरीरम्।

चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा। यथा—

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः।
अहो दैवगतिः कीदृक् तथापि न समागमः॥ १६॥

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा।

तत्रेति। तत्र = आक्षेपालङ्कारे, शब्दोपारूढरूपः = शब्दात् उपारूढं निष्पन्नं रूपं यस्य सः, विशेषाभिधानेच्छया = विशेषकथनाभिप्रायेण, प्रतिषेधरूपः = निषेधरूपः, य आक्षेपः, स एव = निषेधात्मकवाच्यार्थ एव, व्यङ्ग्यविशेषम् = विशिष्टव्यङ्ग्यम्, आक्षिपन् = अध्याहरन्, काव्यशरीरम् = काव्यस्य शब्दार्थमयस्य मुख्यं प्रधानम्, शरीरम्, अस्ति। आक्षेपे हि किल इष्टनिषेधेन वाच्यो वाच्यमानोऽपि स्वपुष्टयेऽङ्गभूतमेव व्यङ्ग्यमाक्षिपति, इति तत्रापि व्यङ्ग्यगुणीभूतमेव लक्ष्यत इति तत्र कथमपि ध्वनेर्नान्तर्भाव इति सारांशः।

वाच्यस्यैव प्राधान्ये हेतुं प्रदर्शयति—चारुत्वोत्कर्षेति। हि = यतः, वाच्यव्यङ्ग्ययोः = वाच्यस्य व्यङ्ग्यस्य च, प्राधान्यविवक्षा = प्रधानत्वस्य वक्तुमीहा, चारुत्वोत्कर्षनिबन्धना = सौन्दर्यातिशयमूला, अर्थात् वाच्ये यदा चारुत्वोत्कर्षस्तदा वाच्यस्य प्राधान्यम्, व्यङ्ग्ये यदा चारुत्वोत्कर्षस्तदा व्यङ्ग्यस्य प्राधान्यम्, इति वाच्यव्यङ्ग्ययोः समे प्राधान्ये। यत्र व्यङ्ग्यापेक्षया वाच्यस्यैव चारुत्वोत्कर्षाधायकत्वं तत्र कुतो ध्वनेर्विषय इति सारांशः।

तत्र दृष्टान्तमाह—यथा—अनुरागवतीति। अत्र श्लोके तथापि-शब्देन यद्यपि-शब्दस्याध्याहारः कार्य्यः। यद्यपि, सन्ध्या ( लिङ्गसाम्यात् काचिन्नायिका ) अनुरागवती = रक्तवर्णवती, ( नायिकापक्षेऽनुरक्ता प्रेमवतीत्यर्थः ) दिवसः = दिनम् ( कश्चिन्नायकश्च ) तत्पुरस्सरः = तस्याः सन्ध्याया अग्रगामी, ( नायकपक्षे सन्मुखश्च ) अस्तीति शेषः। तथापि = समागमसम्भवेऽपि, न समागमः = न सम्मेलनम्, ( पक्षे सम्भोगश्च ) न जायते। अहो = आश्चर्यम्, कीदृक् = विलक्षणा, दैवगतिः = विधिचरित्रम्। अत्राभिधायाः प्रकृतार्थे नियन्त्रणात् द्वितीयार्थस्य व्यङ्ग्यतया न श्लेषसम्भवः, किन्तु श्लिष्टविशेषणमर्यादया सन्ध्यादिवसयोर्ना-

यकव्यवहारसमारोपात् समासोक्तिः ।

अत्रेति । अत्र श्लोके व्यङ्ग्यप्रतीतौ = गुरुपारतन्त्र्यादिनिमित्तोऽसमागम इति व्यङ्ग्यस्य प्रतीतौ, सत्यामपि = विद्यमानायामपि वाच्यस्यैव = वाच्यार्थस्यैव, चारुत्वम् = वैलक्षण्यम्, उत्कर्षवत् = अतिशायि, इति हेतोः, तस्यैव वाच्यस्यैव, प्राधान्यविवक्षा, न व्यङ्ग्यस्येति तात्पर्य्यम् । उक्तपद्ये वामनमते आक्षेपोऽलङ्कारः, भामहमते तु समासोक्तिरिति द्वयोः समावेशं हृदि निधाय ग्रन्थकार उदाहरणं ददाविति लोचनकारसम्मतिः ।

वही व्यंग्य विशेष का आक्षेप कराता हुआ मुख्य काव्यशरीर है । चारुत्व के उत्कर्ष मूलक ही वाच्य और व्यंग्य का प्राधान्य विवक्षित होता है । जैसे:—

सन्ध्या नामक या रूपिणी नायिका अनुराग अर्थात् सन्ध्याकालीन कालिमा ( पक्षान्तर में प्रेम ) से युक्त है और दिवस नामक या रूप नायक उसके सामने स्थित ही नहीं बढ़ रहा है ( सामने आरहा है ) ओह ! दैव की गति कैसी विलक्षण है कि फिर भी उनका समागम नहीं हो पाता ॥ १६ ॥

यहाँ ( नायक नायिका व्यवहार रूप ) व्यंग्य की प्रतीति होने पर भी वाच्य का ही चारुत्व अधिक होने से उसकी ही प्रधानता विवक्षित है ।

वाच्यस्य प्राधान्यविवक्षायामलङ्कारान्तरस्यापि दृष्टान्तमाह—

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येनाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम् ।

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥

इति दर्पणकारसम्मतस्य दीपकालङ्कारस्य—

बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥

इत्युदाहरणे, प्रस्तुतायाः निश्चलायाः प्रकृतेः प्रस्तुतत्वेऽप्रस्तुतायाः सत्याः योषित एकानुगमनक्रियासम्बन्धात् "सतीव योषित्" इत्युपमाया व्यङ्ग्यत्वेन प्रतीतावपि वाच्यस्यैव चारुत्वोत्कर्षाधायकत्वेन न व्यङ्ग्यस्य प्राधान्यम् । एवम्—

"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः"

इति विश्वनाथसम्मतस्यापह्नुत्यलङ्कारस्य—

नेदं नभो,मण्डलमम्बुराशि,र्नैताश्च तारा, नवफेनभङ्गाः।
नायं शशी, कुण्डलितः फणीन्द्रो, नासौ कलङ्कः शयितो मुरारिः॥

इत्युदाहरणेऽपि समुच्छलत्फेनवति क्षीरसागरे शेषपल्यङ्कशायी विष्णुरिव ताराल‍ङ्कृते नभोमण्डले लाञ्छनशोभां बिभ्रच्चन्द्रमा इत्युपमायाः व्यङ्गयत्वेन प्रतीतावपि व्यङ्गयस्य वाच्यमुखेनैव वर्णनादप्राधान्यमिति दीपकापह्नुत्यादावलङ्कारेऽपि व्यङ्गयस्य प्राधान्येन, अविवक्षणान्न तया = उपमया यथा व्यपदेशः = व्यवहारस्तद्वत्, अत्रापि = आक्षेपालङ्कारेऽपि, द्रष्टव्यम् = व्यङ्गयस्याप्राधान्यं बोध्यमिति मूलसारांशः।

और जैसे दीपक तथा अपह्नुति इत्यादि में व्यंग्य रूप से उपमा की प्रतीति होने पर भी प्राधान्य विवक्षित न होने से उपमा नाम से व्यवहार नहीं होता इसी प्रकार यहाँ भी समझना चाहिये।

अनुक्तनिमित्तायामपि विशेषोक्तौ—

अनुक्तनिमित्तविशेषोक्त्यलङ्कारेऽपि व्यङ्गयस्याप्राधान्यं ब्रवीति—

अनुक्तनिमिता विशेषोक्ति में भीः—

'सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा" इति दर्पणकारसम्मतो विशेषोक्त्यलङ्कारोऽपि तथाशब्दबलादुक्तानुक्तनिमित्तभेदेन द्विविधस्तत्रानुक्तनिमित्तां विशेषोक्तिमुदाहरति—

'आहूतोऽपि सहायैरोमीत्युक्त्वा वियुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति॥'

अन्वयः—सहायैः, आहूतः, अपि, एमि, इति, उक्त्वा, वियुक्तनिद्रः, अपि, गन्तुमनाः, अपि, पथिकः, सङ्कोचं, न, एव, शिथिलयति।

सहायैरिति। सहायैः = सार्थगणैः, आहूतः = समं गन्तुं कृताह्वानः, अपि, एमि = आगच्छामि, इति = एवम्, उक्त्वा = कथयित्वा, विमुक्तनिद्रः = त्यक्तनिद्रः, अपि, गन्तुमनाः = गमनोत्सुकचित्तोऽपि, पथिकः = पान्थः, सङ्कोचम् = चत्तुराद्याकुञ्चनम्, नैव = नह्येव, शिथिलयति = त्यजति।

साथियों द्वारा पुकारे जाने पर भी, हाँ कह कर जाग जाने पर भी, और जाने की इच्छा होने पर भी पथिक सङ्कोच को नहीं छोड़ रहा है।

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रम् । न तु तत्प्रतीतिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम् ।

इत्यादाविति—इत्यादौ = प्रोक्तपद्ये, यद्यपि पथिकस्य स्वीयसार्थगणकृताह्वाननिमित्तस्य सद्भावेऽपि सङ्कोचशिथिलीकरणरूपकार्य्याप्रयोजकं शीतकृतार्तिरूपं निमित्तं क्लिोद्भटमते, स्वीयप्रियायाः स्वप्ने सङ्गमचिन्तनरूपं निमित्तं रूय्यकमते च व्यङ्ग्यमेव प्रतीयते किन्तु तादृशव्यङ्ग्यस्य केवलं प्रतीतिमात्रम्, न तु तत्प्रतीतिनिमित्ता = तद्व्यङ्ग्यप्रतीतौ हेतुभूता काचित् = कीदृगपि, चारुत्वनिष्पत्तिः = वैलक्षणनिष्पादनम्, किन्तु सङ्कोचशैथिल्याभावप्रयोजकं वाच्यमेव चारुत्वनिष्पादकमिति व्यङ्ग्यस्य विशेषोक्त्यलङ्कारोऽपि न प्राधान्यम् इति मूलपंक्तेराशयः ।

इत्यादि उदाहरण में प्रकरणवश व्यंग्य की प्रतीतिमात्र होती है । किन्तु उस प्रतीति के कारण कोई सौन्दर्य उत्पन्न नहीं होता, इसलिए उसका प्राधान्य नहीं है ।

पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं, तद्भवतु नाम तस्य ध्वनावन्तर्भावः । न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपिपादयिष्यमाणत्वात् । न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम् । वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात् ।

पर्यायोक्तालङ्कारेऽपि ध्वनेरनन्तर्भावं प्रदर्शयति—पर्यायोक्त इति । तल्लक्षणं हि—

"पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" । इति

'स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥ इति

विश्वनाथोदाहृते पद्ये हयग्रीवस्य सैनिकैर्नन्दनस्थाः शचीप्रियाः पारिजातमञ्जर्यः सावज्ञं स्पृष्टा इत्युक्त्या स्वर्गविजयमन्तरेण शचीप्रियाणां मञ्जरीणां सावज्ञस्पर्शनासम्भवात् यद्यपि "हयग्रीवेण स्वर्गो जितः" इति यद्यपि प्रधानतया व्यङ्ग्यं प्रतीयते तथापि वाच्यस्यैव चारुत्वपोषकतया व्यङ्ग्यस्य गुणीभूतत्वेन तस्य ध्वनावेवान्तःपातः । न तु ध्वनेः, तत्र = पर्य्यायोक्तेऽन्तर्भावः । तस्य = ध्वनेः, महाविषयत्वेन = बहुविषयतया, अङ्गित्वेन च = अङ्गित्वेन नाङ्गत्वेन, प्रतिपिपादयिष्यमाणत्वात् = अग्रे कथयिष्यमाणत्वात् । न पुनरिति—

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।
विप्रा न भुञ्जते 'तच्च रसदाननिवृत्तये' ॥ इति

भामहोदाहृते पद्ये रसदाननिषेधरूपव्यङ्ग्यस्य "तच्च रसदाननिवृत्तये" इति कथनेन स्फुटीकरणान्न पुनः = नैव, व्यङ्ग्यस्यैव प्राधान्यम्, वाच्यस्य = वाच्यार्थस्य, तत्र = भामहोदाहृते पद्ये तथा तत्सदृशे वा पद्ये उपसर्जनीभावेन = गुणीभावेन, अविवक्षितत्वात् = वाच्यस्य तत्र प्राधान्येनैव विवक्षितत्वात्, गुणीभावेन विवक्षितत्वाभावादिति सारांशः । एतेन पर्यायोक्तालङ्कारेऽपि ध्वनेरन्तर्भावः प्रत्युक्तः ।

पर्यायोक्त अलंकार के भ्रम धार्मिक सदृश व्यंग्य प्रधान उदाहरणों में भी यदि व्यंग्य ही प्रधान हो तो उस अलंकार का ध्वनि में अन्तर्भाव किया जा सकता है । न कि ध्वनि के उस अलंकार में, क्योंकि ध्वनि तो महाविषय और अङ्गी अर्थात् प्रधान रूप से प्रतिपादित किया जायगा । किन्तु भामह द्वारा उदाहृत जैसे—पर्यायोक्त के उदाहरण में तो व्यंग्य का प्राधान्य ही नहीं है क्योंकि वहां गौणत्व विवक्षित नहीं है ।

अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं प्रसिद्धमेव ।

"नेदं नभोमण्डलमित्यपह्नत्युदाहरणे, तथा 'बलावलेपादधुनापि पूर्ववत्' इति दीपकोदाहरणे च शेषशायिविष्णोरिव नभोमण्डले विद्यमानस्य चन्द्रमसो वर्णनरूपोपमान्यङ्ग्यापेक्षया वाच्यस्यैव, तथा 'सतीव योषित्' इत्युपमाव्यङ्ग्यापेक्षया वाच्यस्यैव प्राधान्यम्, व्यङ्ग्यस्य तु, अनुयायित्वम् = अङ्गत्वम्, प्रसिद्धमेव = प्रतीतं प्रमाणितञ्च, न तु केनाप्यविदितमिति भावः । यद्यप्यत्र लोचनकारैर्वादविवादप्रस्ता बहवो विषयाः प्रपञ्चिताः किन्तु प्रकृतानुपयोगित्वेन गर्दभीदोहानुकीर्तनवन्मया न वर्णिता इति ध्येयम् ।

अपह्नुति तथा दीपक में वाच्य का प्राधान्य और व्यंग्य का वाच्यानुगामित्व प्रसिद्ध ही है ।

सङ्करालङ्कारेऽपि यदाऽलङ्कारोऽलङ्कारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् ।

सङ्करालङ्कारेऽपि = नीरक्षीरन्यायेनालङ्काराणां मिथः समावेश एव सङ्करस्तत्र यदा, अलङ्कारः=कोऽप्यलङ्कारः, अलङ्कारान्तरच्छायाम्=अन्यालङ्कारशोभाम्, अनुगृह्णाति=जनयति, तदा = अलङ्कारद्वयसमावेशो, व्यङ्ग्यस्य=व्यङ्ग्यार्थस्य, प्राधान्येन =मुख्यतया, अविवक्षितत्वात् = विवक्षितत्वाभावात्, न = नैव, ध्वनिविषयत्वम् = ध्वनिलक्ष्यत्वम्। सङ्करलक्षणन्तु विद्यानाथेन स्पष्टमेवोक्तम्। यथा—

नीरक्षीरनयाद्यत्र सम्बन्धः स्यात् परस्परम्।
अलङ्कृतीनामेतासां, सङ्करः स उदाहृतः॥ इति।

तद्भेदाश्च विश्वनाथेनैव सुस्पष्टमुक्ताः। यथा—

अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥

अयम्भावः—अङ्गाङ्गित्वैकाश्रयत्व-सन्दिग्धत्वभेदात् सङ्करस्त्रिविधः। तत्र अङ्गाङ्गित्वं हि स्वातन्त्र्यमप्राप्ततयोपकार्य्योपकारकत्वं गतत्वम्। तदुक्तं मम्मटेन "अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः" इति। एकाश्रयत्वन्नाम एकत्र पदे पादे वाक्ये वा व्यवस्थितत्वम्। सन्दिग्धत्वं च द्वयोर्बहूनां वा साधकबाधकाभावेनैकत्राविरुद्धसमाविष्टत्वम्। नीरक्षीरन्यायेनास्फुटपार्थक्येनालङ्कारमिश्रणमूल एव सङ्करः, न तु शब्दार्थमिश्रणमूलो नीरक्षीरसादृश्यानुपपत्तेः। तत्र प्रथमप्रकारस्याङ्गाङ्गित्वस्योदाहरणं यथा—

कुमारसम्भवे—

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः।
तया गृहीतन्नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥

अत्रोदाहरणे मृगाङ्गनावलोकनेन पार्वतीविलोकनस्योपमा व्यङ्ग्यापि वाच्यस्य सन्देहालङ्कारस्याङ्गत्वेन गुणीभूतेति न तत्र ध्वनेः प्रवेशसम्भवः।

सङ्करालङ्कार में भी जहाँ एक अलंकार दूसरे की छाया ( सौन्दर्य ) को पुष्ट ( अनुगृहीत ) करता है ( अर्थात् अङ्गाङ्गि भाव रूप चतुर्थ भेद में ) वहाँ व्यंग्य का प्राधान्य विवक्षित न होने से वह ध्वनि का विषय नहीं है।

सङ्करालङ्कारस्य द्वितीयभेदे दर्पणसम्मते सन्दिग्धत्वप्रकारेऽपि ध्वनेरनन्तर्भावं दर्शयति—

**अलङ्कारद्वयसम्भावनायां तु वाच्यव्यङ्ग्ययोः समं प्रधानम्।**

'इदमाभाति रुचिरं भिन्दानं सततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥

इत्युक्तोदाहरणे किं मुखस्य चन्द्रतयाऽध्यवसानादतिशयोक्तिः ? उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम् ? आहोस्वित् मुखचन्द्रमण्डलयोर्द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता ? अथवा चन्द्रस्याप्रकृतत्वाद्दीपकम् ? उत विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः ? अथवा अप्रस्तुते चन्द्रवर्णनेन प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा ? यद्वा मन्मथोद्दीपनकालः स्वकार्य्यभूतचन्द्रवर्णनमुखेन वर्णित इति पर्यायोक्तिः ? इति बहूनामलङ्काराणां सन्देहसङ्करे साधकबाधकप्रमाणराहित्येन गुणप्रधानभावयोर्वाच्यव्यङ्ग्ययोश्च कस्यापि न निश्चय इति वाच्यव्यङ्ग्ययोर्द्वयोरप्यान्दोल्यमानत्वात् समप्राधान्ये कथं ध्वनेरन्तर्भाव इति तात्पर्य्यम् ।

उद्भटास्तु—अलब्धस्वातन्त्र्याणामलङ्काराणामनुग्राह्यानुग्राहकभावे प्रथमः सङ्करप्रकारः, अलङ्काराणामेकतरपक्षत्यागग्रहणे प्रमाणाभावात् समवाये सन्देहरूपो द्वितीयः सङ्करप्रकारः, अलङ्काराणामेकवाचकानुप्रवेशलक्षणस्तृतीयः सङ्करप्रकारः, शब्दार्थालङ्काराणामेकत्र समावेशरूपश्चतुर्थः सङ्करप्रकारः, इत्थं सङ्करालङ्कारस्य प्रकारचतुष्टयं मन्यन्ते परं नव्यास्तु चतुर्थं प्रकारं संसृष्टावन्तर्भावयन्तः सङ्करस्य प्रकारत्रयमेव मन्यन्ते तच्च मया प्रागेव दर्पणरीत्या प्रदर्शितम् । ननु सङ्करेऽपि—

भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥

इति संस्कृतच्छायया निर्दिष्टे पद्ये प्रस्तुतत्वाद्वाच्यस्यार्थान्तरन्यासस्याङ्गत्वेऽपि व्यतिरेकापह्नुत्योस्तु प्रतीयमानस्याङ्गित्वे व्यङ्ग्यप्राधान्येऽपि कुतो न ध्वनेः प्रवेश इत्याशङ्कां निराकरोति ।

( सन्देह, संकर रूप प्रथम भेद में ) दो अलंकारों की संभावना होने पर तो वाच्य और व्यंग्य दोनों का सम प्राधान्य होता है ।

अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रापि व्यवस्थानं, तदा सोऽपि ध्वनिविषयोऽस्तु न तु स एव ध्वनिरिति वक्तुं शक्यम् । पर्यायोक्तनिर्दिष्टन्यायात् ।

अथेति । अत्राथशब्दो यद्यर्थे ज्ञेयः । वाच्योपसर्जनीभावेन = वाच्यस्याप्राधान्येन, व्यङ्ग्यस्य तत्रापि संकरेऽपि व्यवस्थानम् = अवस्थितिः, तदा सोऽपि = सङ्करोऽपि, ध्वनिविषयः = ध्वनेर्लक्ष्यः, अस्तु = जायताम्, न तु स एव = सङ्कर एव ध्वनिः, इति = इत्थं वक्तुं शक्यम् = गर्वतयाऽपलपितुं शक्यमिति भावः। पर्यायोक्तनिर्दिष्टन्यायात् = पर्यायोक्ते यथा महाविषयतया ध्वनेर्नान्तर्भावः किन्तु अलङ्कारध्वनिनाम्ना ध्वनावन्तःपातस्तथासङ्करेऽपीति पर्यायोक्तनिर्दिष्टन्यायात् ।

अतः यहाँ भी ध्वनि की संभावना नहीं है। और यदि वहां अङ्गाङ्गिभाव संकरालंकार में व्यंग्य वाच्य के उपसर्जनीभाव [ गौणरूप ] से स्थित हो तब तो वह भी ध्वनि अलंकार ध्वनि का विषय हो सकता है, न कि केवल वही ध्वनि है पर्यायोक्त निर्दिष्ट न्याय से ।

**अपि च सङ्करालङ्कारस्य सङ्करोक्तिरेव ध्वनिसम्भावनां करोति ।**

अत्र मूलग्रन्थे कैश्चिन्महानुभावैः पं० बदरीनाथमहोदयैः 'व्यङ्ग्यसम्भावनानिरासप्रकारम्' इति लोचनलेखेन "निराकरोती"ति पाठः कल्पितः किन्तु तल्लेखेन निरेत्यधिकपाठकल्पनस्यौचित्यं न प्रतिभाति "ध्वनिसम्भावनां करोति" इति सम्भावनाशब्देन ध्वनेः सम्भावनामात्रं करोति न तु वास्तविकीं ध्वनिस्थितिम्, इत्यर्थस्यैवौचित्येन करोतीति पाठस्यैव समीचीनत्वात् । अत्रेत्थं मूलसारांशः—अलङ्काराणां किल नीरक्षीरवत् समावेशे हि सङ्करालङ्कारः, मिश्रणे हि एकस्य मुख्यत्वमपरस्य गुणत्वमिति कथयितुं न कदापि शक्यम् । व्यङ्ग्यप्राधान्यमन्तरा च ध्वनिरेव न सम्भाव्यत इति सङ्करोक्तिरेव ध्वनिसम्भावनां यथाकथञ्चित् करोति न तु वास्तविकीं ध्वनिस्थितिं द्रढयति इति पाठकालीनगुरुचरणप्रसादस्मरणाद्विवेचितः ।

और एक बात यह भी है कि संकरालंकार में सर्वत्र शब्द का प्रयोग ही ध्वनि संभावना का निराकरण कर देता है ।

इदानीमप्रस्तुतप्रशंसायां ध्वनिसम्भावनां प्रत्याचष्टे—

**अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तिनिमित्तभावाद्वाभिधेयप्रतीयमानयोः सममेव प्राधान्यम् ।**

एतन्मूलग्रन्थेऽपि पं० श्रीबदरीनाथमहोदयैः स्वपुस्तके मूलपाठं भङ्क्त्वा

"निमित्तिनिमित्तभावाद्वाऽभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभि सम्बन्ध"स्तदेत्यधिकः पाठः संयोजितः इति विद्वद्भिर्विचारणीयः । मन्ये यदेत्यस्य सार्थक्याय तदेत्यस्य योजनाय चाधिकपाठकल्पनं तदभिप्रेतम् किन्तु यदेत्यस्य बलादपि तदेत्यस्याध्याहारो युज्यते। अग्रे च "यदा तावदित्यादिना" ग्रन्थवर्णनानन्तरं तदेत्यस्य पाठोऽपि दृश्यत इति प्राचीनपाठभङ्गातिरिक्तं वैलक्षण्यं किमपि नेति सुधीभिराकलनीयम् ।

प्रकृतमनुसरामः—अप्रस्तुतप्रशंसाया लक्षणेन समं तद्भेदा अपि विश्वनाथेनेत्थं प्रदर्शिताः—

"क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः ।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् ॥
अप्रस्तुतात् प्रस्तुतश्चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यात्" इति ॥

अस्याः किल सामान्यं लक्षणम् 'अप्रस्तुतात् प्रस्तुतं गम्यं चेदिति विशेषलक्षणं भेदप्रतिपादनमुखेन क्वचिद्विशेषः सामान्यादित्यादि । सा चाप्रस्तुतप्रशंसा पञ्चविधा- तथाहि—

[१] चेत्सामान्यादप्रस्तुतात् क्वचिद् विशेषः प्रस्तुतो गम्यते तर्हि प्रथमा।
[२] चेद् विशेषादप्रस्तुतात् सामान्यं प्रस्तुतं क्वचिद् गम्यते तर्हि द्वितीया।
[३] चेत् कार्य्यादप्रस्तुतात् निमित्तं प्रस्तुतं क्वचिद् गम्यते तर्हि तृतीया।
[४] चेत् निमित्तादप्रस्तुतात् क्वचित् कार्य्यं प्रस्तुतं गम्यते तर्हि तुरीया।
[५] चेत् समादप्रस्तुतात् क्वचित्समं प्रस्तुतं गम्यते तर्हि किल पञ्चमी।

अथ क्रमेणोदाहरणानि ससङ्गति निर्दिश्यन्ते—

[१] प्रथमा यथा—पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥

एतत्पद्यं हि शिशुपालवधे बलरामस्य सभायामुक्तिवर्णनपरम् । अत्र "देहिनस्तद्वरं रजः" इत्यप्रस्तुतसामान्याभिधानस्य "अस्मदपेक्षया रजोऽपि वर" मिति विशेषस्य प्रस्तुतार्थस्य व्यञ्जकत्वेऽपि व्यङ्ग्यस्य वाच्यानतिशायित्वेन वाच्यप्रतीयमानयोः समप्राधान्यात् ध्वनेः कथमन्तर्भावः ।

[२] द्वितीया यथा—

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥

पद्यमेतद् रघुवंशे इन्दुमत्या मालास्पर्शमात्रेण प्राणनिर्गमेऽजस्य विलापवर्णनपरम् । अत्रेश्वरेच्छया "विषमपि क्वचिदमृतं भवेत्, अमृतमपि विषं भवेदि"ति अप्रस्तुतविशेषाभिधानस्य "ईश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं, हितकारिणोऽपि क्वचिदहितकारित्वमिति" प्रस्तुतसामान्याभिधानस्य व्यञ्जकत्वेऽपि वाच्यव्यङ्ग्ययोः समप्राधान्याद् व्यङ्ग्यस्य वाच्यानतिशायित्वाच्च कथमपि ध्वनेर्नान्तर्भावः ।

[३] तृतीया यथा—

नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम् ॥

पद्येऽस्मिन् सरोजमालायाः, मृणालनाञ्च तिरस्कारात्मनोऽप्रस्तुतात् कार्य्यात् नायिकाङ्गमार्दवविशेषस्य प्रस्तुतस्य निमित्तस्य व्यङ्ग्यत्वेऽपि वाच्यानतिशायित्वेन वाच्यप्रतीयमानयोः सममेव प्राधान्यमिति कुतो ध्वनेरन्तर्भावचर्चा ।

[४] चतुर्थी यथा—

'आनम्य वल्गुवचनैर्विनिवारितेऽपि रोषात् प्रयातुमुदिते मयि दूरदेशम् ।
बाला कराङ्गुलिनिदेशवशंवदेन क्रीडाविडालशिशुनाऽऽशु रुरोध मार्गम् ॥'

पद्येऽस्मिन् मार्गरोधनरूपादप्रस्तुतात् निमित्तात् प्रवासान्निवृत्तिरूपस्य प्रस्तुतस्य कार्य्यस्य व्यङ्ग्यत्वे वाच्यव्यङ्ग्ययोः समप्राधान्यात् नितरां दूरे ध्वनेश्चर्चा ।

[५] पञ्चम्या अप्रस्तुतप्रशंसायास्तु चतुर्विधात्वेन ग्रन्थविस्तारभिया नोदाहरणानि प्रदर्शितानि ।

तदयमत्र मूलसारांशः—अप्रस्तुतप्रशंसालङ्कारेऽपि यदा सामान्यविशेषभावात्, निमित्तिनिमित्तभावात् = कार्य्यकारणभावाद्वा, "अप्रस्तुतात् प्रस्तुतं गम्येत" इति शेषः, तदाऽभिधेयप्रतीयमानयोः = वाच्यव्यङ्ग्ययोः, सममेव = तुल्यमेव प्राधान्यम् = अङ्गित्वम् ।

अप्रस्तुतप्रशंसा में भी जब सामान्य विशेष भाव से अथवा निमित्त निमित्तिभाव से, अभिधीयमान ( कथ्यमान ) अप्रस्तुत के प्रतीयमान प्रस्तुत के साथ सम्बन्ध होता है तब अभिधीय और प्रतीयमान दोनों का तुल्य ही प्राधान्य होता है ।

यदा तावत् सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धस्तदा विशेषप्रतीतौ सत्यामपि प्राधान्येन तस्य सामान्येनाविनाभावात्सामान्यस्यापि प्राधान्यम् ।

प्रस्तुताप्रस्तुतयोस्तुल्यप्राधान्यं विवृणोति—यदा तावदित्यादिना । यदा तावत् अप्रस्तुतस्य = अप्राकरणिकस्य, सामान्यस्य, अभिधीयमानस्य = अभिधया प्रतिपाद्यमानस्य वाच्यस्येत्यर्थः, प्राकरणिकेन = प्रस्तुतेन, विशेषेण, प्रतीयमानेन = व्यङ्ग्येन सम्बन्धः = मिश्रणम् तदा, विशेषप्रतीतौ = विशेषावबोधे, सत्यामपि = विद्यमानायामपि, प्राधान्येन = प्रधानतया, तस्य = विशेषस्य, सामान्येन, अविनाभावात् = न विनाभावोऽविनाभावस्तस्मात्, अविनाभावस्य व्याप्तिरूपत्वात् सामान्यविशेषयोर्व्याप्तिनियमाच्च "सामान्यविशेषयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न" इति नियमात् अविनाभावादित्यस्य अभिन्नादित्यर्थः । अर्थात् सामान्यविशेषयोरैक्यादित्यर्थः, सामान्यस्यापि प्राधान्यम् = विशेषापेक्षया सामान्यस्यापि प्राधान्यम् इति मूलपंक्तिविवरणम् ।

तत्त्वन्तु—यदि हि वाच्यात् सामान्यात् व्यङ्ग्यस्य विशेषस्य प्रस्तुतत्वात् प्रधानतया प्रतीतिस्तदाऽप्रस्तुतस्यापि सामान्यस्य प्राधान्येन प्रतीतिरर्थादेवापतेदिति सामान्यस्यापि प्राधान्ये कुतो ध्वनेरवसरः ? इति ।

जब कि अभिधीयमान अप्रस्तुत सामान्य का प्रतीयमान प्राकरणिक ( प्रस्तुत ) विशेष से सम्बन्ध होता है तब प्रधानतः विशेष की प्रतीति होने पर भी "निर्विशेषं न सामान्यम्" इस नियम के अनुसार उसका सामान्य से अविनाभाव होने के कारण सामान्य की भी प्रधानता होती है ।

यदाऽपि विशेषस्य सामान्यनिष्ठत्वं तदाऽपि सामान्यस्य, प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेष्यस्यापि प्राधान्यम् ।

यदाऽपि, विशेषस्य, सामान्यनिष्ठत्वम् = सामान्ये निष्ठा स्थितिर्यस्य तत् तस्य भावस्तत्त्वम्, अर्थात् सामान्यस्य विशेषात्मकत्वेन सामान्यव्यञ्जकत्वमित्यर्थः । तदाऽपि, सामान्यस्य, प्राधान्येऽङ्गित्वे, सामान्ये, सर्वविशेषाणामन्तर्भावात् = सामान्यविशेषयोर्व्याप्तिन्यायेन सकलसामान्ये सर्वविशेषाणां समावेशात् विशेषस्यापि प्राधान्यम् ।

अत्रापीदं तत्त्वम्—विशेषाधिकरणे सामान्याभावस्यादर्शनात् सामान्याभावस्य विशेषाभावकूटप्रयोज्यत्वाच्च सामान्यस्य प्राधान्ये विशेषस्यापि प्राधान्यं केन वार्य्यतेति केवलव्यङ्ग्यस्य यत्र प्राधान्यं तत्रैव ध्वनेः प्रवेशः। यत्र किल वाच्यस्य, व्यङ्ग्यस्य चोभयोः प्राधान्यं तत्र कथं ध्वनिसम्भावना। राज्ञः प्रजायाश्च समप्रभावत्वे राज्ञोऽप्रधानत्ववद् व्यङ्ग्यस्याप्यप्रधानत्वे कुतः ध्वनेः प्रवेश इति तात्पर्य्यम्।

जब विशेष सामान्यनिष्ठ होजाने अर्थात् विशेष से सामान्य का आक्षेप होता है तब भी सामान्य की प्रधानता होने पर सामान्य में सर्वविशेष के अन्तर्भाव होने से विशेष का भी प्राधान्य होता है।

**निमित्तिनिमित्तभावे चायमेव न्यायः।**

निमित्तिनिमित्तभावे च = कार्य्यकारणभावे च, अयमेव न्यायः = इयमेव युक्तिरित्यर्थः। कार्य्यकारणयोस्तादात्म्यस्वीकारात् कार्य्यस्य प्राधान्ये कारणस्यापि प्राधान्यम्। कारणस्य प्राधान्ये कार्य्यस्यापि प्राधान्यमिति सत्कार्य्यवादिनां सिद्धान्ते सामान्य—विशेषयोः समप्राधान्यवत् वाच्यव्यङ्ग्ययोः समप्राधान्ये कथमपि न ध्वनिप्रवेशः, इति मूलसारांशः।

निमित्त निमित्तिभाव में भी यही युक्ति माननी चाहिये।

"अप्रस्तुतात् सामान्यविशेषभावे, कार्य्यकारणभावे, सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा" इति रूप्यकलक्षिताया अप्रस्तुतप्रशंसायाः पञ्चमेऽपि प्रकारे ध्वनेरन्तर्भावं दर्शयितुमुपक्रमते—

**यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाऽप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः। इतरथा त्वलङ्कारान्तरमेव।**

समात् सममिति दर्पणोक्तस्याप्रस्तुतप्रशंसापञ्चमप्रकारस्य ध्वनावेवान्तःपातं प्रदर्शयति यदा त्वित्यादिना। यदा तु सारूप्यमात्रवशेन = तुल्यत्वमात्रवशेन, न तु सामान्यविशेषभावादिना, मात्रशब्दस्येतरव्यवच्छेदधर्मात्, अप्रस्तुतप्रशंसालङ्कारे अप्रकृतप्रकृतयोः = अप्रस्तुतप्रस्तुतयोः सम्बन्धः, तदापि, अप्रस्तुतस्य = प्राकरणिकस्य, सरूपस्य = तुल्यस्य, अभिधीयमानस्य = वाच्यस्य, प्राधान्येन = प्रधानतया,

अविवक्षायाम् = विवक्षितत्वाभावे, ध्वनावेव, अन्तःपातः = अन्तर्भावः पञ्चमप्रकारस्यापि। इतरथा तु = प्रतीयमानस्याप्यप्रस्तुतत्वे तु, अलङ्कारान्तरमेव = अन्योऽलङ्कार एव, अलङ्कारत्वमेवेति पाठे तु यदि ध्वनौ नान्तःपातस्तदाऽलङ्कारत्वमेव मन्यतामिति भावः। इत्थं मूलग्रन्थव्याख्या।

तत्त्वं तु—

आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ?॥

इति पञ्चमभेदस्योदाहरणे अप्रस्तुतस्य शुनो निन्दया वेषव्यवहारैः पाण्डित्यं प्रदर्शयतः कस्यचिन्मूर्खस्य प्रस्तुतस्य निन्दाया गम्यत्वेऽपि क्वचिदप्रस्तुतत्वाद् वाच्यस्याप्राधान्ये व्यङ्ग्यस्य च प्रस्तुतत्वात् प्राधान्ये ध्वनावेव तत्प्रवेशो न तु महाविषयस्य ध्वनेस्तत्र प्रवेशः। एवमेव व्याजस्तुतिप्रभृतिष्वपि ध्वन्यन्तर्भावो ज्ञेय इत्यलं पल्लवितेनेति शम्।

जब साध्यमात्रमूलक अप्रस्तुत प्रशंसा में अप्रस्तुत प्रस्तुत का सम्बन्ध होता है तब भी अभिधीयमान अप्रस्तुत तुल्य पदार्थ का प्राधान्य अविवक्षित होने की दशा में ( वस्तु ) ध्वनि में अन्तर्भाव हो जायगा। वहाँ अप्रस्तुत प्रशंसा अलङ्कार नहीं होगा ; अन्यथा ही अलंकार होगा।

तदयमत्र संक्षेपः—

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः॥ १४॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते॥ १५॥

तदयमिति। तत् = तस्मात्, अत्र = ध्वनेरलङ्कारस्य च भिन्नविषयत्वे, अयं संक्षेपः = एतावान् विस्तारः।

व्यङ्ग्यस्येति। यत्र = काव्ये, वाच्यमात्रानुयायिनः = वाच्यमेवानुसरतः, व्यङ्ग्यस्य = ध्वनेः, अप्राधान्यम् = गौणत्वम्, तत्र = काव्ये, समासोक्त्यादयः = समासोक्तिप्रभृतयः, वाच्यालङ्कृतयः = अर्थालङ्काराः, स्फुटाः = स्पष्टाः॥१४॥

व्यङ्ग्यस्येति। व्यङ्ग्यस्य = प्रतीयमानस्य, उपमादाविव, प्रतिभामात्रे = आभासमात्रे, वाच्यार्थानुगमेऽपि, समासोक्त्यादाविव वा = अथवा, वाच्येनार्थेन

अनुगमः समं प्राधान्यं तस्मिन्नपि, यत्र = यस्मिन् व्यङ्ग्यस्य, प्राधान्यं = प्रधानता, न = नैव, प्रतीयते स्फुटतया प्राधान्यं न चकास्ति अपि तु बलात्कल्पत इत्यर्थ-स्तत्र न ध्वनिरित्यर्थः ॥१५॥

जहाँ वाच्य का अनुगमन करने वाले व्यङ्ग्य का अप्राधान्य है वहाँ समासोक्ति आदि वाच्य अलंकार स्पष्ट है। जहाँ व्यंग्य ही केवल प्रतीति मात्र होती है अथवा वह वाच्य का अनुगामी पुच्छभूत है अथवा जहाँ उसका स्पष्ट प्राधान्य नहीं है वहां ध्वनि नहीं है ॥१४-१५॥

'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥ १६ ॥'

अन्वयः—यत्र तत्परौ, एव, शब्दार्थौ व्यङ्ग्यं, प्रति, स्थितौ, सः, एव सङ्करोज्झितः, ध्वनेः, विषयः, मन्तव्यः ॥ १६ ॥

पूर्वोक्तकारिकाद्वयेनालङ्काराणां विषये निर्णीते ध्वनेरपि विषयं स्फुटीकर्तुमुपक्रमते तत्परावेवेति। यत्र = काव्ये, तत्परावेव = व्यङ्ग्यपरावेव, शब्दार्थौ = शब्दोऽर्थश्च तौ, व्यङ्ग्यं प्रति = व्यङ्ग्यार्थविवेचनं प्रति, स्थितौ व्यङ्ग्योपस्कारतयोन्मुखौ। स एव = न तु गुणीभूतव्यङ्ग्यः, सङ्करोज्झितः = सङ्करेणालङ्कारमिश्रणेन उज्झितः रहितः अर्थात् शुद्धः, ध्वनेर्विषयः, ध्वनेर्लक्ष्यः, मन्तव्यः, ज्ञातव्य इत्यर्थः ॥ १६ ॥

जहां शब्द और अर्थ व्यंग्यबोधन के लिए ही व्यंग्यकारक ( तत्पर ) हैं उसको संकररहित ध्वनि का विषय समझना चाहिये ॥१६॥

तस्मान्न ध्वनेरन्यत्रान्तर्भावः। इतश्च नाऽन्तर्भावः। यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः। तस्य पुनरङ्गानि—अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते।

पर्यवसितं दर्शयति तस्मान्नेति। तस्मात् = पूर्वोक्तकारणात्, ध्वनेः, अन्यत्र= अलङ्कारेषु, न = नैव, अन्तर्भावः = अन्तःपातः। अलङ्कारेषु ध्वनेरनन्तर्भावे कारणान्तरं वक्तुमुपक्रमते—इतश्च नान्तर्भाव इत्यादिना। इतश्च = अस्मादपि कथयिष्यमाणहेतोः, ध्वनेरन्यत्र नान्तर्भावः। यतः = यस्माद्धेतोः, अङ्गी = प्रधानः, काव्यविशेषः, ध्वनिरिति कथितः = प्रोक्तः, तस्य = ध्वनेः, पुनरङ्गानि—अलङ्काराः=

उपमादयोऽलङ्काराः, गुणाः = माधुर्यादयः, वृत्तयः = वैदर्भीप्रभृतयः, इति प्रतिपिपादयिष्यन्ते = कथयिष्यन्ते, अर्थात् पृथगवयवीभूतकरादिशरीरयोरिवालङ्कारादिध्वन्योरङ्गाङ्गिनोरैक्यं कथमपि न युज्यते इति भावः।

इसलिये ध्वनि का अन्तर्भाव अलङ्कारों में नहीं होसकता।

इसलिये भी ध्वनि का अलङ्कारों में अन्तर्भाव नहीं हो सकता है कि—अङ्गीभूत व्यङ्ग्यप्रधान काव्यविशेष को ध्वनि बतलाया है। अलङ्कार, गुण, वृत्तियां उस ध्वनि के अङ्ग हैं। यह आगे कहे जाँयगे।

**न चाऽवयव एव पृथग्भूतोऽवयवीति प्रसिद्धः। अपृथग्भावे तु तदङ्गत्वं तस्य। न तु तत्त्वमेव। यत्रापि वा तत्त्वम्, तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव।**

अवयवाच्छरीरस्य पार्थक्यं दर्शयति—न चेत्यादिना। पृथग्भूतोऽवयव एव = करादिः, अवयवी = शरीरम्, इति न क्वापि प्रसिद्धः = प्रसिद्धिं नीतः।

अपृथग्भावे त्विति। अपृथग्भावे तु = करादिशरीरयोरिवालङ्कारादिध्वन्योरैक्यभावे तु, तस्य = अलङ्कारादेः, तदङ्गत्वम् = ध्वनेरङ्गत्वम्। न तु = नैव, तत्त्वमेव = ध्वनित्वमेव।

अयम्भावः—यथा करादीनां समवायसम्बन्धेन शरीरे विद्यमानत्वादङ्गत्वेऽपि न शरीरत्वव्यवहारस्तथैवालङ्कारादिषु गुणीभूतभावेन व्यङ्ग्यस्य विद्यमानत्वेऽपि न ध्वनित्वव्यवहार इति सारम्। न च कराद्यतिरिक्तस्य शरीरस्य क्वाप्यनुपलम्भादङ्गानामेवाङ्गित्वव्यवहार इति वाच्यम्। न्यायनये "एको घटः" इत्यादिप्रतीत्याऽवयविनः पृथक्त्वनिर्णयात्। ननु, तर्ह्यप्रस्तुतप्रशंसायाः पञ्चमे प्रकारे ध्वनेः कथं तादात्म्यमित्यत्राह—यत्रापीति। यत्रापि वा = अप्रस्तुतप्रशंसायाः पञ्चमे प्रकारे वा, तत्त्वम् = ध्वनित्वम्, तत्रापि, ध्वनेः, महाविषयत्वात् = विस्तृतविषयत्वात् न = नैव, तन्निष्ठत्वमेव = अलङ्कारादिनिष्ठत्वमेव। अलङ्काराणामेव ध्वनावन्तःपातो न तु ध्वनेरलङ्कारेष्वन्तःपात इति तात्पर्य्यम्।

अलग-अलग अवयवही अवयवी नहीं प्रसिद्ध हैं। अपृथग्भाव होने पर अर्थात् समुदाय रूप में भी मिलकर अलङ्कार ध्वनि के अङ्ग ही हैं नकि अङ्गी ( ध्वनि ) है। "जहाँ कहीं जैसे—पर्यायोक्त· भ्रमधम्मिअ" श्लोक में व्यङ्ग्य का अङ्गित्व होता भी है वहाँ भी ध्वनि के महा-

विषय होजाने के कारण ध्वनि तन्निष्ठ अलङ्कारनिष्ठ नहीं होता अर्थात् अलङ्कारों में अन्तर्भूत नहीं होता।

'सूरिभिः कथितः' इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते।

ध्वनिलक्षणकारिकायां "सूरिभिः कथितः" इत्यनेन सर्वेषां विदुषां सम्मतिः प्रदर्शितेत्याह—विद्वदुपज्ञेयमुक्तिरिति। विद्वद्भ्य उपज्ञा प्रथम उपक्रमो यस्याः सेति बहुव्रीहिरेव समासः कार्य्यः। तत्पुरुषस्तु न कार्य्यः, 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्, इति सूत्रेण क्लीबत्वप्रसङ्गात्।

"सूरिभिः कथितः" इस कथन से यह ध्वनिवाद सभी विद्वानों के सम्मत है जिस किसी तरह अप्रामाणिक नहीं है, यह सूचित होता है।

प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्।
तेषु च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति॥

ध्वनिसंज्ञां व्यवहर्तॄन् विदुषो निर्दिशति—प्रथम इत्यादिना। प्रथमे हि =आद्या हि, मुख्या इत्यर्थः, विद्वांसः =सूरयः, वैयाकरणाः =व्याकरणवेत्तारः, सर्वविद्यानाम् =चतुर्दशानामष्टादशानां वा विद्यानाम्, व्याकरणमूलत्वात् =व्याकरणाधीनत्वात्, तदुक्तं महाभाष्ये पतञ्जलिना—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति" इति, पदपदार्थावगमस्य व्याकरणाधीनत्वेन सर्वविद्यानां मूलत्वमिति भावः।

अत्रांशे शिक्षापि प्रमाणम्—मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते इति।

ते च =वैयाकरणाः, श्रूयमाणेषु =श्रोत्रशष्कुलीं सन्तानेनागता अन्त्याः शब्दाः श्रूयन्ते इति प्रक्रियायां शब्दाः श्रूयमाणास्तेषु श्रावणप्रत्यक्षविषयतावच्छेदकधर्मेषु, वर्णेषु, ध्वनिरिति व्यवहरन्ति =ध्वनिरिति व्यवहारं कुर्वन्ति। तदुक्तं व्याकरणमहाभाष्ये—"कस्तर्हि शब्दः? इति प्रश्ने "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द

इत्युच्यते यद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्य्ययं माणवकः, इति ध्वनिं कुर्व्वन्नेवमुच्यते तस्माद् ध्वनिः शब्दः।" इति। अत्रांशे भगवता भर्तृहरिणाप्युक्तम्-

'यः संयोगविभागाभ्यां करणैरुपजायते ।
स स्फोटः शब्दजश्शब्दो ध्वनिरित्युच्यते बुधैः ॥ इति वाक्यपदीये।

घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति सारांशः। परमेष प्रकारोऽव्यक्तशब्दानामेव। व्यक्तशब्दानां तु श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्दे नोक्ताः। तदुक्तं तेनैव—

"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्य्यते ॥
अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि या नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥

श्रूयमाणेषु तावत् चैव वर्णेषु वक्तुर्योऽन्यो द्रुतविलम्बितादि वृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादधिकः सोऽपि ध्वनिस्तदुक्तं तेनैव—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ इति ।

अत्रायं निष्कर्षः—पदप्रत्यक्षज्ञानमन्तरा शाब्दबोधासम्भवः। वर्णानामाशूत्पत्तिविनाशशालित्वेनानित्यत्वाद्युगपदनेकवर्णात्मकपदप्रत्यक्षं तु सर्वथा न जायतेऽतो वैयाकरणैः शाब्दबोधोपयोगी मध्यमानादाभिव्यङ्ग्यः नित्योऽखण्डात्मकः शब्दस्वरूपः स्फोटस्तद्व्यञ्जको मध्यमानादरूपो ध्वनिश्च स्वीक्रियते। पश्चात्तदनुयायिभिरालङ्कारिकैरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात् पर्य्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिः स्वीकृत इति चतुष्कं ध्वनिस्तद्योगाच्च समस्तं काव्यं ध्वनिरिति नेयमपूर्वा कल्पना ध्वनेरतो नास्त्यत्र भूयो भूयः परीक्षावसरः—इति तत्वम्।

प्रथम सबों में मुख्य विद्वान् वैयाकरण हैं क्योंकि सभी विद्याओं के मूल व्याकरण ही है। वे श्रूयमाणवर्णों में ध्वनि व्यवहार करते हैं। उसी प्रकार उनके मतों को मानने वाले काव्यतत्वार्थदर्शी विद्वानों ने वाच्य-वाचक-संमिश्र ( व्यङ्ग्यार्थ ) शब्दात्मा व्यञ्जनरूप शब्द व्यापार, और काव्य इन पद्यों को व्यञ्जकत्व साहश्य से ध्वनि कहा है।

तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः ।

अथालङ्कारिकाणामपि भूरि सूरीणामपि ध्वनिविषयकं मतं दर्शयति—तथैवेत्यादिना । तथैव = वैयाकरणसिद्धान्तानुसारम्, तन्मतानुसारिभिः = वैयाकरणमतानुयायिभिः, अन्यैः = आलङ्कारिकैः, काव्यतत्त्वार्थदर्शिभिः = साहित्यतत्त्वमर्मज्ञैः, सूरिभिः = विपश्चिद्भिः, वाच्यवाचकसम्मिश्रः = वाच्यवाचकाभ्यामर्थशब्दाभ्यां सम्मिश्रः मिलितः, शब्दात्मा = शब्दप्रधानः, काव्यमिति व्यपदेश्यः = व्यवहर्तव्यः, व्यञ्जकत्वसाम्यात् = व्यञ्जकत्वसाधर्म्यात्, मध्यमानादतुल्यो ध्वनिरित्युक्तः कथितः ।

अत्र 'गामश्वं पुरुषं पशुम्' इतिवत् चकारमन्तरापि 'वाच्यवाचकसहितः सम्मिश्रः' इत्यत्र मध्यमपदलोपिसमासेन वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिरिति द्वयोर्व्यञ्जकत्वं ध्वनित्वसाम्यात् । ध्वन्यत इति व्युत्पत्त्या सम्मिश्रिते विभावानुभावसंवलनच्छाययेति व्यङ्ग्योऽपि ध्वनिः । शब्दनं शब्दः शब्दव्यापारः, न त्वसावभिधादिरूपः किन्त्वात्मभूतः, सोऽपि ध्वनिः । काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिर्ध्वनतात्' इति चतुष्कं ध्वनिर्लोचनमत इत्यवधेयम् ।

इसका सारांश यह है कि—'ध्वनतीति ध्वनिः' इस व्युत्पत्तिबलसे वाचक शब्द और वाच्यार्थ, "ध्वन्यत इति ध्वनिः" इस व्युत्पत्ति से व्यङ्ग्यार्थ, "ध्वननं ध्वनिः" इस व्युत्पत्ति से व्यञ्जना व्यापार "ध्वन्यतेऽस्मिन् इति ध्वनिः" इस व्युत्पत्ति से काव्य, इन पाँचों को ध्वनि कहते हैं ।

न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसङ्कलनया महाविषयस्य यत्प्रकाशनं तदत्र प्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः । न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् । तदेवं ध्वनेस्तदभाववादिनः प्रत्युक्ताः ।

यत्प्रागुक्तं "वाग्विकल्पानामानन्त्यात्" इत्यादि तदेव परिहरति—न चेत्यादिना । एवंविधस्य = प्रधानीभूतव्यङ्ग्यस्य, ध्वनेः, वक्ष्यमाणेति वक्ष्यमाणाः ये प्रभेदा अविवक्षितवाच्यत्वादयः, तेषां ये भेदा अर्थान्तरसंक्रमितवाच्यत्वादयः, तेषां सङ्कलनया योगेन, महाविषयस्य = सकललक्ष्यव्यापिनः, यत्प्रकाशनम् =

यत्स्फुटीकरणम्, तत्, अत्र=इह प्रसिद्धाः प्रख्याता येऽलङ्कारास्तेषु विशेषमात्र प्रतिपादनेन = यथाकथञ्चित् ध्वनिपुष्ट्यर्थं व्यङ्ग्यत्वकथनेन न च तुल्यम् इत्यन्वयो ज्ञेयः, इति = तयोरतीव-तारतम्याद्धेतोः, तद्भावितचेतसां = तस्मिन् ध्वनिस्वरूपे अलङ्कारेषु वा भावितमधिवासितं सलग्नं वा चेतो येषां तेषाम्, अलङ्कारवासना-वासितचेतसां, ध्वनिवासनावासितचेतसां वा विदुषामिति शेषः। संरम्भः = स्वपक्ष-ह्रासजन्यः रोषः, अत्र ध्वनिविषयेऽलङ्कारविषये, युक्त एव = समुचित एव। न च = न हि, तेषु = परस्परं विवदमानेषु, कथञ्चित् = प्रकारेण केनापि ईर्ष्यया = द्वेष-भावेन, कलुषितशेमुषीत्वम् = दूषितबुद्धित्वम्, आविष्करणीयम् = प्रकाशनीयम्। तदेवम् = उक्तैः प्रकारैः, तावत् = आदौ ध्वनेः, अभाववादिनः = "ध्वनिरेव नास्ति" इति ध्वनिखण्डनकर्तारः प्रत्युक्ताः = खण्डिताः।

अत्रेदं सारम्—ये च किल ध्वनेरल्पविषयं मत्वा खण्डनपक्षं गृहीतवन्तः, ये च खलु क्षोदिष्ठतया ध्वनेरसत्तां वदन्तिस्म ते च ध्वनेर्महाविषयत्वप्रदर्शनेन परास्ताः। इत्थं ध्वनेर्भावाभाववादिनां स्वीयपक्षपरिपुष्ट्यर्थं यः पारस्परिकः क्रोधः स उचित एव तत्रास्माभिरीर्ष्या कथमपि न कार्या इत्यवधेयम्।

इस प्रकार के ध्वनि के भेद और भेद के भेद जोड़ कर, ध्वनि के महाविषय होने के कारण जो प्रकाशन करता है वह प्रसिद्ध अलङ्कार वगैरह विशेष मात्र कथन से कैसे तुल्य हो सकता है? कदापि नहीं। इसलिये ध्वनि समर्थन में लगे हुए चित्तवाले विद्वानों का संघर्ष युक्त ही है। उन विद्वानों में किसी प्रकार ईर्ष्या से कलुषित बुद्धि नहीं करनी चाहिये। इस प्रकार ध्वनि के अभाववादी परास्त कर दिये गये।

**अस्ति ध्वनिः। स चासाववविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन।**

ध्वनिपक्षं स्थिरीकरोति—अस्तीति। यथा अब्भक्षो वायुभक्षः इत्युक्ते विनाप्येवकारमप एव भक्षयति, वायुमेव भक्षयतीति गम्यते तथैवात्र अस्त्येव ध्वनिः, न तु केनापि खण्डित इति बोध्यम्, स च ध्वनिः, द्विविधः = प्रकारद्वयवान्, सामान्येन = साधारणतया प्रथमः, अविवक्षितवाच्यः, द्वितीयः, विवक्षितान्यपरवाच्यश्च। न विवक्षितः वाच्यं बाधितस्वरूपो वाच्यो वाच्यार्थो यत्र सोऽविवक्षितवाच्यो

नाम लक्षणामूलो ध्वनिः। विवक्षितः अबाधितस्वरूपः अन्यपरः व्यङ्ग्यनिष्ठः, वाच्यः वाच्यार्थः यत्र सः अविवक्षितान्यपरवाच्यः। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अत एवायमभिधामूलो ध्वनिरित्युच्यते। अत्रायं निष्कर्षः—यथा प्रदीपः स्वयमपि प्रकाशते घटमपि प्रकाशयति न केवलमात्मानं, घटमेव वा, तथैव ध्वन्यवतारावसरे वाच्यो भवतु गुणीभूतः किन्तु तथा सन्नपि स्वयं प्रकाशते व्यङ्ग्यार्थमपि प्रकाशयति स्वोपस्थितिद्वारा अन्यावबोधं प्रति कारणत्वात्।

ननु "भाक्तमाहुस्तमन्ये" इति भाक्तवादिनां पक्षनिराकरणस्यावशेषे मध्ये ध्वनिभेदनिरूपणस्य नितरामनौचित्यमिति चेन्न, लक्षणोदाहरणाभ्यां ध्वनेः स्थिरीकरणानन्तरमेव तत्पक्षखण्डने सौकर्य्यात्।

इतने वाद-विवादके बाद ध्वनि है यह निश्चित हुआ। वह सामान्यतः अविवक्षितवाच्य ( लक्षणामूल ) विवक्षितान्यपरवाच्य (अभिधामूल) के भेद से दो प्रकार के होते हैं। उनमें से पहला ( अविवक्षितवाच्य ) ध्वनि का उदाहरण यह है:—

तत्र विवक्षितान्यपरवाच्यस्याभिधामूलत्वेनोपजीव्यत्वात्प्राङ्निरूपयितव्यत्वेऽपि सूचीकटाहन्यायेनाविवक्षितवाच्यस्यैवोदाहरणं निर्दिशति—

तत्राद्यस्योदाहरणम्—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥

त्रयः पुरुषाः, सुवर्णपुष्पां = सुवर्णान्येव पुष्पाणि यस्यां सा ताम्। पृथिवीम् = भूमिम्, चिन्वन्ति = संगृह्णन्ति। तत्र प्रथमः शूरः = वीरपुरुषः। कृतविद्यश्च = विद्वांश्च, यश्च, सेवितुम् = स्वयं क्षेत्राकर्षणादिव्यापारेण पृथिवीं परिचरितुम्, जानाति = वेत्ति। शूरा हि निजबलेन बलावलेपतया च राज्ञो वशीकृत्य भूमिमर्जयितुं शक्नुवन्ति। एवं विद्वांसोऽपि स्वीयविद्यया धनोपार्जनद्वारा भूमिक्रयणेण ततो धनमुपार्जयितुं शक्नुयुरन्। एवं ये च नित्यशः कृषिव्यापारे सक्तास्ते पूर्णधनोपार्जनेन सुखिनो भवितुं शक्नुवन्त्येवेति त्रय एव पुरुषाः पृथिवीतो सुवर्णरूपाणि पुष्पाणि चेतुमर्थात् संग्रहीतुं शक्नुवन्तीति तात्पर्य्यम्।

अत्र पृथिवीतः सुवर्णपुष्पस्य तच्चयनस्य च नितरामप्रसिद्धतया वाक्यमेवासम्भवत् स्वार्थे बाधितस्वरूपं सत् "त्रय एव पुरुषाः सुलभसमृद्धिभाजना भवन्ती"ति लक्षयित्वा "शूर-कृतविद्य-सेवका एवं नायिकाकुचकलशयुगवत्, उपार्जितं धनं रक्षितुं शक्नुवन्ति" इत्यप्यर्थं व्यञ्जयति इति प्रथमोऽपि प्रकारो ध्वनिरिति सारांशः। पद्येऽस्मिन् दीपकं, तुल्ययोगिता चालङ्कारः।

जिसमें सुवर्ण फूल है ऐसी पृथ्वी का चयन अर्थात् पृथ्वी रूप लता का सुवर्ण रूप फूलों का चयन तीन मनुष्य कर सकते हैं:—शूर, विद्वान्, और जो सेवा करना जानता है।

विवक्षितान्यपरवाच्यध्वनेरुदाहरणं प्रदर्शयति—

द्वितीयस्यापि—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥

द्वितीयस्यापि उदाहरणमिदमधो निर्दिष्टमिति बोधयितुमुपक्रमते—

द्वितीयस्यापीति।

अन्वयः—हे सुमुखि! असौ, शुकशावकः, क्व, नु, नाम, शिखरिणि, कियत्, चिरम्, किमभिधानम्, तपः, अकरोत्, येन, तव, अधरपाटलं, बिम्बफलं, दशति।

शिखरिणीति। कश्चिन्नायकश्चाटूक्त्या कञ्चित् प्रियतमां ब्रवीति—हे सुमुखि! =हे प्रिये!, असौ = भाग्यशाली, शुकशावकः = शुकशिशुः, क्व नु = कस्मिन्, नाम, शिखरिणि = पर्वते, कियच्चिरम् = कियन्तं कालम्, किमभिधानम् = किन्नामकम्, तपः = तपस्याम्, अकरोत् = कृतवान्, येन = तपसा, तव = मदत्यन्तं प्रियायाः, अधरपाटलम् = अधरवदोष्ठवत् पाटलं = श्वेतरक्तम् "श्वेतरक्तस्तु पाटलः" इत्यमरकोशात्। बिम्बफलम् = बिम्बस्य तुण्डकेर्य्याख्यस्य वृक्षस्य फलम्, दशति = आस्वादयतीति तात्पर्यम्।

अत्र "योगिनो हि परमसिद्धिस्थानं श्रीशैलादिपर्वतं गत्वा दिव्यकल्पसहस्रकालं यावत् पञ्चाग्निप्रभृतिकठिनतपस्यां विधाय स्वाभीष्टसिद्धिं लभन्ते, किन्तु शुकशिशुस्तं तादृशतपो विनैव त्वदधरसदृशबिम्बफलं त्वास्वादितवान्, किन्तु त्वदधरपानं

तादृशतपस्ययैवेति व्यङ्ग्यम् । अत्र दंशनक्रियाया दन्दशूकदन्तव्यापारे प्रसिद्धत्वाद् दशतीति पदं स्वार्थेऽसम्भवत् आस्वादयतीत्यन्यार्थं बोधयति । वाच्यार्थस्योपसर्जनीभूतत्वादभिधामूलो विवक्षितान्यपरवाच्यो ध्वनिः । एतत्पद्यार्थं विवेचने कस्यचिदनुरागिणः प्रच्छन्नस्वाभिप्रायख्यापनचाटुविरचनात्मकविभावोन्मीलनं वास्तविकं व्यङ्ग्यम्, इति लोचनकारमतम् ।

दूसरा विवक्षितान्यपरवाच्य ध्वनि का उदाहरण यह है—

हे सुमुखि ! उस शुकशावक ने किस पर्वत पर, कितने दिनों तक, कौन सी तपस्या की है जिस तपोबल से तेरे होठ के समान लाल बिम्बफल को काटता रहता है अर्थात् चुम्बनास्वाद लेता रहता है । यहाँ दंशका प्रयोग वाच्य है, आस्वाद व्यङ्ग्य है ।

**यदप्युक्तं भक्तिर्ध्वनिरिति तत्प्रतिसमाधीयते—**

**"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।"**

**अन्वयः—अयं, ध्वनिः, रूपभेदात्, भक्त्या, न एकत्वम्, बिभर्ति ।**

**अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात् । वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येणार्थप्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः । उपचारमात्रं तु भक्तिः ।**

कारिकां स्वयमेव वृत्तिकारो व्याचष्टे—अयमित्यादिना । अयम्, उक्तप्रकारः =क्षोदक्षेमपुरस्सरं निर्णीतो ध्वनिप्रकारः, भक्त्या=भज्यते सेव्यते प्रसिद्धतया उद्बोध्यते इति भक्तिः गौणीशक्तिस्तया, वृद्धो यूनेतिवत् सहाप्रयोगेऽपि तृतीयया सहेत्यस्य सम्बन्धात् भक्त्या सहेत्यर्थः । एकत्वम्=ऐक्यं ताद्रूप्यमिति यावत्, न=नहि, बिभर्ति=पुष्णाति । तत्र हेतुमाह—रूपभेदात् भिन्नरूपत्वात्=रूपपार्थक्यात् । ध्वनेः स्वरूपं दर्शयति रूपभेदप्रदर्शनाय—वाच्येत्यादिना । वाच्यवाचकाभ्यां व्यतिरिक्तस्य भिन्नस्य, अर्थस्य=व्यङ्ग्यस्य, वाच्यवाचकाभ्यां=शब्दार्थाभ्याम्, तात्पर्येण=तात्पर्यवशात् प्रयोजनवशादिति यावत् प्रकाशनं =व्यञ्जनया द्योतनम्, यत्र=यस्मिन्, व्यङ्ग्यप्राधान्ये=व्यङ्ग्यस्य प्रधानतायाम्, स ध्वनिः=स एव ध्वनिरिति योजनीयम् ।

भक्तेः स्वरूप विवृणोति—उपचारमात्रं त्विति । उपचारमात्रं तु=उप-

चारो हि नामात्यन्तं विशकलितयोर्विभिन्नयोः शब्दयोः सादृश्यातिशयमहि
भेदप्रतीतिस्थगनमात्रम्, भेदज्ञानतिरोधानमेव । सैव गुणवृत्तिर्भक्तिरिति तात्पर्य

अब "भाक्तमाहुस्तमन्ये" इस पक्ष का खण्डन है, जो किसी ने कहा है
भक्ति ही ध्वनि है उस का समाधान यह है—

यह उक्त प्रकार के पञ्चविध ध्वनि ( शब्द, अर्थ, व्यञ्जना, व्यापार, व्यङ्ग्य
और इन चतुष्टयसहित काव्य ) भक्ति या लक्षणा से भिन्न रूप होने के का
भक्ति और ध्वनि एक नहीं होसकता है ।

वाच्य से भिन्न अर्थ के वाच्य वाचकद्वारा तात्पर्य से प्रकाशन किया जाता
उस व्यङ्ग्य प्राधान्य में ध्वनि होती है । भक्ति तो उपचार मात्र को कहते हैं
जो अर्थ जिस अर्थ में सङ्केतित रहता है उस अर्थ को छोड़ कर उससे सम्ब
अन्य अर्थ को बोध कराता है उसको उपचार कहते हैं । जैसे "काकवद् दे
दत्तस्य गृहम्" कौएवाला देवदत्त का घर है ।

भक्तेस्ताद्रूप्यासम्भवे ध्वनेर्भक्तिरेव लक्षणं स्वीक्रियतामिति पक्षनिराकरण
कारिकामवतारयितुमुपक्रमते—

तत्रैतत् स्याद्भक्तिर्लक्षणं ध्वनेरित्याह—

अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ १७ ॥'

तया = भक्त्या, असौ = ध्वनिः, न च = नहि, लक्ष्यते = लक्षणाविषयो भव
अतिव्याप्तेः, अतिव्याप्तिदोषसम्भवात्, अथ, अव्याप्तेश्च, अव्याप्तिदोषसम्भवा
च्चेति कारिकार्थः ।

अब भक्ति ध्वनि का लक्षण नहीं हो सकता है इस को बतलाते हैं—

अतिव्याप्त अव्याप्त दोष के कारण ध्वनि भक्ति से भी लक्षित
होसकता है ।

वृत्तिकारोऽपि स्वयं व्याचष्टे—

न च भक्त्या ध्वनिर्लक्ष्यते । कथम् ? अतिव्याप्तेरव्याप्तेश्च । तत्राति
व्याप्तिः, ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सत्वात् ।

तया इत्यस्य व्याख्यानं 'भक्त्या' इति ध्वनिर्न लक्ष्यते लक्षणालक्ष्यो न भव
तात्पर्यम् । कथं = कस्माद्धेतोः, इति प्रश्नः । उत्तरयति— अतिव्याप्तेर

श्रेति। लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्" । इत्यतिव्याप्तेर्लक्षणम् यथा—गोः शृङ्गित्वरूपलक्षणे लक्ष्यतावच्छेदगोत्वसामानाधिकरण्यं गोत्वावच्छेदकावच्छिन्नप्रतियोगिताको यो महिष्यादौ भेदस्तत्सामानाधिकरण्यमप्यस्तीति लक्षणसमन्वयः। "लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्" इति हि अव्याप्तेर्लक्षणम्—यथा—गोर्नीलरूपवत्त्वलक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणश्वेतगोनिष्ठात्यन्ताभावप्रतियोगित्वस्य सत्त्वाल्लक्षणसमन्वयः। इत्यतिव्याप्त्यव्याप्तिदोषयोः सम्भवात्। तत्र = तयोर्मध्ये, अतिव्याप्तिः = एतदाख्यो दोषः, ध्वनिव्यतिरिक्तेऽपि = ध्वन्यभावस्थलेऽपि, विषये, भक्तेः = गौणवृत्तेः, सम्भवात् = समन्वयदर्शनात्।

जिस कारण ध्वनि से भिन्न विषय में भक्ति का सम्भव है इसलिये तो अतिव्याप्ति दोष है।

**यत्र हि व्यङ्ग्यकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते। यथा—**

हि = यतः, यत्र = वक्ष्यमाणेषु भक्त्युदाहरणेषु, व्यङ्ग्यकृतम् = व्यङ्ग्यसम्पन्नम्, महत् = विशेषम्, सौष्ठवम् = चारुत्वम्, नास्ति = न दृश्यत इति यावत्, तत्रापि = व्यङ्ग्यकृतचारुत्वाभावेऽपि, उपचरितशब्दवृत्त्या = उपचरिता आरोपिता या शब्दवृत्तिः शब्दनिष्ठा वृत्तिर्लक्षणा तया, प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः = रूढेः प्रसिद्धेः, अनुरोधेन अनुसारेण, प्रवर्तितः = समाचरितः, व्यवहारः, शब्दप्रयोगरूपो व्यापारो यैस्ते तथोक्ताः, कवयः काव्यतत्त्वविदः, दृश्यन्ते = वर्तन्ते तादृशाः कवय इति भावः। 'कलिङ्गः साहसिकः'—'श्वेतो धावति' 'मञ्चाः क्रोशन्ति' इत्यादिस्थले यत्र ध्वनिर्नास्ति तत्रापि भक्तेः सत्त्वेन ध्वनेर्भक्तिर्लक्षणं कदापि न सम्भवति, इति तत्त्वम्।

जहाँ व्यङ्ग्यकृत अधिक सौन्दर्य्य नहीं है वहाँ भी उपचरित शब्दवृत्ति से अर्थात् गौणी शब्दवृत्ति से व्यवहार करते हुए कवि लोग देखे जाते हैं। जैसे—

**परिम्लानं पीनस्तनजघनसङ्गादुभयत-**
**स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।**

इदं व्यस्तन्यासं श्लथभुजलताऽऽक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

अन्वयः—कृशाङ्ग्याः, पीनस्तनजघनसङ्गात्, उभयतः, परिम्लानम्, तनोः, मध्यस्य, अन्तः, परिमलम्, अप्राप्य, हरितम्, श्लथभुजलताऽऽक्षेपवलनैः, व्यस्तन्यासम्, इदं, बिसिनीपत्रशयनम्, सन्तापम्, वदति ।

परिम्लानमिति । कृशाङ्ग्याः = दुर्बलगात्र्याः नायिकायाः, पीनस्तनजघनसङ्गात् = पीनयोः पुष्टयोः स्तनजघनयोः कुचकटिभागयोः यः सङ्गः सम्पर्कस्तस्मात्, उभयतः = पार्श्वद्वये, परिम्लानम् = सन्तापान्मलिनतां प्राप्तम् । तनोः = दुर्बलस्य, मध्यस्य = मध्यभागस्योदरस्येत्यर्थः, अन्तः = मध्ये, परिमलनम् = गाढसम्बन्धम्, अप्राप्य = अनासाद्य, हरितम् = हरिद्वर्णम् श्लथभुजलताऽक्षेपवलनैः = श्लथे सन्तापाधिक्येन शिथिले ये भुजलते तयोः य आक्षेपः पीडाधिक्येन इतस्ततो न्यसनम् तस्य वलनैः = कलनैः करणैरिति यावत्, व्यस्तन्यासम् = व्यस्तः विपर्यस्तः न्यासः रचना यस्य तत्, इदम् = पुरःस्थितम्, बिसिनीपत्रशयनम् = कमलदलतल्पम्, सन्तापम् = सम्यक्तापम्, वदति = स्फुटीकरोतीत्यर्थः । अत्र तल्पस्य स्पष्टवागुच्चारणकर्तृत्वासम्भवात् वदतीत्यस्य स्फुटीकरणार्थो भाक्तोऽर्थात् लाक्षणिकः, सा च लक्षणा रूढिमूलाऽतो न ध्वनिः, किन्तु भक्तिरेवेति बोध्यम् ।

[ यह पद्य रत्नावली नाटिका का है । सागरिका के रति-शय्या को छोड़ कर लताकुञ्ज से चले जानेके बाद राजा विदूषक से शय्या का वर्णन करता है— ]

सागरिका का कमलिनी के पत्रों पर शयन, पुष्टस्तन और जङ्घे के संसर्ग से दोनों ओर मलिन होगया है और शरीर के मध्यभाग ( कमर ) के स्पर्श नहीं होने से हरा है । शिथिल भुजाओं के इधर उधर फेंकने से इसकी रचना अस्तव्यस्त अर्थात् बिखरी हुई है । इस प्रकार कमलकी शय्या कृशाङ्गी सागरिका के सन्ताप को बतलाती है । यहाँ वदति का अर्थ उपचरितवृत्ति से प्रकट करना है।

इसी प्रकार— तथा—

चुम्बिज्जइ असहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम् ॥'

( छाया )—चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः ।
विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥

अन्वयः—प्रियः, जनः ( प्रियेण ) शतकृत्वः, चुम्ब्यते, सहस्रकृत्वः, अवरुध्यते, विरम्य, पुनः, रम्यते, प्रियः, जनः, पुनरुक्तम् , न, अस्ति ।

भक्तेर्द्वितीयमुदाहरणं चुम्ब्यत इति । प्रियः जनः = प्रेमभाजनजनः, प्रियेणेति शेषः, शतकृत्वः = शतं वारान् , चुम्ब्यते = चुम्बनव्यापारासक्तो भवतीत्यर्थः । सहस्रकृत्वः = सहस्रं वारान् , अवरुध्यते = अवरुध्य गृह्यते । विरम्य = विश्रम्य सुरतानन्तरमपि पुनः = वारम्वारं, रम्यते प्रियः जनः = अतिप्रियो जनः, पुनरुक्तम् = अनुपादेयः नास्ति = न जायते ।

अत्र शब्दस्यैवोक्तिकर्मत्वसम्भवेन चुम्बनादिव्यापारस्य पुनरुक्तत्वासम्भवात् पुनरुक्तशब्देनोपादेयत्वं लक्ष्यत इत्यत्रापि न ध्वनेः सम्भवः ।

सैकड़ों बार प्रियजनको चुम्बन करते हैं । हजारों बार आलिङ्गन करते हैं । रुक रुक कर बार बार रमण किया जाता है ; फिर भी पुनरुक्त नहीं होता ।

यहाँ पुनरुक्त शब्द का अर्थ अनुपादेय है ।

भक्तेस्तृतीयमुदाहरणं प्रदर्शयति—

तथा—'कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥'

( संस्कृतच्छाया )—

'कुपिताः प्रसन्ना अवरुदितमुख्यो विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥'

अन्वयः—स्पष्ट एव ।

स्वैरिण्यः = स्वेच्छाचारिण्यः पुंश्चल्यः, महिलाः = नायिकाः, कुपिताः = कदाचित् क्रुद्धाः, प्रसन्नाः = पुनर्द्रव्यादिलोभेन हृष्टाः, अवरुदितमुख्यः = अश्रुपरिपूर्णवदनाः, पुनः, विहसन्त्यः = हास्यं कुर्वन्त्यः, यथा = येन प्रकारेण गृहीताः = अवलम्बिताः तथा = तथैव, ( ग्रहीतुः ) हृदयं = चित्तम् , हरन्ति = वशीकुर्वन्ति ।

अत्र "ग्रहणेनोपादेयता लक्ष्यते" इति लोचनेऽभिहितं किन्तु अभिधयैव शक्त्या

ग्रहणस्योपादेयत्वार्थबोधे कुतो लक्षणाया अवसरः। अतो गृहीता इत्यत्र न लक्षणा, किन्तु हरन्तीत्यस्य वशीकुर्व्वन्तीत्यत्र लक्षणा बोध्या।

इसी प्रकार—

कुलटा स्त्रियाँ क्रुद्ध या प्रसन्न, हँसती हुई या रोती हुई, जिस प्रकार देखी जाँय-सभी अवस्था में मनको हरण कर ही लेती हैं।

भक्तेश्चतुर्थमुदाहरणं प्रदर्शयति—

यथा—'अज्जा एँ पहारो णवलदाए दिण्णो पिएण थणवट्टे।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम्॥

(छाया) कनिष्ठभार्य्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे।
मृदुकोऽपि दुस्सह इव जातो हृदये सपत्नीनाम्॥

अन्वयः—प्रियेण, कनिष्ठभार्य्यायाः, स्तनपृष्ठे, नवलतया, दत्तः, प्रहारः, सपत्नीनां, हृदये, मृदुकः, अपि, दुस्सहः, इव, जातः।

प्रियेण = नायकेन, कनिष्ठभार्यायाः = कनिष्ठस्त्रियः, स्तनपृष्ठे = कुचतटे, नवलतया = नूतनवल्ल्या, दत्तः = विहितः, प्रहारः = आघातः, सपत्नीनाम् = भर्तुरन्यनायिकानाम्, हृदये = चित्ते, मृदुकोऽपि = ऋजुरपि, दुःसह = सोढुमनर्हः, इव, जातः=सम्पन्न इत्यर्थः।

अत्र कनिष्ठभार्य्यायां स्तनद्वये प्रहारः प्रेमाधिक्यसूचकतया सपत्नीभिः दुस्सहः। ददातेः स्वसत्त्वनिवृत्तिपूर्वकपरसत्त्वोपादानानुकूलव्यापारार्थकत्वान्मुख्यार्थबाधे दानेन विधानं लक्ष्यतेऽतो व्यङ्ग्यार्थापेक्षया विभावना—विशेषोक्ति-सङ्करा-सङ्गत्युत्प्रेक्षाणां वाच्यालङ्काराणामेव चमत्कृतिजनकतया प्राधान्यम्। अतोऽत्रापि न ध्वनिः किन्तु भक्तिरेवेति सारम्।

इसी प्रकारः—नई नवेली होने से कनिष्ठा भार्या के स्तनों में दिया हुआ प्रिय [ नायक ] का मृदुल प्रहार भी सपत्नियों के हृदय के लिए दुःसह हो गया।

यहां "दत्तः" पद में लक्षणा है।

भक्तेः पञ्चममुदाहरणं प्रदर्शयति—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो,
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।

न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः,
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

अन्वयः—यः, परार्थे, पीडाम्, अनुभवति, ( यश्च ) भङ्गे, अपि, मधुरः, यदीयः, विकारः, अपि, इह, सर्वेषाम्, खलु, अभिमतः, सः, यदि, भृशम्, अक्षेत्र-पतितः, वृद्धिं, न, सम्प्राप्तः ( तर्हि ) असौ, किम्, इक्षोः, दोषः, अगुणायाः, मरुभुवः, न, पुनः ।

परार्थे इति । पद्यमिदमिक्षुवर्णनपरं किन्तु सज्जनवर्णनमपि स्वत आयाति । यः = इक्षुः, सज्जनश्च, परार्थे = परेषां कृते, उपकारे च, पीडाम् = यन्त्रे निष्पीडनम्, क्लेशञ्च, अनुभवति = प्राप्नोति, अत्र पक्षद्वयेऽपि एक एवार्थः, यश्च, भङ्गेऽपि = खण्डनेऽपि, पराभिभवेऽपि, मधुरः = माधुर्य्यगुणयुक्तः, मधुरभाषी च । यदीयः = इक्षुसम्बन्धी, विकारः = गुडादिः, हानिश्च, अपि, इह खलु = संसारे, सर्वेषाम् = जनानाम्, अभिमतः = प्रियः, यथेक्षोर्विकारः सर्वेषामभिमतस्तथा सज्जनस्य हानिरपि सर्व्वेषामिष्टः, "वसुधैव कुटुम्बकम्" इति विचारशीलस्य सज्जनस्य लोकतो यदि हानिस्तदापि सहते सज्जनः, मानापमानयोः समत्वादिति भावः । सः इक्षुः, सज्जनश्च, भृशम्, अक्षेत्रपतितः = अक्षेत्रे ऊषरक्षेत्रे कुस्थाने च, पतितः = प्राप्तः, वृद्धिम् = पुष्टिम्, उन्नतिञ्च, न, सम्प्राप्तः, तर्हि, असौ किम्, इक्षोः, सज्जनस्य दोषः, अगुणायाः = गुणरहितायाः, मरुभुवः, कुस्थानस्य च, पुनर्न दोषः ? अपितु तदीय एव दोष इत्यर्थः । अत्र प्रस्तुतमहापुरुषापेक्षया पीडानुभवस्येक्षौ जडेऽन्वयासम्भवेनानुभूतिशब्दः पीडावत्त्वं लक्षयति । इदमप्युदाहरणं व्यङ्ग्यस्योपसर्जनीभावेन भक्तेरेव न ध्वनेरिति बोध्यम् ।

इसी प्रकारः—

जो [ सज्जन पक्ष में ] दूसरों के लिए पीडा सहन करता है, [ इक्षु पक्ष में कोल्हू में पेरा जाता है । ] जो [ सज्जन पक्ष में ] अपमानित होने पर भी [ इक्षु पक्ष में तोड़े जाने पर भी ] मधुर रहता है । जिसका विकार [ सज्जन पक्ष में ] क्रोधादि, [ इक्षु पक्ष में उससे बनी गुड, शक्कर आदि भी ] सबको अच्छा लगता है । वह यदि किसी अनुचित स्थान [ इक्षु पक्ष में ऊसर खेत ] में पड़कर वृद्धि पद समृद्धि या उन्नति को [ इक्षु पक्ष में आकार वृद्ध को ] प्राप्त नहीं होता है

तो क्या यह इक्षु [ ईख गन्ना ] का दोष है ? उस निर्गुण भूमि स्वामी [इक्षु पा
में खेत ] का दोष नहीं है ।

तदेवाह—

इत्यत्रेक्षुपदेऽनुभूतिशब्दः । न चैवंविधः कदाचिदपि ध्वनेर्विषयोऽभिमतः ।

शब्द इत्यनन्तरं लक्ष्य इति शेषः । एवंविधः = प्रोक्तश्लोकपञ्चकभाक्तविषयः, कदाचिदपि = कथमपि, ध्वनेर्न विषयः अभिमतः = इष्ट इति सारम् ।

यहाँ इक्षु पक्ष में 'अनुभवति' शब्द है परन्तु ऐसा कभी भी ध्वनि का विषय नहीं होता । यतः—

तत्र कारणं प्रदर्शयति—

'उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन् ।
शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयीभवेत् ॥१८॥

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः ।

उक्त्यन्तरेणेति । यत् = चारुत्वम्, उक्त्यन्तरेण = अन्योक्त्या, ध्वन्यतिरिक्तशब्देनेति यावत्, अशक्यम् = न शक्यम्, तत्, चारुत्वम् = सौष्ठवम्, प्रकाशयन् = व्यञ्जयन्, शब्दः, व्यञ्जकतां = व्यञ्जकत्वधर्मम्, बिभ्रत् = धारयन्, ध्वन्युक्तेः = ध्वननाख्यस्य, विषयीभवेत्, ध्वनिशब्दवाच्यो भवेदित्यर्थः ।

अत्र चेति । अत्र च, उदाहृते विषये = प्रोक्तपद्यचतुष्टये निविष्टवदतीत्यादिप्रयोगविषये, उक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः = ध्वन्यतिरिक्तशब्दाशक्यसौष्ठवव्यञ्जनपरः, शब्दः, न, इति नैव ध्वनिविषय इति भावः ॥१८॥

क्योंकि—

उक्त्यन्तर से जो चारुत्व प्रकाशित नहीं किया जा सकता उसको प्रकाशित करने वाला व्यञ्जना व्यापार युक्त शब्द ही ध्वनि कहलाने का अधिकारी हो सकता है ।

और यहाँ ऊपर उद्धृत उदाहरणों में कोई शब्द उक्त्यन्तर से अशक्य चारुत्व को प्रकाशित करने का हेतु नहीं है । [ इसलिए ध्वनि का विषय नहीं है । ]

किञ्च—

'रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥१९॥

अन्वयः—ये, लावण्याद्याः, शब्दाः, स्वविषयात्, अपि, अन्यत्र, विषये, रूढाः, प्रयुक्ताः, ते, ध्वनेः, पदं, न, भवन्ति।

रूढा इति। ये लावण्याद्याः = लावण्या-नुलोम्य-प्रातिकूल्य-सब्रह्मचारिप्रभृतयः शब्दाः, स्वविषयात् = स्ववाच्यार्थात् अपि, अन्यत्र = अन्यस्मिन् कान्त्यादिरूपे विषये, रूढाः = प्रसिद्धाः, प्रयुक्ताः = प्रयोगविषयीकृताः, ते = लावण्याद्याः शब्दाः, ध्वनेः, पदम्, = स्थानम्, न, भवन्तीत्यर्थः।

अत्र ध्वनिशब्दः चमत्कारातिशयशालिव्यङ्ग्यत्वबोधकस्तदभावाच्च कथं ध्वनि-सम्भवः, इति भावः।

नन्वेवम्—"लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि!।
क्षोभं यदेति न मनागपि तेन मन्ये,
सुव्यक्तमेव जलराशिरयं पयोधिः॥

पद्येऽस्मिन् लावण्यादिशब्दसत्त्वेन कथं रूपकध्वनिरित्याशङ्कां परिहरति—

और भीः—

जो लावण्य आदि शब्द अपने विषय [ लवणयुक्तत्व ] से भिन्न सौन्दर्यादि अर्थ में रूढ प्रसिद्ध हैं, वे भी प्रयुक्त होने पर ध्वनि का विषय नहीं होते।

तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते। न तु तथाविधशब्देन।

क्वचित् = उक्तपद्ये, तथाविधे च विषये = लावण्यादिशब्दयुते स्थले, ध्वनि-व्यवहारः = रूपकादिध्वनिव्यवहारः, सम्भवन्नपि = सम्भवविषयोऽपि, प्रकारान्तरेण = रूपकव्यञ्जकवाच्यमर्यादया, प्रवर्तते = अस्ति, न तु तथाविधशब्देन = लावण्यादि-शब्दमुखेनेत्यर्थः। गौण्या वृत्त्या प्रयुक्ता लावण्यादिशब्दाः कथमपि न ध्वनेर्विषया इति तात्पर्य्यम्।

उन लावण्य आदि शब्दों में उपचरित गौणी शब्द वृत्ति तो है, परन्तु ध्वनि

नहीं है। इस प्रकार के उदाहरणों में यदि कहीं ध्वनि व्यवहार सम्भव भी हो तो वह उस प्रकार के लावण्य, आनुलोम्य, प्रातिकूल्य, आदि शब्द द्वारा नहीं अपितु प्रकारान्तर से होता है।

अपि च—

मुख्यां वृत्तिं परित्यज्य गुणवृत्याऽर्थदर्शनम्।
यदुद्दिश्य फलं, तत्र शब्दो नैव स्खलद्गतिः ॥२०॥

अन्वयः—यत्, फलम्, उद्दिश्य, मुख्याम् वृत्तिं, परित्यज्य, गुणवृत्या, अर्थदर्शनम्, तत्र, शब्दः, स्खलद्गतिः, नैव ॥२०॥

मुख्यामिति। यत् = व्यङ्ग्यम्, फलम् = प्रयोजनम्, उद्दिश्य = अभिप्रेत्य, मुख्याम् = अभिधां, वृत्तिम्, परित्यज्य = हित्वा, गुणवृत्त्या = लक्षणाशक्त्या, अर्थदर्शनम् = अर्थस्य लक्ष्यस्य दर्शनं बोधनमिति यावत्, क्रियत इति शेषः, तत्र = व्यङ्ग्ये, शब्दः, स्खलद्गतिः = स्खलन्ती गतिर्यस्य स बोधयितुमसमर्थो नैवेत्यर्थः। लक्षणा सामग्रीरहिता गुणवृत्तिः कथमपि न व्यङ्ग्यबोधनक्षमा, तत्सहिता तु व्यङ्ग्यं बोधयत्येवेति तात्पर्य्यम् ॥२०॥

और भी—

जिस [ शैत्य, पावनत्वादि फल ] को लक्ष्य में रखकर [ 'गङ्गायां घोषः' इत्यादि वाक्यों में ] मुख्य अभिधा वृत्ति को छोड़ कर गुण वृत्ति लक्षणा द्वारा अर्थ बोध कराया जाता है; उस फल का बोधन करने में शब्द बाधितार्थ स्खलद्गति नहीं है ॥ २० ॥

तदेवाह वृत्तिकारः—

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि शब्दस्यामुख्यता, तदा तस्य प्रयोगे दुष्टतैव स्यात्। न चैवं; तस्मात्।

तत्र हि, चारुत्वस्य योऽतिशयः प्राकर्ष्यं तद्विशिष्टः योऽर्थः व्यङ्ग्यार्थस्तस्य यत् प्रकाशनलक्षणं प्रकाशकरणलक्षणम् तस्मिन्, तथोक्ते, प्रयोजने कर्तव्ये करणीये यदि = चेत्, शब्दस्य, अमुख्यता = गौणता, तदा = तर्हि, तस्य = शब्दस्य, प्रयोगे, दुष्टतैव = दोष एव, स्यात्, भवेदित्यर्थः। एवं व्यङ्ग्यार्थे, मुख्यार्थ-

बाधो न भवति, यतस्तस्मात्, सामग्रीविरहिता लक्षणा कथमपि ध्वनेर्लक्षणं नेति तात्पर्यम्।

उस चारुत्वातिशय विशिष्ट अर्थ के प्रकाशन रूप प्रयोजन के संपादन में यदि शब्द गौण बाधितार्थ हो तब तो उस शब्द का प्रयोग दूषित ही होगा। परन्तु ऐसा नहीं है।

इसलिए:—

इदानीं भक्तेर्लक्षणं पुनरपि प्रकारान्तरेण प्रत्याचष्टे—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ? ॥ २१ ॥

वाचकत्वाश्रयेणैवेति। वाच्यवृत्त्या अभिधाशक्त्या प्रतिपाद्यो योऽर्थः स वाच्यस्त्वभिधत्ते यः वाचकस्तस्य भावस्तत्त्वं तदाश्रयेणैवेत्यर्थः, व्यवस्थिता = निर्णीता, गुणवृत्तिः = लक्षणावृत्तिः, व्यञ्जकत्वैकमूलस्य = व्यञ्जनामात्रगम्यस्य, ध्वनेः, कथं तेन प्रकारेण लक्षणं स्यादित्यर्थः।

अयम्भावः—"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थमात्रबोधविरतायामभिधायां विरतायां, तटाद्यर्थमात्रबोधन्ना च लक्षणायां विरतायां, पुनर्लक्षणैव शीतत्वपावनत्वाद्यतिशयार्थं बोधयितुं न क्षमत इति व्यञ्जनाया आवश्यकतेति अभिधाश्रितत्वेन स्वयं परतन्त्रा लक्षणा व्यङ्ग्यार्थं बोधयितुं न समर्था किन्तु व्यञ्जनैवेति यावत्।

वाच्य के आश्रय स्थित होने वाली गुणवृत्ति भक्ति केवल व्यञ्जनामूलक ध्वनि का लक्षण कैसे हो सकती है ? ॥ २१ ॥

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः।

तस्मात् = सकलसामग्रीभेदात्, भक्तेः, अन्य एव = भिन्न एव, ध्वनिः, गुणवृत्तिस्तु = लक्षणा तु, अन्यैव = भिन्नैवेत्यर्थः।

इस लिए ध्वनि अलग है और गुणवृत्ति अलग।

अव्याप्तिरप्यस्य लक्षणस्य। न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः; अन्ये च बहवस्तद्भेदप्रकारा भक्त्या व्याप्यन्ते। तस्माद्भक्तिरलक्षणम्।

भक्तेर्ध्वनिलक्षणेऽतिव्याप्तिं प्रदर्श्याव्याप्तिमपि प्रदर्शयति—अव्याप्तिरिति।

नहीं है। इस प्रकार के उदाहरणों में यदि कहीं ध्वनि व्यवहार सम्भव भी हो तो वह उस प्रकार के लावण्य, आनुलोम्य, प्रातिकूल्य, आदि शब्द द्वारा नहीं अपितु प्रकारान्तर से होता है।

अपि च—

मुख्यां वृत्तिं परित्यज्य गुणवृत्याऽर्थदर्शनम्।
यदुद्दिश्य फलं, तत्र शब्दो नैव स्खलद्गतिः ॥२०॥

अन्वयः—यत्, फलम्, उद्दिश्य, मुख्याम् वृत्तिं, परित्यज्य, गुणवृत्या, अर्थदर्शनम्, तत्र, शब्दः, स्खलद्गतिः, नैव ॥२०॥

मुख्यामिति। यत् = व्यङ्ग्यम्, फलम् = प्रयोजनम्, उद्दिश्य = अभिप्रेत्य, मुख्याम् = अभिधां, वृत्तिम्, परित्यज्य = हित्वा, 'गुणवृत्त्या = लक्षणाशक्त्या, अर्थदर्शनम् = अर्थस्य लक्ष्यस्य दर्शनं बोधनमिति यावत्, क्रियत इति शेषः, तत्र = व्यङ्ग्ये, शब्दः, स्खलद्गतिः = स्खलन्ती गतिर्यस्य स बोधयितुमसमर्थो नैवेत्यर्थः। लक्षणा सामग्रीरहिता गुणवृत्तिः कथमपि न व्यङ्ग्यबोधनक्षमा, तत्सहिता तु व्यङ्ग्यं बोधयत्येवेति तात्पर्य्यम् ॥२०॥

और भी—

जिस [ शैत्य, पावनत्वादि फल ] को लक्ष्य में रखकर [ 'गङ्गायां घोषः' इत्यादि वाक्यों में ] मुख्य अभिधा वृत्ति को छोड़ कर गुण वृत्ति लक्षणा द्वारा अर्थ बोध कराया जाता है; उस फल का बोधन करने में शब्द बाधितार्थ स्खलद्गति नहीं है ॥ २० ॥

तदेवाह वृत्तिकारः—

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि शब्दस्यामुख्यता, तदा तस्य प्रयोगे दुष्टतैव स्यात्। न चैवं; तस्मात्।

तत्र हि, चारुत्वस्य योऽतिशयः प्राकट्यं तद्विशिष्टः योऽर्थः व्यङ्ग्यार्थस्तस्य यत् प्रकाशनलक्षणं प्रकाशकरणलक्षणम् तस्मिन्, तथोक्ते, प्रयोजने कर्तव्ये करणीये यदि = चेत्, शब्दस्य, अमुख्यता = गौणता, तदा = तर्हि, तस्य = शब्दस्य, प्रयोगे, दुष्टतैव = दोष एव, स्यात्, भवेदित्यर्थः। एवं व्यङ्ग्यार्थे, मुख्यार्थ-

बाधो न भवति, यतस्तस्मात्, सामग्रीविरहिता लक्षणा कथमपि ध्वनेर्लक्षणं नेति तात्पर्यम्।

उस चारुत्वातिशय विशिष्ट अर्थ के प्रकाशन रूप प्रयोजन के संपादन में यदि शब्द गौण बाधितार्थ हो तब तो उस शब्द का प्रयोग दूषित ही होगा। परन्तु ऐसा नहीं है।

इसलिए:—

इदानीं भक्तेर्लक्षणं पुनरपि प्रकारान्तरेण प्रत्याचष्टे—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ? ॥ २१ ॥

वाचकत्वाश्रयेणैवेति। वाच्यवृत्त्या अभिधाशक्त्या प्रतिपाद्यो योऽर्थः स वाच्यस्त्वभिधत्ते यः वाचकस्तस्य भावस्तत्त्वं तदाश्रयेणैवेत्यर्थः, व्यवस्थिता = निर्णीता, गुणवृत्तिः = लक्षणावृत्तिः, व्यञ्जकत्वैकमूलस्य = व्यञ्जनामात्रगम्यस्य, ध्वनेः, कथं तेन प्रकारेण लक्षणं स्यादित्यर्थः।

अयम्भावः—"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थमात्रबोधविरतायामभिधायां विरतायां, तटाद्यर्थमात्रबोधन्ना च लक्षणायां विरतायां, पुनर्लक्षणैव शीतत्वपावनत्वाद्यतिशयार्थं बोधयितुं न क्षमत इति व्यञ्जनाया आवश्यकतेति अभिधाश्रितत्वेन स्वयं परतन्त्रा लक्षणा व्यङ्ग्यार्थं बोधयितुं न समर्था किन्तु व्यञ्जनैवेति यावत्।

वाच्य के आश्रय स्थित होने वाली गुणवृत्ति भक्ति केवल व्यञ्जनामूलक ध्वनि का लक्षण कैसे हो सकती है ? ॥ २१ ॥

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः।

तस्मात् = सकलसामग्रीभेदात्, भक्तेः, अन्य एव = भिन्न एव, ध्वनिः, गुणवृत्तिस्तु = लक्षणा तु, अन्यैव = भिन्नैवेत्यर्थः।

इस लिए ध्वनि अलग है और गुणवृत्ति अलग।

अव्याप्तिप्यस्य लक्षणस्य। न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः; अन्ये च बहवस्तद्भेदप्रकारा भक्त्या व्याप्यन्ते। तस्माद्भक्तिरलक्षणम्।

भक्तेर्ध्वनिलक्षणेऽतिव्याप्तिं प्रदर्श्याव्याप्तिमपि प्रदर्शयति—अव्याप्तिरिति।

अस्य लक्षणस्य = भक्त्याख्यस्य ध्वनिलक्षणस्य, अव्याप्तिरपि = अव्याप्तिलक्षणदोषोऽपीति भावः । न हीति—विवक्षितान्यपरवाच्यलक्षणः = तन्नामकः, ध्वनिप्रभेदः = ध्वनिप्रकारः, अन्ये च = असंलक्ष्यक्रमव्यङ्ग्यादयः, बहवः = बहुसंख्याकाः, तद्भेदप्रकाराः = ध्वनिभेदप्रकाराः, भक्त्या, नहि, व्याप्यन्ते इत्यन्वयमुखेन व्याख्या।

अत्रेदं तत्त्वम्—ध्वनिलक्षणं भक्तिस्तदैव भवितुमर्हति यदा सकलध्वनिभेदेषु भक्तेरवस्थानं किन्तु अविवक्षितवाच्ये ध्वनिभेदे केवलं तत्स्थितिर्नतु विवक्षितान्यपरवाच्ये ध्वनावित्यव्याप्तिदोषसम्भव इति । तस्मात् = उक्तदोषसम्भवात् , भक्तिः, ध्वनेरलक्षणम् = नैव लक्षणमित्यर्थः ।

इस लक्षण की अव्याप्ति भी है । विवक्षितान्यपर वाच्य [ अभिधामूल ] ध्वनि और ध्वनि के अनेक प्रकारों में भक्ति या लक्षणा व्याप्त नहीं रहती है, इस लिए भक्ति ध्वनि का लक्षण नहीं है ।

**कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।**

"स्वबोधकत्वे सति स्वेतरबोधकत्वम्" उपलक्षणं—यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र, सा तु = गुणवृत्तिर्लक्षणा, कस्यचित् = अविवक्षितवाच्यस्य, ध्वनिभेदस्य, उपलक्षणं, स्यात् = सम्भाव्येतेत्यर्थः ।

वह भक्ति [ वक्ष्यमाण प्रभेद वाले ] ध्वनि के किसी विशेष भेद का [ काकवद् देवदत्तस्य गृहम् ] के समान अविद्यमान व्यावर्तक उपलक्षण हो सकती है ।

तदेव वृत्तिकारोऽपि व्याचष्टे—

**सा च पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया सम्भाव्येत ।**

अत्र "तदापि ध्वनिवादिनां न कापि क्षतिः" इति ग्रन्थो योज्यः । अर्थात्–यदि सा भक्तिर्वक्ष्यमाणध्वनिभेदेभ्यः कस्याप्यन्यतमस्याविवक्षितवाच्यस्य, भेदस्योपलक्षणं स्यात्तदा भवतु किन्तु तत्स्वीकारेण ध्वनिवादिनां न कापि क्षतिरिति तात्पर्य्यम् ।

यदि वह भक्ति वक्ष्यमाण के प्रसंगों में से किसी विशेष भेद का 'उपलक्षण' चतुर्थ कक्षा निवेशी व्यञ्जना व्यापार काल में व्यावर्तक सम्भव हो—

ननूपलक्षणात्मकभक्त्यैव सकलध्वनिभेदबोधसम्भवे किं ध्वनिलक्षणप्रदर्शनेनेति शङ्कां परिहरति—

यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते, तदभिधाव्यापारेणैव तदितरोऽलङ्कारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणकरणे वैयर्थ्यप्रसङ्गः । किं च—

यदि चेति । गुणवृत्त्यैव = भक्त्यैव, यदि=चेत्, ध्वनिर्लक्ष्यते=भक्तिरेव ध्वनि-लक्षणञ्चेदित्यर्थः, इत्युच्यते = इति कथयितुं शक्यते, तद् = तदा, अभिधाव्यापारे-णैव = अभिधाशक्त्यैव, तदितरः = तद्भिन्नः, समग्र एव = सकल एव, अलङ्कार-वर्गः = अलङ्कारसमूहः, लक्ष्यते, इति, प्रत्येकम् = पृथक् पृथक्, अलङ्काराणाम् = उपमादीनाम्, लक्षणकरणे = लक्षणविधाने, वैयर्थ्यप्रसङ्गः = लक्षणकरणमेव वृथा स्यादित्यर्थः ।

अत्रायं सारांशः—प्राचीनमतानुसारञ्चेद् भक्तिरेव ध्वनिलक्षणं मन्येत तदापि नैव तया सकलध्वनेरवगमः, नापि सकलव्यञ्जनायाश्चावगमः, अन्यथा त्वभिधयैव सर्व्वालङ्कारबोधे सर्व्वेषां पृथक् लक्षणकरणमेव निरर्थकं स्यात् । लक्षणकरणं हि सा-मान्यतयाऽवगतपदार्थस्य विशेषावगमायैव । न हि प्रमेयत्वेनावगतस्य घटस्य कम्बु-ग्रीवादिमत्वात्मकं लक्षणं घटत्वावगमाय कस्यचित् सम्मतम् । तस्माद् भक्तिः कदापि भक्तेर्न लक्षणं मन्तव्यमिति ।

और यदि उसी के आधार पर गुण वृत्ति से [ समग्र ] ध्वनि लक्षित हो सकती है यह कहा जाय तो अभिधा व्यापार से है । समग्र अंलकार वर्ग भी लक्षित हो सकता है । इस लिए व्याकरणों और मीमांसकों ने अभिधा का लक्षण कर देने पर और उस के द्वारा समस्त अलंकारों के लक्षित हो जाने से अलग अलग अलंकारों के लक्षण करना भामह आदि आलङ्कारिकों का प्रयास व्यर्थ ही है ।

और भी—

इदानीं तुष्यद्दुर्जनन्यायमाश्रित्य भक्तेर्ध्वनिलक्षणं स्वीकृत्यापि ध्वनिमेव परि-पोषयति—

लक्षणेऽन्यैः कृते चाऽस्य पक्षसंसिद्धिरेव नः ॥ २२ ॥

अस्य = ध्वनेः, अन्यैः = भक्तिपक्षपरिपोषकैः प्राचीनैः, लक्षणे, कृते = विहिते च, नः, = अस्माकम् ध्वनिमतावलम्बिनाम्, पक्षसंसिद्धिरेव = पक्षपरिपुष्टिरेवेत्यर्थः ।

यदि अन्य लोगों ने ध्वनि का लक्षण कर दिया है तो हमारी पक्षसिद्धि ही होती है।

तदेव वृत्तिकारोऽपि व्याचष्टे—

**कृतेऽपि वा पूर्वमेवाऽन्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः।**

यदि प्राचीनैर्भक्तिरेव ध्वनिलक्षणं स्वीक्रियते तदाऽस्माकमेवेष्टसिद्धिरि तात्पर्य्यम्।

अथवा यदि पहिले ही किन्हीं ने ध्वनि का लक्षण कर दिया है तो हमारी पक्ष सिद्धि ही होती है।

**यस्माद् ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसम्पन्न समीहितार्थाः सम्पन्नाः स्मः।**

यस्मात् = यतः, ध्वनिरस्ति = ध्वनिपक्षपरिपोषणमेवेति भावः, इति नः = अस्माकं, पक्षः, स च, प्रागेव = अस्मत्प्रयत्नात् पूर्वमेव, संसिद्धः = सम्पन्नः. इति वयम्, अयत्नैकसम्पन्नाः समीहितार्थाः इष्टार्था येषां ते तेऽयत्नसम्पन्नसमीहितार्थाः सम्पन्नाः = जाताः स्म।

क्योंकि 'ध्वनि' है—यही हमारा पक्ष है और वह पहिले सिद्ध हो गया इसलिए हम विना प्रयत्न के ही सफल मनोरथ हो गये [ हमारी इष्टसिद्धि हो गई।]

**येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुः। तेऽपि न परीक्ष्यवादिनः, यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि, यद्यनाख्येयत्वम्, तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम्।**

निरस्तमपि ध्वन्यभाववादपक्षं पुनरपि तं प्रदर्श्य प्रत्याचष्टे—येऽपीत्यादिना। येऽपि = ध्वन्यभाववादिनः, ध्वनेरात्मानम् = ध्वनेस्तत्त्वम्, सहृदयहृदयसंवेद्यम् = सहृदयानां हृदयेनैव ज्ञेयम्, अनाख्येयमेव = अनिर्वचनीयमेव, आम्नासिषुः = प्रावोचन्। तेऽपि, न = नहि, परीक्ष्यवादिनः = विविच्य वक्तारः। यतः = यस्माद्धेतोः, उक्तया नीत्या = 'यत्रार्थः शब्दो वा' तमर्थमुपसर्जनीकृतस्वार्थौ, इत्याद्युक्तकारिकया, वक्ष्यमाणया च नीत्या = "अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्" इत्यादिना

ध्वनेः, सामान्यलक्षणे विशेषलक्षणे च, प्रतिपादितेऽपि = कथितेऽपि, यदि = चेत्, अनाख्येयत्वम् = अनिर्वचनीयत्वम्, तत् = तदा, सर्वेषामेव = सकलानामेव, वस्तूनाम् = पदार्थानाम्, तत् = अनाख्येयत्वम्, प्रसक्तम् = आपन्नमित्यर्थः।

जिन्होंने सहृदय हृदय-संवेद्य ध्वनि के आत्मा को अवर्णनीय-अलक्षणनीय कहा है उन्हों ने भी सोच समझ कर ऐसा नहीं कहा है। क्योंकि अब तक कही हुई तथा आगे कही जाने वाली नीति से ध्वनि के सामान्य और विशेष लक्षण प्रतिपादित कर देने पर भी यदि ध्वनि को अलक्षणनीय कहा जाय तो फिर ऐसा अलक्षणीयत्व तो सभी वस्तुओं में आजावेगा।

**यदि पुनर्ध्वनेरतिशयोक्त्याऽनया, काव्यान्तरातिशायि स्वरूपमाख्यायते, तत्तेऽपि युक्ताभिधायिन एव॥**

**इति राजानकानन्दवर्धनाचार्य्यविरचिते ध्वन्यालोके प्रथम उद्योतः॥**

यदि = चेत्, पुनः, अनया, अतिशयोक्त्या = वैचित्र्योक्त्या, काव्यान्तराशायि = गुणीभूतव्यङ्ग्य-चित्रकाव्यापेक्षया विच्छित्तिविशेषोक्त्या विलक्षणम्, स्वरूपं = लक्षणम्, आख्यायते = कथ्यते, तत् = तदा, तेऽपि = महात्मानः, युक्ताभिधायिनः = उचितवादिनः, एवेति दिक्।

कान्तारे गहने शून्ये प्रविष्टोऽलक्ष्यदेवभाक्।
देवि! दुर्गे! त्वयाऽप्येष शरणं नीयतां नतः॥
पोषणशर्मतनूज–श्रीमदलखदेवशर्म्मणा विदुषा।
रचितप्रकाशिकायां प्रथमोद्योतः समाप्तोऽयम्॥

इति पाण्डेयोपनामकश्र्यलखदेवशर्मविरचितायां ध्वन्यालोकप्रकाशिकायांप्रथम उद्योतः

यदि वह अतिशयोक्ति द्वारा (वेदान्तियों के अनिर्वचनीयता वाद के समान) ध्वनि का अन्य काव्यों से उत्कृष्ट स्वरूप का प्रतिपादन करते हैं तब तो वह भी ठीक ही कहते हैं।

इति श्रोत्रियप्रवरश्रीमदलखदेवशर्म्मनिर्मितायां हिन्दीव्याख्यायां प्रथमोद्योतः।

पोषणशर्म्मतनूज–श्रीमदलखदेवशर्म्मणा विदुषा।
रचिताऽर्थदीपिकायां, भाषायां प्रथम उद्योतः॥

❀ इति प्रथमोद्योतः ❀

# अथ द्वितीय उद्योतः ।

लक्ष्योऽप्यलक्ष्यदेवो विपिनविहारी तदीयशक्तिश्च ।
देवीतद्वनगहने पतितस्यालब्दयवर्त्मनः शरणम् ॥

अथ प्रथमोद्योते परमतखण्डनपुरस्सरं ध्वनिं संस्थाप्य तदीयं सामान्यभेदद्व प्रदर्श्य च तदीयविशेषभेदान् निरूपयितुं द्वितीयमुद्योतं प्रारभमाणः वृत्तिका कारिकामवतारयति—

**एवमविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वे ध्वनिर्द्विप्रकारः प्रका शितः । तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—**

**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥२३॥**

उद्योतस्य सङ्गतिं चिकीर्षुर्वृत्तिकारः प्रारभते—एवमित्यादि । प्रकाशि इत्यत्र वृत्तिकारेणेति योज्यम् । तत्र = भेदद्वये प्रथमोद्योते प्रदर्शितेऽविवक्षित वाच्यस्य यः प्रभेदस्तत्प्रतिपादनाय तत्कथनायेदमुच्यते वक्तुं प्रारभ्यते ।

अर्थान्तर इति । यत्र वाच्यम्, अर्थान्तरे = अन्योऽर्थः, अर्थान्तरं तस्मि वाच्यापेक्षया भिन्नेऽर्थे संक्रमितम् = मिलितम् परिणतं वा, प्रविष्टं वा, वा = तथा यत्र वाच्यं अत्यन्तं = सर्वथा तिरस्कृतम् = त्यक्तम्, अनुपयुक्तमित्यर्थः इति, अवि वक्षितवाच्यस्य, तन्नाम्नो ध्वनेः वाच्यं द्विधा मतम् । अर्थात्, अर्थान्तरसंक्रमित वाच्य एकः, अत्यन्ततिरस्कृतवाच्यो द्वितीय इति द्विविधो ध्वनिरित्यर्थः ।

अत्राऽयं भावः—यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्त परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपेऽर्थान्तरे संक्रमितत्वादर्थान्तरसंक्रमित वाच्यत्वम्, अत्र सूत्रन्यायेनार्थस्य रूपान्तरपरिणतत्वम् । यत्र पुनः स्वार्थं सर्व परित्यजन् अर्थान्तरे परिणमति तत्र मुख्यार्थस्याऽत्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृ वाच्यत्वम् । अत्रार्थः पलायित इव तिरस्कृतो लक्ष्यत इति सारम् ।

इस प्रकार अविवक्षितवाच्य [ लक्षणामूल ] तथा विवक्षितान्यपरवाच्य [ अभिधामूल ] के भेद से ध्वनि दो प्रकार के बतलाये गये हैं । उनमें से अवि क्षितवाच्य के भेद कहने के लिये आगे कारिका कही जा रही है ।

अर्थान्तर संक्रमितवाच्य और अत्यन्त तिरस्कृतवाच्य के भेद से अविवक्षित-वाच्य ध्वनि के दो भेद हैं। उसमें पहला वाच्य के अविवक्षित हो जाने के कारण अविवक्षितवाच्य कहा जाता है। इसमें वाच्य के अर्थान्तर में संक्रमित होने से अर्थान्तर संक्रमित और वाच्य के अत्यन्ततिरस्कृत हो जाने से अत्यन्ततिरस्कृत कहा जाता है ॥ २३ ॥

व्यङ्ग्यार्थप्रकाशपरस्य ध्वनेर्निरूपणप्रस्तावे वाच्यभेदनिरूपणं नितरामसङ्गत-मित्याशङ्कायामाह—

**तथाविधाभ्यां च ताभ्यां व्यङ्ग्यस्येव विशेष इति**
**व्यङ्ग्यप्रकाशनपरस्य ध्वनेरेवायं प्रकारः ।**

तथाविधाभ्याम्=पूर्वोक्तप्रकाराभ्यामर्थान्तरसंक्रमितात्यन्ततिरस्कृताभ्यामित्यर्थः ताभ्यां=वाच्याभ्याम्, व्यङ्ग्यस्यैव=वाच्यस्य, न, विशेषः=भेदः, इति हेतोः व्यङ्ग्यप्रकाशनपरस्य=व्यङ्ग्यव्यञ्जनपरस्य, ध्वनेरेव=नतु गुणीभूतव्यङ्ग्यस्य अयं प्रकारः=भेदः इत्यर्थः। व्यङ्ग्यभेदनिरूपणोपकारि वाच्यभेदनिरूपणं हि नितरामा-वश्यकमिति भावः।

उस प्रकार के वाच्यों से अर्थात् अर्थान्तर में परिणत और अत्यन्ततिरस्कृत हो जाने से व्यङ्ग्यार्थ की ही विशेषता होती है। क्योंकि वाच्य के द्वारा ही व्यङ्ग्य की उत्कर्षता होती है।

**तत्रार्थान्तरसङ्क्रमितवाच्यो यथा—**

**'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,**
**वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव ॥'**

अविवक्षितवाच्यध्वनेः प्रथमभेदस्योदाहरणं वक्ति—स्निग्धेत्यादि। वर्षाकाले विरहसन्तप्तां सीतां मनसिकृत्य तद्विरहव्याकुलो रामो, वदति। स्निग्धश्यामल-कान्तिलिप्तवियतः=स्निग्धा कोमला श्यामला नीला च या कान्तिस्तया (साधनेन) लिप्तं वियदाकाशं यैस्ते तथोक्ताः, वेल्लद्बलाकाः=वेल्लन्त्यो विल-सन्त्यः सविनोदं चलन्त्यः बलाका बकपङ्क्तयो येषु ते तथोक्ताः। "वर्षासु बला

उड्डीयन्त" इति प्रसिद्धिः । "बलाका वकपंक्त्यां स्याद्विषकण्ठ्यां बकस्त्रियाम् कामुक्यां च बलाकोऽपी"ति गोपालकोषः । घनाः = मेघाः विचरन्तीति शेषः । वाता = वायवः। शीकरणः = जलकणिकान्विताः, वहन्तीति शेषः । पयोदसुहृदः = पयो जलं ददतीति पयोदा मेघास्तेषां सुहृदः मित्राणि तेषां तथोक्तानाम्, मयूराणामित्यर्थः । मेघोदये हि मयूराः प्रमोदन्त इति तेषां मित्रत्वम् । कलाः = अव्यक्तमधुराः, आनन्दकेकाः = आनन्दस्योत्पादिकाः केकाः = वाण्यः । "केका वाणी मयूरस्य" इत्यमरः । कामं = यथेष्टम्, सन्तु । एतेन घनादीनां दुःखकारित्वादि स्वस्य च धीरतया कथमपि सोढृत्वं द्योत्येते । दृढम् = अत्यन्तम्, कठोरहृदयः = कठोरमायसतोऽपि कठिनं हृदयं मनो वक्षःस्थलं वा यस्य तथोक्तः, रामः, अस्म्यहमित्यर्थः, सर्वं = समस्तं दुःखजातं, सहे = मर्षयामि यद्वा हे सर्वंसहे ! सर्वसहनशीले पृथिवि ! एतेन स्वप्रियापत्यस्यापि तथाविधाकारणानर्थसम्पातं त्वं सहसे, इति मदपि त्वमधिकेति सूच्यते । तु = किन्तु, वैदेही = विदेहपुत्री सीता, कथं भविष्यति = केन प्रकारेण जीविष्यति । इति विचारयन् रामो भावनया प्रत्यक्षीक्रियमाणां सीतां तज्जननीं पृथिवीञ्च मरणोन्मुखीमाश्वासयति—हहाहेति, ह = कष्टम्, हा = कष्टम्, हा = कष्टम्, हे देवि सीते ! हे पृथ्वि ! धीरा भव = क्षणं सहस्वेति तात्पर्य्यम् । हनुमन्नाटकस्येदं पद्यम्, शार्दूलविक्रीडितं छन्दः ।

अत्र श्लोके "वैदेही तु कथं भविष्यतीति" वैदेह्या विरहो ध्वन्यते । "कामं सन्तु" इति पदेन विरहिणो रामस्य मेघादीनामपि दुःखदायित्वं ध्वन्यते । "दृढं कठोरहृदयः" इति पदेन स्वस्य झटिति जीवितत्यागौचित्येऽपि स्वतन्त्राभावो व्यज्यते । रामोऽस्मीति पदं कठोरहृदयत्वस्य सर्वंसहत्वचोपपत्तये जन्मनः प्रभृति तातनिधनवनवास-प्रियाहरणादीनामापततां बहूनां क्लेशानां भाजनत्वं व्यनक्ति अन्यथा रामस्य वक्तृत्वे 'अस्मी'त्युक्त्यैव रामपदार्थलाभे रामपदस्य पौनरुक्त्यम् रामपदस्य च रमणीयाह्लादकादिवाचकतया दुःखशालिवाचकत्वाभावात् कठोरहृदयत्वादिनात्मनिरूपणं च नोपपद्येत । "सर्वं सहे" इति पदेन तेषां भीषणत्वे स्वस्य सहिष्णुत्वं व्यज्यते । त्वमपि अहमिव हे पृथिवि ! किं पुनस्त्वदग्रे निवेदये प्रलपनं वा व्यज्यते । हहाहेतिपदं धैर्यशालित्वेऽपि कष्टातिकष्टशालित्वेन तेषामसह्यत्वं

चावेदयतीति वैदेह्यालम्बनको घनाद्युदीपितो विलापानुभावको विषादादिसञ्चारको रामनिष्ठो विप्रलम्भो ध्वन्यते ।

उसमें से अर्थान्तर-संक्रमितवाच्य का उदाहरण दिखलाते हैं—जैसे—

चिक्कण और श्यामकान्ति से आकाश को छाये हुए, और जहाँ पर बगुलों की पङ्क्तियाँ चल रही हैं ऐसे सघन मेघ भलेही लगते रहें, ठण्ढी ठण्ढी हवायें भलेही बहती रहें, मेघों के मित्र मोरों की आनन्दभरी कूकें भी भलेही मालूम पड़ती रहें, मैं तो कठोर हृदयवाला राम हूँ, सब सह लूंगा, किन्तु वैदेही जानकी प्रिया किस प्रकार होगी ? हा देवि ! धैर्य्य धारण करो ।

इत्यत्र रामशब्दः ।

इत्यत्र = उक्तपद्ये, रामशब्दः, अर्थान्तरसंक्रमितवाच्यो ध्वनिः । अत्र वाच्यो दाशरथिरूपोऽर्थः, राज्यपरित्याग—घनवनगमन—घटावल्कलधारण—तातमरण—प्रिया-हरणजन्यदुःखातिशयसहनत्वरूपे व्यङ्ग्येऽर्थे संक्रमित इत्यर्थान्तरसंक्रमितवाच्यः । अत्र ध्वन्यवकाशदानाय कठोरहृदयपदमेव न केवलं रामपदम् अन्यथा दशरथ-कुलोद्भवत्व-कौसल्यास्नेहपात्रत्व बाल्यचरित-जानकीलाभादिधर्मान्तरपरिणतमर्थं कुतो न ध्वनेत् इति तत्त्वम् । राज्यनिर्वासनाद्यसंख्यव्यङ्ग्यञ्चाभिधाव्यापारेण कथमपि न प्रतीयेतेति सारांशः ।

इस श्लोक में रामशब्द के दशरथापत्यार्थवाच्य में परिणत रहने पर भी राजपरित्याग-भयङ्कर वनगमन-जटावल्कलधारण-पितृनिधन-प्रियाहरणजन्यदुःख-सहिष्णुत्वरूप अर्थान्तर में परिणत होने से अर्थान्तरसंक्रमितवाच्य है ।

अनेन हि व्यङ्ग्यधर्मान्तररूपपरिणतः सञ्ज्ञी प्रत्याय्यते, न तु सञ्ज्ञिमात्रम् ।

हि = यतः, अनेन = रामशब्देन, दाशरथिरूपवाच्यमात्रस्यानुपयोगाद्, व्यङ्ग्य-धर्मान्तररूपपरिणतः = व्यङ्ग्ये धर्मान्तरे राज्यपरित्यागाद्यनेकदुःखातिशयसहनशील-वत्त्वे रूपे परिणतः, संज्ञी = दाशरथिरूपोऽर्थः, प्रत्याय्यते = बोध्यते, न तु संज्ञि-मात्रम् = केवलो वाच्यः ।

"न संज्ञामात्रम्" इति पाठे तु, न केवलं संज्ञामात्रं नाममात्रमित्यर्थः । किन्तु संज्ञाशक्त्यभावात् तत्प्रत्यायनं हि नितरामसम्भवम् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्व्वं शब्देन भासते ॥'

इत्यभियुक्तोक्त्या वैयाकरणाः सङ्केतसम्बन्धेन संज्ञाशब्दावच्छिन्नेऽपि शक्तिं स्वीकुर्व्वन्ति तन्मते यथाकथञ्चित् सोऽपि पाठः साधीयान् इति विद्वद्भिर्विचारणीयम्।

इससे केवल संज्ञिमात्र राम का बोध नहीं होता, किन्तु व्यङ्ग्यधर्मविशिष्ट राम का बोध होता है।

निजरचितविषमबाणलीलाख्यस्य काव्यस्य पद्यमुदाहरति—

यथा च ममैव विषमबाणलीलायाम्—

'ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति ।
रइकिरणानुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥'

( छाया ) तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

तदेति । तदा = तदैव, "अब्भक्षो वायुभक्ष" इत्यत्रेव विनाप्येवकारमेवेत्यस्य सम्बन्धः, गुणाः = शूरत्वादयः, गुणाः = प्रशंसनीयाः, जायन्ते = भवन्ति, यदा, सहृदयैः = सज्जनैर्गुणग्राहिभिः, गृह्यन्ते = हृदयेनीयन्ते । रविकिरणानुगृहीतानि = सूर्य्यमयूखप्रफुल्लितानि, कमलानि = पद्मानि, कमलानि = सौरभसम्पत्तिशालीनि, येषु किल सूर्य्यकिरणानां न संयोगस्तानि कमलानि कमलानि नेति भावः ।

जघनविपुलाख्यं वृत्तमिदम् । पद्येऽस्मिन् यथा सूर्य्यकिरणविकसितानामेव कमलानां शोभाधिक्यम्, तथा सहृदयहृदयाह्लादकत्व एव गुणानां विशेषप्राशस्त्यमिति प्रतिवस्तूपमानिर्देशात् प्रतिवस्तूपमालङ्कारः । केचन "अर्थान्तरन्यासमाह—रविकिरणेति" इति लोचनलेखं खण्डयन्ति तन्न विदुषां विचारसहं विशेषेण कमलशोभाधिक्यवर्णनेन सामान्यस्य गुणप्राशस्त्यवर्णनस्य समर्थनादर्थान्तरन्यासस्य सुतरां सम्भवात् ।

और जैसे मेरे ही "विषम बाणलीला" काव्य में—

गुण गुण तभी कहे जाते हैं जब सहृदयों से ग्रहण किये जाते हैं, सूर्य की किरणों से अनुगृहीत कमल ही कमल कहे जाते हैं ।

अत्र द्वितीयः कमलशब्दः।

अत्र = ताला जाअन्ति श्लोके द्वितीयः = अपरः, कमलशब्दः = वाच्यस्य सौरभसम्पत्ति-लक्ष्मीपात्रत्वाद्यर्थान्ते परिणमनादर्थान्तरसंक्रमितवाच्यः।

अत्रेदमाकूतम्—ननु तद्धर्मावच्छिन्नविशेष्यताकशालिशाब्दबुद्धित्वावच्छेदकावच्छिन्नं प्रति तद्धर्मभेदस्य प्राशस्त्येनाभेदसम्बन्धावच्छिन्नयत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यताकशालिशाब्दबुद्धित्वावच्छेदकावच्छिन्नं प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदः कारणमिति कार्याकारणभावमूलकाभेदान्वयबोधं प्रति विरूपोपस्थितयोः कारणत्वमिति व्युत्पत्त्या कमलकमलशब्दयोर्विरूपोपस्थित्यभावात् कथमभेदान्वय इति चेन्न व्यङ्ग्यवैशिष्ट्यात्। कृतिभेदे न द्वितीयकमलशब्दार्थेन सह प्रथमकमलशब्दार्थस्याभेदान्वयबोधसम्भवात्।

अत एव—

काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः।
प्राप्ते वसन्तसमये काकः काकः पिकः पिकः॥
हंसः श्वेतो वकः श्वेतः को भेदो वकहंसयोः।
नीरक्षीरसमावेशे हंसो हंसो वको वकः॥

इत्यादौ द्वितीयकाकपिकद्वितीयवकहंसशब्दवदर्थान्तरसङ्क्रमितवाच्यः।

यहाँ द्वितीय कमल शब्द लक्ष्मीभाजनत्वादि धर्मविशिष्ट कमल का बोधक है, इसलिये अर्थान्तरसंक्रमित वाच्य है।

अत्यन्ततिरस्कृतवाच्यो यथाऽऽदिकवेर्वाल्मीकेः—

'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निश्श्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥'

इत्यत्राऽन्धशब्दः।

अन्वयः—रविसङ्क्रान्तसौभाग्यः, तुषारावृतमण्डलः, चन्द्रमाः, निश्श्वासान्धः, आदर्शः, इव, न, प्रकाशते।

अथात्यन्ततिरस्कृतवाच्यध्वनिमुदाहर्तुं प्रक्रमते—अत्यन्तेति, आदिकवेरित्यनेन लक्ष्यस्य प्राशस्त्यम्।

रविसंक्रान्तेति। पद्यमिदं वाल्मीकिरामायणेऽरण्यकाण्डे षोडशे सर्गे सूर्पणखाया भाविनो मदनोद्दीपनस्य सूचनाय हेमन्तवर्णनप्रस्तावे पञ्चवट्यां लक्ष्मणेनोक्तम्। रविसंक्रान्तसौभाग्यः = रविणा सूर्य्येण सङ्क्रान्तं कृताक्रमणं सौभाग्यं सुभगत्वं सुन्दरत्वमिति यावत्, यस्य सः। सूर्य्ये ह्यभ्युदयमाने चन्द्रः कियन्तं कालं दृश्यमानश्चित्रित इवावतिष्ठत इति स्वाभाव्याच्चन्द्रमसः प्रकाशः सूर्य्यप्रकाशस्य पुरस्तादस्तमित इव प्रतिभातीति तात्पर्य्यम्। एतेन प्रातःकाले गोदावर्य्यामवगाह्य पुनरावर्तमानस्य लक्ष्मणस्यैवोक्तिर्न तु रामस्य। रामस्योक्तिरियमिति केषाञ्चन कथनं मुधा प्रतिभाति।

अत्रायं निष्कर्षः—यथा मुखवाष्पविधुरा दर्पणाकृतिः नैव शोभातिशायिनी, नापि जनानां हितकरी, तथा हेमन्तर्तौ सूर्य्यस्यैवाऽऽह्लादकत्वेन तत्तेजसः स्वच्छत्वात् हिमानामाधिक्येनाऽऽवरणाच्च चन्द्रमसो मण्डलं नभोमण्डले न स्वच्छं नापि सुखकरं प्रतिभातीति सारांशः।

इत्यत्र = उक्तपद्येऽन्धशब्दः "अन्ध दृष्ट्युपघाते" इति धातुनिष्पन्नत्वेन उपहतदृष्टिके शक्तः। दर्पणे च दृष्टेरभावान्मुख्यार्थवाधाद्वाधितस्वरूपोऽत्यन्ततिरस्कृतवाच्यत्वेन पदार्थस्फुटीकरणाशक्तत्वं ध्वनयन्नत्यन्ततिरस्कृतवाच्यः।

अत्यन्त तिरस्कृत वाच्य का उदाहरण, आदिकवि वाल्मीकि का है, जैसे—

(हेमन्त में) सूर्य्य की कान्ति में जिसकी कान्ति मिल गई है और पाले से आच्छादित मण्डलवाला चन्द्रमा, श्वास वायु से मलिन दर्पण की तरह, प्रकाशित नहीं होता है।

यहाँ अन्धशब्द अप्रकाशत्वरूप अर्थ में परिणत है, इसलिये अत्यन्त तिरस्कृत वाच्य है।

'गअणं च मत्तमेहं धारालुलिअज्जुणाइं अ वणाइं।
णिरहङ्कारमिअङ्का हरन्ति नीलाओ वि णिसाओ॥'

(छाया) गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः॥

अत्र मत्तनिरहङ्कारशब्दौ।

पदगतमत्यन्ततिरस्कृतवाच्यध्वनिमुदाहृत्य वाक्यगतमुदाहरति—गगनमिति।

गगनम् = आकाशः, मत्तमेघम् = मत्ता इतस्ततो धावन्तः मेघा यत्र तत् च = अपि मेघाच्छन्नमपीति यावत् ( न केवलं तारकितमिति भावः ) वनानि = अरण्यानि, धाराल्लुलितार्जुनानि = धाराभिः, आसारैः लुलिता विच्छिन्ना अर्जुना वृक्षा यत्र तानि । अत्रापि चोऽप्यर्थे ( न केवलं मलयमारुतान्दोलिताम्रवृक्षाणि वनानि ) किन्तु मुसलाधारवृष्टिविच्छिन्नार्जुनवृक्षाण्यपीति सारांशः । निशाः = रात्रयः, निरहङ्कारमृगाङ्काः = निरहङ्कारः, शोभाया राहित्येन दर्पंरहितः, मृगाङ्कश्चन्द्रो यासु ताः । नीला, अपि = ज्योत्स्नाया अभावेन, तमसाच्छादिता अपि हरन्ति = यूनां चित्तमाकर्षयन्तीति भावः ।

अत्र = श्लोके मत्तनिरहङ्कारशब्दावत्यन्ततिरस्कृतवाच्यौ । मत्तशब्द इह क्षीबत्वस्य जीवधर्मतया मेघे बाधात् सर्वथाऽसम्भवत्स्वार्थः परितो भ्रमणं लक्षयन्नसमञ्जसकारित्व-दुर्निवारत्वादिधर्मंसहस्रं ध्वनयति । एवं निरहङ्कारशब्दोऽपि अहङ्कारत्वस्य जीवधर्मतया चन्द्रे बाधात् सर्वथाऽसम्भवत्स्वार्थो मालिन्यं लक्षयन् तत्पारतन्त्र्य-विच्छायत्वानुजिगमिषारूपजिगीषात्यागप्रभृतिं ध्वनयति ।

मदमाते उमड़ते मेघों से आच्छादित आकाश, वर्षाकालीन धाराओं से कम्पित अर्जुनवन, मदरहित चन्द्रमावाली काली रातें भी मनको हरण करनेवाली होती हैं ।

यह मत्त-निरहङ्कार शब्द क्षीवत्व और अभिमान जीवधर्म होने के कारण अत्यन्त तिरस्कृत होकर, परितोभ्रमण और मलिनत्व अर्थ बतलाता है ।

असंलक्ष्यक्रमोद्योतः, क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २४ ॥

अन्वयः—विवक्षिताभिधेयस्य, ध्वनेः, असंलक्ष्यक्रमोद्योतः, ( एकः ) क्रमेण, द्योतितः, परः ( द्वितीयः ), आत्मा, द्विधा, मतः ॥ २४ ॥

अथ विवक्षितान्यपरवाच्याख्यस्य ध्वनेः स्वरूपप्रदर्शनपूर्वकं भेदं निर्दिशति—असंलक्ष्यक्रमोद्योत इति । विवक्षिताभिधेयस्य = विवक्षितं वक्तुमिष्टमभिधेयं वाच्यं यस्य तस्य विवक्षिताभिधेयस्य विवक्षितान्यपरवाच्यस्य ध्वनेः, असंलक्ष्यक्रमोद्योतः = असंलक्ष्यः न सम्यक् लक्ष्यः क्रमः यस्मिन् तादृक् उद्योतः प्रकाशो यस्य सः असंलक्ष्यक्रमव्यङ्ग्य इति यावत्, एकः, क्रमेण = पौर्वापर्य्यक्रमेण द्योतितः, अर्थात् संलक्ष्यक्रमोद्योतः, संलक्ष्यक्रमव्यङ्ग्य इति यावत् परः = द्वितीयः ।

( इत्थम् ) द्विधा = द्विप्रकारः, आत्मा = स्वरूपम् , मतः = सिद्धान्तितः, आचार्यै रित्यर्थः । विवक्षितान्यपरवाच्यस्य ध्वनेः असंलक्ष्यक्रमव्यङ्ग्य-संलक्ष्यक्रमव्यङ्ग्यत्वेन द्वौ भेदौ स्त इति कारिकासारांशः ॥ २४ ॥

विवक्षितान्यपरवाच्य ध्वनि के 'असंलक्ष्य क्रमव्यङ्ग्य' और 'संलक्ष्य क्रमव्यङ्ग्य' के भेद से दो प्रकार के होते हैं। उसमें प्रथम का व्यङ्ग्यक्रम लक्षित नहीं होता है और द्वितीय का व्यङ्ग्यक्रम लक्षित होता है।

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा। स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते, कश्चित् क्रमेणेति द्विधा मतः।

कारिकार्थं मूलेऽपि विशदीकरोति—मुख्यतयेति। मुख्यतया = प्रधानतया, प्रकाशमानः = व्यज्यमानः, व्यङ्ग्योऽर्थः ध्वनेरात्मा स्वरूपम्। स च = व्यङ्ग्योऽर्थः, वाच्यार्थापेक्षया = अभिधाप्रतिपाद्यार्थापेक्षया विभावाद्यपेक्षयेत्यर्थः कश्चित् = कोऽपि, अलक्ष्यक्रमतया = क्रमस्यालक्ष्यत्वेन, प्रकाशते = भासते, कश्चित् = कोऽपि, क्रमेण, इति = इत्थम्, द्विधा = द्विप्रकारः, मतः = संमतः। यद्यपि प्रथमे भेदेऽसंलक्ष्यक्रमेऽपि व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तूत्पलपत्रशतभेदवल्लघुत्वान्न संलक्ष्यत इति बोध्यम्। प्रथमश्लोके व्यङ्ग्यस्य वाच्यमुखेन भेदः प्रोक्तः। अस्मिंस्तु द्योतनव्यापारमुखेन भेदः प्रदर्शित इति वैशिष्ट्यम्।

मुख्यरूपेण प्रकाशित होनेवाला व्यङ्ग्य अर्थ ध्वनि की आत्मा होती है। वह वाच्यार्थ की अपेक्षा से कोई अलक्ष्यक्रम से प्रकाशित होता है, कोई संलक्ष्य क्रम से। इस प्रकार दो प्रकार के होते हैं॥ २॥

तत्र—"रसभाव-तदाभास-तत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥ ३॥"

अन्वयः—रसभावतदाभासतत्प्रशान्त्यादिः, अक्रमः, अङ्गिभावेन, भासमानः, ध्वनेः, आत्मा, व्यवस्थितः।

तत्र=असंलक्ष्यक्रमव्यङ्ग्यसंलक्ष्यक्रमव्यङ्ग्ययोर्मध्येऽसंलक्ष्यक्रमव्यङ्ग्यस्य स्वरूपं दर्शयति—रसभावेति। रसाः = शृङ्गारादयो नव रसाः, तदुक्तं दर्पणे—

"शृङ्गार-हास्य-करुण-रौद्र-वीर भयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः॥ इति

भावाः = रत्यादयो नव, स्थायिभावास्त्रयस्त्रिंशत्—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थ-मष्टौ प्रोक्ताः शमोऽपि च ॥ इत्यादयः

प्रधाना निर्वेदादयस्त्रयस्त्रिंशद्व्यभिचारिभावाश्च—भावपदेन गृह्यन्ते—

तदुक्तं—सञ्चारिणः प्रधानानि देवादिविषया रतिः।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥ इति

अत एव च "न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृतासिद्धिरनयो रसभावयो"रित्युक्तदिशा रसभावयोरैक्यमुक्तं भवति।

तदाभासाः, तेषां रसानां भावानाञ्च, आभासास्तदाभासाः, रसाभासाः, भावाभासाश्चेत्यर्थः, अनौचित्येन प्रवृत्तिदर्शनाद् दुष्टा रसा दुष्टा भावा एव रसाभासाः, भावाभासाश्च कथ्यन्त इति बोध्यम्। तत्प्रशान्त्यादिः तेषां भावानां प्रशान्तिः प्रशमः, आदिः प्रधानं यस्य सः—अत्रादिपदेनोदय-सन्धि-शबलत्वानि गृह्यन्ते। तेन, भावशान्तिः—भावोदयः—भावसन्धिः-भावशबलः, एषां चतुर्णां बोधः। रसाः भावाः तत्प्रशान्तिः आदिः प्रधानं यस्य स इति समासः, अक्रमः = न क्रमो यस्य सः, असंलक्ष्यक्रमः, अङ्गित्वेन = प्रधानत्वेन, भासमानः = प्रतीयमानः, ध्वनेः = विवक्षितान्यपरवाच्यस्य, आत्मा = स्वरूपम्, व्यवस्थितः = निर्णीत इत्यर्थः।

तत्र रसध्वनिर्यथा उत्तररामचरिते—

"किमपि किमपि मन्दं मन्दमासत्तियोगा
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥

अत्र सम्भोगशृङ्गारो रसः।

यदा कश्चिदुद्रिक्तावस्थां प्राप्तो व्यभिचारी चमत्कृत्यतिशयप्रयोजको भवति तदा भावध्वनिः। यथा विक्रमोर्वश्याम् पुरूरवस उक्तौ—

'तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

अत्र विप्रलम्भशृङ्गाररसस्य सत्त्वेऽपि वितर्काख्यव्यभिचारिभावस्य, चमत्कारातिशयाद् भावध्वनिः ।

रसाभासो यथा कुमारसम्भवे—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥

अत्र तिर्यग्विषयत्वादनौचित्यप्रवृत्त्या रसाभासः । तदुक्तं दर्पणे—

अनौचित्यप्रवृत्तत्व आभासो रसभावयोरिति ॥

भावाभासो यथा—

'राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत्किं करोमि ? विदधे कथमत्र मैत्री ? तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥

इत्यत्र सीतामननुरक्तामपि चिन्तयतो रावणस्योक्तौ चिन्तारूपभावाभासः ।

भावशान्तिर्यथाऽमरुशतके—

'सुतनु ! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥'

इत्यत्र हि वाष्पमोचनेन ईर्ष्याख्यसञ्चारिभावस्य शमः ।

भावोदयो यथा पुनरमरुशतक एव—

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निश्श्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥

अत्र विषादाख्यस्य व्यभिचारिभावस्योदयः ।

भावसन्धिर्यथा—

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥"

इत्यत्र हर्षविषादयोर्व्यभिचारिभावयोः सन्धिः ।

भावशबलता यथा विक्रमोर्वश्यां पुरूरवसो विलापवर्णने—

'क्वाकार्यं ? शशलक्ष्मणः क्व च कुलं ? भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति।।

इत्यत्र विषादौत्सुक्य-मति-स्मृति-शङ्का-दैन्य-धृति-चिन्तानां व्यभिचारिभावानां शबलता ।

रस, भाव, तदाभास अर्थात् रसाभास, भावाभास, भावशान्ति, भावोदय, भावसन्धि, भावशबलता इतने अक्रम माने असंलक्ष्यक्रम व्यङ्ग्य अङ्गिभाव से भासमान होकर ही ध्वनि के स्वरूप हैं ।

**रसादिरर्थो हि सहैव वाच्येनावभासते । स चाङ्गित्वेनावभासमानो ध्वनेरात्मा ।**

कारिकार्थं विशदीकरोति—रसादिरिति । रसादिः = रसः आदिपदेन भावादिः, अर्थः = व्यङ्ग्यार्थः, हि = यतः, वाच्येन विभावादिना, सहैव = सममेव, अवभासते = प्रत्येति । स च = रसादिरर्थः, अङ्गित्वेन = प्रधानत्वेन, मुख्यत्वेनेत्यर्थः, अवभासमानः = प्रतीतिविषयीभवन् ध्वनेः आत्मा = स्वरूपमित्यर्थः ।

रसादिरूप अर्थ वाच्य के साथ ही प्रतीत होता है और वह प्रधानतया रह कर ही ध्वनि का स्वरूप होता है ।

**इदानीं रसवदलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति प्रदर्श्यते—**

अथ रसवदाद्यलङ्कारेभ्यो रसादिध्वनेर्भेदं प्रदर्शयितुमारभते—

इदानीमित्यादिना । इदानीम् = ध्वनिविषयसमालोचनावसरे, रसवदाद्यलङ्कारात् = रसवत्-प्रेय-ऊर्जस्विसमाहित-भावोदय-भावसन्धि-भावशबलत्वाद्यलङ्कारेभ्यः, एकवचनन्तु जात्यभिप्रायेण, अलक्ष्यक्रमद्योतनात्मनः = असंलक्ष्यक्रमोद्योतनस्य रसादिध्वनेः, विभक्तः = विभिन्नः विषयः = लक्ष्यः, इति, वक्ष्यमाणकारिकाद्वयेन प्रदर्श्यते = निर्दिश्यते ।

अब रसवदलङ्कारों से असंलक्ष्यक्रम व्यङ्ग्यध्वनि का भिन्न विषय दिखलाते हैं ।

'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ ४ ॥

अन्वयः—यत्र, विविधात्मनाम्, वाच्यवाचकचारुत्वहेतूनाम्, रसादिपरता, सः, ध्वनेः, विषयः, मतः ।

अथ रसादिध्वनेर्विषयं प्रथमं प्रदर्शयति—वाच्यवाचकेति । यत्र= यस्मिन् काव्ये, विविधात्मनाम्=विविधोऽनेकविधः आत्मा स्वरूपं येषां ते तेषां नानाप्रकाराणामित्यर्थः, वाच्यवाचकचारुत्वहेतूनाम्=वाच्यश्च वाचकश्च तच्चारुत्वहेतवश्च ते वाच्यवाचकचारुत्वहेतवस्तेषाम्, शब्दार्थोभयालङ्काराणामित्यर्थः, रसादिपरता=रसादिव्यङ्ग्यपरत्वम्, अस्तीति शेषः, सः, ध्वनेविषयः=लक्ष्यः मतः= सम्मत इत्यर्थः ।

जहाँ अनेक प्रकार के वाच्यवाचक शब्दार्थ के तथा उनके सौन्दर्य्य के कारण शब्दालङ्कार और अर्थालङ्कार रसादिपरक होते हैं अर्थात् रसादि के अङ्ग होते हैं वह ध्वनि का विषय है ॥ ४ ॥

रस-भाव-तदाभास-तत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थिताः, तत्र काव्ये ध्वनिरिति व्यपदेशः ।

कारिकार्थं विशदीकरोति वृत्तिकारः—रसभावेत्यादिना । रसः नवविधः, भावश्च नवविधः, तदाभासाः रसाभासाः, भावाभासाश्च, तत्प्रशमः, भावशान्तिः, भावोदय-भावसन्धि-भावशबलत्वादिरप्युपलक्षणत्वात् तल्लक्षणं तत्स्वरूपं मुख्यम् प्रधानमर्थम्, अनुवर्तमानाः=उपस्कुर्वाणाः, शब्दार्थालङ्काराः=शब्दालङ्काराः, अर्थालङ्काराः शब्दार्थोभयालङ्काराश्च, गुणाश्च=माधुर्यादयश्च, परस्परं=मिथः, ध्वन्यपेक्षया, च=ध्वनेरपेक्षया च, विभिन्नरूपाः=पृथग्रूपाः, व्यवस्थिताः= विशेषेण विराजमानाः, तत्र=काव्ये, ध्वनिः, इति, व्यपदेशः=व्यवहार इत्यर्थः ।

जिस काव्य में रस-भाव तदाभास और तत्प्रशमरूप मुख्य अर्थ के अनुगामी शब्दार्थ उनके अलङ्कारगुण परस्पर ध्वनि की अपेक्षा से भिन्नरूप में स्थित हैं उसी काव्य में ध्वनि का व्यवहार होता है ।

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ ५ ॥

अन्वयः—यत्र, तु अन्यत्र, वाक्यार्थे, प्रधाने, रसादयः, अङ्गम्, तस्मिन्, काव्ये, रसादिः, अलङ्कारः, इति, मे, मतिः ॥ ५ ॥

अथ द्वितीयकारिकया रसवदाद्यलङ्काराणां विषयं निर्दिशति—

प्रधान इति । यत्र = यस्मिन् काव्ये, तु = पुनः, अन्यत्र = अन्यस्मिन्, स्वस्मात् रसाद्यलङ्काराद् भिन्ने, वस्त्वलङ्काररसादिरूपे ध्वनौ, वाक्यार्थे = वाक्यार्थबोधे, प्रधाने = मुख्ये सति, रसादयः = देवदत्तो दत्त इतिवन्नामैकदेशग्रहणे नामग्रहणात् रसवदाद्यलङ्काराः—

"रसवत्प्रेय उर्जस्वि-समाहितमथापरे ।
भावोदयं भावसन्धिर्भावशबलमेव च ॥" इत्यादयः ।

अङ्गम् = अङ्गभूताः गुणीभूतत्वमापन्ना इति यावत् तस्मिन् काव्ये, रसादिः = रसवदाद्यलङ्कारः, इति = इत्थं, मे = मम, मतिः सम्मतिरित्यर्थः ।

अत्रेदं सारम्—रसस्याङ्गत्वे, गुणीभूतत्वे रसवदलङ्कारः, भावस्य गुणीभूतत्वे प्रेयोनामालङ्कारः, रसाभासस्य भावाभासस्य चाङ्गत्वे गुणीभूतत्वे उर्जस्विनामालङ्कारः, भावप्रशमस्य गुणीभूतत्वे समाहितनामालङ्कारः । तदुक्तमलङ्कारसर्वस्वेऽपि—'रसभावाभास-भावप्रशमानामितरगुणीभावो रसवत्प्रेय उर्जस्वि-समाहितानि'। इति तत्र रसाः शृङ्गारादयः प्रसिद्धाः । विभावादिभिरपरिपुष्टा देवादिविषया रत्यादयो निर्वेदादयश्च भावाः । अनौचित्येन प्रवृत्ता रसा भावाश्च रसवद्भाववच्चावभासमाना अपि वस्तुतो रसा भावाश्च न भवन्ति किलात आभासाः । भावस्योपशमः भावप्रशमः । ते किल यदाऽन्यत्र रसादौ वाक्यार्थे वाऽङ्गत्व-( गुणीभूतत्वम् )-मायान्ति तदा ते क्रमेण रसवदादिनामानोऽलङ्काराः, इति हि कारिकातात्पर्य्यम् ।

अथ रसवदाद्यलङ्काराणामुदाहरणानि प्रदर्श्यन्ते ।

रसस्याङ्गत्वे रसवदलङ्कारो यथा—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

अत्र शृङ्गारस्य करुणरसस्याङ्गत्वेन रसवदलङ्कारः ।

भावस्याङ्गत्वे—प्रकृष्टप्रियत्वात् प्रेयोऽलङ्कारो भवति । तद्यथा—

'आमीलितालसविवर्तिततारकाक्षीं,
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां,
संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥

अत्र सम्भोगश्रृङ्गारः स्मरणाख्यभावस्याङ्गमतः प्रेयोऽलङ्कारः ।

रसाभासाङ्गत्वे—उर्जो बलं तदस्यास्तीत्यूर्जस्वि, यथा—

'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'

अत्र श्रृङ्गाराभासस्य राजविषयकरतिभावस्याङ्गत्वेनानौचित्यप्रवृत्ते खलूर्जस्विनामालङ्कारः ।

भावप्रशमस्याङ्गत्वे समाहितनामालङ्कारो यथा—

'अविरलकरवालकम्पनैर्भ्रुकुटी तर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणेक्षणात् ॥'

अत्र मदाख्यभावस्य प्रशमो राजविषयकरतिभावस्याङ्गत्वमिति समाहितनामालङ्कारः ।

भावोदयो यथा—

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम, लेभिरे विषमां दशाम् ॥'

अत्र त्रासोदयो राजविषयकरतिभावस्याङ्गम् ।

भावसन्धिर्यथा—

'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'

अत्रौत्सुक्य-लज्जयोर्भावयोः सन्धिर्देवताविषयरतिभावस्याङ्गम् ।

भावशबलता यथा—

'पश्येत् कश्चिच्चलचपल रे, का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ? ।

इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कश्चित् फलकिसलयान्याददानाऽभिधत्ते ॥'

अत्र शङ्काऽसूया-धृति-स्मृति-श्रमदैन्य-विबोधौत्सुक्यानां शबलता, राजविषयकरतिभावस्याङ्गम् ।

पद्यमिदं किञ्चिदुद्भिन्नयौवनायाः प्रस्तुतराजशत्रुकन्याया वनवासे फलाद्याहरणे क्रियमाणे कस्मिंश्चित्पुरुषे जातानुरागाया अवस्थावर्णनविषयकं राजस्तुतिपरम् ।

अथ रसवदाद्यलङ्काराणां सोदाहरणं विषयं प्रदर्श्येदानीं ध्वनिकारविरुद्धं विपक्षिणां मतं खण्डनपुरस्सरं सम्यगालोच्यते ।

प्रकाशकारादयस्तु—

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥"

इत्यादिनाऽलङ्काराणां वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारकत्वमात्रं, वाच्यवाचकाभ्याञ्च रसादीनां तदुपकार्य्यत्वेनालङ्कार्य्यत्वेन च रसवदादीनां कथमपि नालङ्कारत्वमिति वदन्ति किन्तु तन्मतं हि किलाङ्गिनामेव रसादीनामलङ्कार्य्यत्वसम्भावनया प्रकृते ह्यङ्गत्वेन सर्वथा रसवदादीनामलङ्कारत्वे क्षोदक्षेमस्यानवसरत्वादसमीचीनमेव ।

कुवलयानन्दकारादयस्तु—रसवदाद्यलङ्कारे ह्यलङ्कृतिव्यवहारस्तु रसाद्युपकारकत्वमात्रेण रूपकादिसाम्यात् भाक्तोऽर्थाद्गौण इति मन्यन्ते परमेतन्मतमपि शब्दार्थद्वारा रसाद्युपकारकत्वेन रसवदादीनामलङ्कारत्वस्य मुख्यत्वात् खण्डितप्रायम् ।

उद्भटादयस्तु—"रसादीनामङ्गित्वे रसवदाद्यलङ्काराः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः" इत्यपि न सम्यक् महतां चरितस्यैव वर्णने किलोदात्तालङ्कारस्य विषयत्वेन रसादीनां तदसम्भवात् ।

जहाँ अन्य अर्थ प्रधान हो और रसादि अर्थात् रसभावादि अलङ्कार अङ्ग हो उस काव्य में रसादि अलङ्कार होते हैं, मेरी सम्मति है ॥ ५ ॥

परपक्षं दूष्यत्वेन हृदि निधाय स्वपक्षं द्रढयति वृत्तिकारः—

यद्यपि रसवदलङ्कारस्यान्यैर्दर्शितो विषयः, तथापि यस्मिन् काव्ये

प्रधानतयाऽन्योऽर्थो वाक्यार्थीभूतः, तस्य चाङ्गभूता ये रसादयः, ते रसादेरलङ्कारस्य विषया इति मामकीनः पक्षः ।

यद्यपीति । यद्यपि = परपक्षस्य युक्तिराहित्येऽपि, रसवदलङ्कारस्य, विषयः प्रदेशः, अन्यैः = उद्भटादिभिः, दर्शितः = वर्णितः, तथापि = मन्मतस्यागतार्थत्वमिति स्वीयं पक्षं दर्शयति—यस्मिन्निति । यस्मिन् = यत्र काव्ये, प्रधानतया = प्राधान्येनाङ्गित्वेनेति यावत्, अन्यः = अपरः, अर्थः = रसादिरर्थः वाक्यार्थीभूतः = वाक्यार्थबोधप्रधानीभूतः सन् रसादिध्वनिरिति शेषतया योज्यः, तस्य च = रसादिध्वनेः, ये रसादयः, अङ्गभूताः, ते, रसादेः, अलङ्कारस्य, विषयाः, इति = अयं, मामकीनः पक्षः = मम ध्वनिकारस्यानन्दवर्धनस्य पक्ष इति तात्पर्य्यम् ।

यद्यपि रसवद् अलङ्कार के विषय का अन्य आचार्यों ने वर्णन किया है, तथापि जिस काव्य में प्रधानतया अन्य रसादि अर्थ वाक्यार्थ बोध प्रधानी भूत होता है उसके जो रसादि अङ्गभूत होते हैं वे रसादि और अलङ्कार के विषय हैं—ऐसा मेरा सिद्धान्त है ।

दृष्टान्तमुखेन स्वपक्षं निश्चिनोति—

तद्यथा—चाटुषु प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते ।

तद्यथेति । तत् = रसादीनामङ्गत्वम्, यथा = शीघ्रमग्निमोदाहरणे, चाटुषु = कस्यचिन्नृपस्यालीकप्रशंसासु, प्रेयोऽलङ्कारस्य = भावस्य गुणीभूतत्वे प्रसिद्धिं नीतस्य भामहसम्मतस्य प्रेयोऽलङ्कारस्येति बोध्यम् । वाक्यार्थत्वेऽपि = वाक्यार्थबोधप्रधानीभूतत्वेऽपि, रसादयः, अङ्गभूताः = गुणीभूताः, दृश्यन्ते = संलक्ष्यन्त इत्यर्थः ।

जैसे—चाटु में अर्थात् चापलूसी वचनों में प्रेयोलङ्कार के वाक्यार्थ अर्थात् मुख्य रहने पर भी रसादि अङ्गरूप में दिखाई देते हैं ।

स च रसादिरलङ्कारः शुद्धः सङ्कीर्णो वा । तत्राद्यो यथा—

स च = पूर्वोक्तः, रसादिः = रसवदादिः, अलङ्कारः, रसवदाद्यलङ्कारः, इत्यर्थः, शुद्धः, सङ्कीर्णो वा चार्थे वाशब्दः, सङ्कीर्णश्चेत्यर्थः, इत्थं द्विविधो द्विप्रकारो रसव-

दायलङ्कार इति तात्पर्य्यम् । यत्र किलान्येषान्नमिश्रणं स शुद्धः, यत्र चावयवावयविभावेन अन्येषां मिश्रणं स सङ्कीर्णः ।

तत्र = शुद्धसङ्कीर्णयोर्मध्ये आद्यः = शुद्धो यथा—

वह रसादि अलङ्कार शुद्ध और सङ्कीर्ण दो प्रकार के होते हैं। जो अङ्गभूत रहकर भी अन्य रस या अलंकार से मिश्रित नहीं है वह शुद्ध रसवदलङ्कार होता है जैसे—

'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं,
केयं निष्करुण ! प्रवासरुचिता ? केनासि दूरीकृतः ? ।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो,
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥'

अन्वयः--हास्येन, किम्, चिरात्, मे, दर्शनं, प्राप्तः (त्वम्) न, प्रयास्यसि, (हे) निष्करुण ! (तव) का, इयम्, प्रवासरुचिता, केन, दूरीकृतः, असि, इति, स्वप्नान्तेषु, वदन्, प्रियतमव्यासक्तकण्ठग्रहः, ते, रिपुस्त्रीजनः, बुद्ध्वा, रिक्तबाहुवलयः, तारं, रोदिति ।

कोऽपि चाटुकारो नरपतिप्रभावं वर्णयति—किं हास्येनेति । हास्येन = प्रेमपरिहासेन, किम् ? न किमपि फलन्तवेति तात्पर्य्यम् । चिरात् = बहुदिनानन्तरम्, मे = मम, दर्शनं प्राप्तः = दृष्टिगोचरीभूतः, त्वमिति शेषः, पुनर्न, प्रयास्यसि = मद्बाहुपाशबन्धान्न गमिष्यसि, हे निष्करुण ! निर्दय ! प्रिय ! तवेति शेषः, का ? अनुचिता, इयं तव, प्रवासरुचिता = प्रवासे रुचिर्यस्य तस्य भावस्तत्ता, विदेशवासेऽभिलाषितेत्यर्थः, केन = मदीयदौर्भाग्येन, दूरीकृतः = दूरदेशं प्रापितः, असि, त्वमिति शेषः, इति = एवम्, स्वप्नान्तेषु = स्वप्नस्यान्तेषु सुप्तप्रलपितेष्विति यावत्, वदन् = प्रलपन्, प्रियतमव्यासक्तकण्ठग्रहः = स्वकान्तप्रेमासक्तकृतगलग्रहणः, प्रियतमे व्यासक्तः (विशेषेणासक्तः) संबद्धः कण्ठग्रहो येन स इति समासः । ते = तव, रिपुस्त्रीजनः = शत्रुनायिकागणः, बुद्ध्वा = जागरित्वा, रिक्तबाहुवलयः रिक्तं बाहुवलयं यस्य सः, प्रियशून्यभुजमण्डलः, तारम् = उच्चस्वरेण, रोदिति = अश्रूणि विमुञ्चतीत्यर्थः । पद्यमिदं कस्यचिद्राज्ञः प्रभाववर्णने स्वप्ने प्रियतमं विलोकयतस्तदीयनारीगणस्य स्वप्नान्ते प्रियतमवियोगे न कृतरोदनवर्णनपरम् ।

अत्र पद्ये कथाचित् शत्रुस्त्रिया स्वप्ने हसन्नेव प्रियतमो दृष्ट इति "किं हास्येन" इ पदेन व्यज्यते। मया तु स्वीयबाहुशङ्कुलया त्वं इढं बद्धो न कदापि तव मोक्षसम्भ इति "न प्रयास्यतीति" पदेन व्यज्यते। निष्करुणेत्यनेन विदेशवासेऽभिरुचिर्ध्वन्यते। केनेति सर्वनाम्ना नायिकाधीनापराधो ध्वन्यते। स्वप्नान्तेष्विति बहुवचनेन स्वप्नानां बाहुल्यं सूच्यते। रिक्तबाहुवलयपदेन रोदनस्यौचित्यं तारपदेन शोकस्य दुःसहत्वं सूच्येते।

किसी ने राजा की स्तुति इस प्रकार की है—'कि आपने अपने शत्रुओं को मार डाला है उनकी स्त्रियाँ स्वप्न में पति को जब देखती हैं तो गले में हाथ डालकर इस प्रकार कहती हैं धन्य हो राजन्! हँसी करने से क्या? बहुत दिनों बाद आपका दर्शन हुआ है। अब मैं जाने नहीं दूँगी, हे निष्ठुर! क्यों प्रवास में रुचि है? तुमको किसने दूर कर डाला है!' इस प्रकार स्वप्न में प्रियतम के कण्ठ का आलिङ्गन कर कहती हुई शत्रुओं की स्त्रियाँ उठकर अपने बाहुवलय को शून्य देखकर फूट फूटकर रोती हैं।

इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम्। एवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः।

इत्यत्र = प्रोक्तपद्ये, शुद्धस्य = असङ्कीर्णस्य, स्वप्नदर्शनोद्दीपितस्य शोकस्थायिभावकस्य करुणरसस्य वर्णनीयनरपतिप्रभावातिशयस्य वस्तुनोऽङ्गत्वमिति शुद्धस्य रसवदलङ्कारस्येति तात्पर्य्यम्, अङ्गभावात् = गुणीभावात्, रसवदलङ्कारत्वम्, स्पष्टमेव। एवम् = प्रकारेणानेन, एवंविधे, = चाटुरूपे, विषये = स्थले, अङ्गभावः = गुणीभावो नाङ्गिभाव इति यावत्, स्पष्ट एव = न संदिग्ध इति तात्पर्यम्।

इस उदाहरण में शुद्ध करुण रस अङ्गरूप है इसलिये रसवदलंकार स्पष्ट ही है। इसी प्रकार ऐसे उदाहरणों में अन्य रसों का अङ्ग भाव स्पष्ट ही है।

अथ द्वितीयं सङ्कीर्णं रसाद्यलङ्कारमुदाहर्तुं प्रक्रमते—

सङ्कीर्णो रसादिरङ्गभूतो यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥'

अन्वयः—साश्रुनेत्रोत्पलाभिः, त्रिपुरयुवतिभिः, हस्तावलग्नः, क्षिप्तः, प्रसभं, अंशुकानाम्, आददानः, अपि, अभिहतः, केशेषु, गृह्णन्, अपास्तः, चरणनिपतितः, सम्भ्रमेण, न, ईक्षितः, आलिङ्गन्, यः, आर्द्रापराधः, कामी, इव, अवधूतः, सः, शाम्भवः, शराग्निः, वः, दुरितं, दहतु।

अमरुकविर्ग्रन्थादौ ह्याशीर्वादात्मकं मङ्गलं निबध्नाति—क्षिप्त इति। साश्रुनेत्रोत्पलाभिः = वाष्पपूर्णाक्षिपद्माभिः, साश्रूणि नेत्रोत्पलानि यासान्तास्ताभिरिति समासः, त्रिपुरयुवतिभिः = त्रिपुरासुरवधूभिः, हस्तावलग्नः = हस्तस्पर्शं कुर्वन् क्षिप्तः = ( शराग्निपक्षे ) कराभ्यां दूरं प्रक्षिप्तः, ( कामिपक्षे ) तिरस्कृतः, प्रसभं = बलात्, अंशुकान्तम् = वस्त्रप्रान्तम्, आददानोऽपि = गृह्णन्नपि, अभिहतः = ( शराग्निपक्षे ) निर्धूतः ( कामिपक्षे ) ताडितश्च, अथवाऽभिहतोऽपि, अंशुकान्तमाददानः, इत्यप्यन्वयः। केशेषु गृह्णन् = केशानुपस्पृशन्, अपास्तः = ( शराग्निपक्षे ) दूरीकृतः, ( कामिपक्षे तु ) तिरस्कृतः, चरणनिपतितः = पादयोः पतितः, भ्रष्टः। ( शराग्निपक्षे ) ( कामिपक्षे तु ) पतितः = प्रणतः, संभ्रमेण = ( शराग्निपक्षे ) भयेन ( कामिपक्षे तु ) आदरेणेत्यर्थः, 'सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि' इति मेदिनी, न, ईक्षितः = दृष्टः, आलिङ्गन् = आलिङ्गनं कुर्वन् ( कामिपक्षे ) स्पृशन् ( शराग्निपक्षे ) यः, आर्द्रापराधः = अपरनायिकाभिस्सह सङ्गमेन तत्कालकृतापराधः, कामी = कामुकः, इव, अवधूतः = ( कामिपक्षे ) तिरस्कृतः, ( शराग्निपक्षे तु ) प्रक्षिप्तः, सः, शाम्भवः = शम्भोरयम् शाम्भवः शिवप्रेरित इति यावत्, शराग्निः = बाणाग्निः, वः = युष्माकम्, दुरितं = पापम्, दहतु = भस्मीकरोत्वित्यर्थः। अमरुशतकस्येदं पद्यम्। स्रग्धरावृत्तमिदम्। अत्र किल कवेर्भगवद्विषयकरतेः प्राधान्यम्, तत्परिपोषकतया भगवतस्त्रिपुरासुरवधं प्रत्युत्साहस्यापरिपुष्टतया रसपदवीमप्राप्तत्वेन भावमात्रस्य करुणोऽङ्गम्। कामीवेति औपम्यबलात् शृङ्गाररसोऽपि बोध्य इति तत्वम्।

दूसरा भेद सङ्कीर्ण रसादि भी अङ्गभूत होता है। जैसे—

( क्षिप्तो ) इस पद्य में सभी विशेषण कामी पक्ष में और शराग्नि पक्ष में

लगते हैं। हाथ छूने पर झार दिया गया [ दोनों पक्ष में ] जोर से मारने पर भी कपड़े की चून को पकड़ लेता ( कामी पक्ष में ) शराग्नि पक्ष में—जोर से झारने पर भी कपड़े का छोर पकड़ लेता, केशों को पकड़ता हुआ हटाया गया, पैर पकड़ने पर ( कामी पक्ष में ) क्रोध के मारे नहीं देखा गया, [शराग्नि पक्ष में] पैरों में गिर जाने पर घबराहट से नहीं देखा गया, [ कामी पक्ष में ] आलिङ्गन करता हुआ जो रोती हुई त्रिपुर युवतियों से तिरस्कृत ( शराग्नि पक्ष में ) समूचे बदन को पकड़ लेने पर सारे शरीर को झटकार कर फेंक दिया गया महादेव का शराग्नि तत्काल अपराधयुक्त कामी की तरह तुम्हारे दुःखों को दूर करे।

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे, ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इत्येवंविधस्य रसवदलङ्कारस्य न्याय्यो विषयः।

इत्यत्र = क्षिप्त इति श्लोके, त्रिपुररिपुप्रभावातिशयस्य = त्रिपुररिपोः शिवस्य यः प्रभावातिशयः महिमोत्कर्षस्तस्य, वाक्यार्थत्वे = वाक्यार्थबोधप्रधानीभूतत्वे, श्लेषसहितस्य = श्लेषालङ्कारयुक्तस्य, ईर्ष्याविप्रलम्भस्य = ईर्ष्याविप्रलम्भाख्यश्रृङ्गारस्य, अङ्गभावः = अङ्गत्वं गुणीभूतत्वमिति यावत्, इति = हेतोः, एवंविध एव = एतादृशोऽप्रधानीभूतरस एव, रसवदलङ्कारस्य, विषयः, न्याय्यः = समुचित इत्यर्थः।

यहाँ त्रिपुर भी शिव के प्रभावातिशय के वाक्यार्थ ( प्रधान ) रहने पर श्लेष सहित ईर्ष्याविप्रलम्भ अङ्ग है इसलिये संकीर्ण रसादि का उदाहरण है।

इसी प्रकार के उदाहरण रसवदलङ्कार के उचित विषय होते हैं।

अत एव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशे न दोषः।

अत एवेति। अत एव = श्रृङ्गाररसस्याङ्गत्वादेव, ईर्ष्याविप्रलम्भकरुणयोः = परस्परं विरुद्धयोरपि ईर्ष्याविप्रलम्भश्रृङ्गारकरुणरसयोः, अङ्गत्वेन = अप्रधानत्वेन, व्यवस्थानात् = स्थितेः, समावेशे = सन्निवेशे, न = नैव, दोषः, इति तात्पर्यम्।

इसीलिये ईर्ष्या विप्रलम्भ और करुण दोनों विरोधी रसों के अङ्गभूत रहने पर दोष नहीं होता।

यत्र हि रसस्य वाक्यार्थीभावः, तत्र कथमलङ्कारत्वम् ।

यत्र हीति । हि = यतः, यत्र = काव्ये, रसस्य, वाक्यार्थीभावः = वाक्यार्थबोधप्रधानीभावः, तत्र = काव्ये, कथम् = केन प्रकारेण, अलङ्कारत्वम्, कथमपि नेत्यर्थः । यतो रसस्याङ्गित्वे रसादिध्वनिः, अङ्गतायान्तु रसवदाद्यलङ्कार इत्युक्तनिर्णयोऽतो नालङ्कार इति सारम् ।

जहाँ रस का वाक्यार्थी भाव अर्थात् प्रधानत्व है वहाँ अलङ्कार किस प्रकार हो सकता है वह तो अलङ्कार्य्य है वहाँ ध्वनि होती है रसवदलङ्कार नहीं ।

अलङ्कारो हि चारुत्वहेतुः प्रसिद्धः । न त्वसावात्मैवात्मनश्चारुत्वहेतुः ।

रसस्य प्राधान्येऽलङ्कारत्वाभावे हेतुं प्रदर्शयति—अलङ्कार इति । हि = यतः, अलङ्कारः = शब्दाद्यलङ्कारः, चारुत्वहेतुः = सौन्दर्य्यसम्पादनकारणम्, प्रसिद्धः = प्रख्यातः, न तु = नहि, असौ रसादिः, आत्मैव = स्वयमेव, आत्मनः = स्वस्य, चारुत्वहेतुः = सौन्दर्य्यकारणम् । अयम्भावः—यथा कटकाद्यलङ्कारः, आत्मनः शरीरस्य, सौन्दर्य्यसम्पादको न स्वयं स्वस्य सौन्दर्य्यसम्पादकः, तथा रसादिरपि, स्वयमङ्गीभूतोऽलङ्कारो भवितुन्नार्हतीति । अङ्गभूतो रसादिस्त्वलङ्कारो भवितुमर्हत्येवेति तात्पर्य्यम् ।

क्योंकि चारुत्व के कारण ही अलङ्कार प्रसिद्ध है । स्वयं ही स्वयं चारुत्व का कारण नहीं हो सकता ।

उपसंहारप्रकारं निर्दिशति—

तथा चायमत्र संक्षेपः—

'रसभावादितात्पर्य्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥ २८ ॥'

अन्वयः—सर्वासाम्, अलङ्कृतीनाम्, रसभावादितात्पर्य्यम्, आश्रित्य, विनिवेशनम्, अलङ्कारत्वसाधनम् ।

रसभावादीति । सर्वासाम् = न केवलमेकस्य द्वयोर्वेति तात्पर्य्यम्, अलङ्कृतीनाम् = उपमाद्यलङ्काराणाम्, रसभावादितात्पर्य्यम् = रसभावादीनां रसानां भावानामादिग्रहणाद् रसाभास-भावाभास-भावप्रशमादीनाञ्च, तात्पर्यम् = सारांशम्,

आश्रित्य = नीत्वा, विनिवेशनम् = विन्यसनम्, अलङ्कारत्वसाधनम् = अलङ्कारत्व-प्रयोजकमित्यर्थः ।

शब्दार्थशरीरस्य रसात्मशालिन एव काव्यस्य लक्षणत्वे कटककेयूरादयो यथाऽलङ्काराश्चमत्कारविशेषरूपमात्मानमन्तरा शरीरेऽवस्थापिता अलङ्कार्यसद्भावान्न भान्ति यथा च यतिशरीरे धारिताः कटकादयोऽपि हास्यावहा एव जायन्ते-ऽलङ्कार्यस्यानौचित्यात्तथैव शब्दार्थयोरवस्थापिता अनुप्रासोपमादयोऽलङ्काराः रसमन्तरेण नालङ्कारका इति । हारादयो यथाऽलङ्कारा कण्ठाद्युत्कर्षाधानमुखेन शरीरस्योत्कर्षका भवन्तो देहिनोऽप्युत्कर्षाय, तथानुप्रासोपमादयो वाचकवाच्योत्कर्षाधानमुखेन वाक्यस्योत्कर्षकाः सन्तो रसस्याप्युत्कर्षका इति निष्कर्षः । एवञ्च रसोपकारकत्वे सति रसावृत्तित्वं, रसोपकारकत्वे सति रसानियतस्थितिकत्वम्वा-ऽलङ्कारलक्षणं सुस्थिरम् ।

कारिकाया इदं हि तात्पर्य्यम्—यथा स्वनिवेशोचितवाह्वाद्यवस्थापिताः केयूरादयः स्वतः सम्पन्नसौन्दर्य्यमेव नायिकादिशरीरमलङ्कुर्वन्ति तथानुप्रासादयोऽपि सरसस्यैव काव्यस्योत्कर्षाधायकाः अर्थाद्यथाऽङ्गदादीनां सौन्दर्य्यसद्भाव एवालङ्कारकत्वं तथा रसवत्व एवानुप्रासादीनामलङ्कारत्वमिति ।

तो इसका सारांश यह है कि—

"रसभावादि तात्पर्य्य लेकर यदि अलङ्कारों का सन्निवेश किया जाता है तो वह सभी अलङ्कारों का साधन है ।"

तस्माद्यत्र रसादयो वाक्यार्थीभूताः, स सर्वो न रसादेरलङ्कारस्य विषयः, स ध्वनेः प्रभेदः । तस्योपमादयोऽलङ्काराः । यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे, रसादिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलङ्कारताया विषयः ।

रसादिध्वने रसवदलङ्कारस्य पार्थक्यं विशदयति—तस्माद्यत्रेति । तस्मात् = रसवत्त्व एवालङ्कारत्वाद्धेतोः, यत्र = काव्ये, रसादयः, वाक्यार्थीभूताः = प्रधानीभूताः, स सर्वः = समग्रः, न = नहि, रसादेः = रसवदादेः, अलङ्कारस्य, विषयः = प्रदेशः, ( किन्तु ) सः ध्वनेः = रसादिध्वनेः, प्रभेदः = प्रधानो भेदः ( रसादीनामलङ्कार्य्यत्वात् ) तस्य प्रधानीभूतस्य रसादेः, उपमादयः, अलङ्काराः ( अल-

ङ्कारकत्वात् )। यत्र = काव्ये, तु, प्राधान्येन = प्रधानतयाऽङ्गित्वेनेति यावत्, अर्थान्तरस्य = अन्योऽर्थोन्तरस्तस्यार्थान्तरस्य वस्तुनोऽलङ्कारस्य रसादे वा, वाक्यार्थीभावे = वाक्यार्थे प्रधानीभावे रसादिभिः = रसभावादिभिः, चारुत्वनिष्पत्तिः = सौन्दर्य्यसम्पादनम् क्रियते = विधीयते, सः, रसादेरलङ्कारतायाः = रसवदाद्यलङ्कारस्य, विषयः = अवसर इत्यर्थः।

इसलिये जहाँ रसादि वाक्यार्थीभूत अर्थात् प्रधानीभूत हैं वे सब रसादि अलङ्कार का विषय नहीं है किन्तु वह ध्वनि का भेद है। उसके उपमादि अलङ्कार होते हैं। और जहाँ प्रधानतया दूसरा अर्थ वाक्यार्थीभूत हो अर्थात् प्रधानीभूत हो और रसादि के द्वारा चारुत्व की प्रतीति कराई जाय वे सब रसादि अलङ्कार के विषय हैं।

**एवं ध्वनेरुपमादीनां रसवदलङ्कारस्य च विभक्तविषयता भवति।**

एवं = पूर्वोक्तप्रकारेण, ध्वनेः = रसादिध्वनेः, उपमादीनाम् = उपमाद्यलङ्काराणाम्, रसवदलङ्कारस्य च = रसवत्प्रेयऊर्जस्वीत्यादेः, विभक्तविषयता = विभिन्नविषयता, भवति = जायते। रसवदादेरलङ्कारस्योदाहरणानि तु प्रागेव प्रदर्शितानि।

इस प्रकार ध्वनि, उपमादि, अलङ्कार और रसवदलङ्कार का विषय भिन्न भिन्न है।

परमतनिराकरणाय स्वमतं दर्शयति—

**यदि तु 'चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय' इत्युच्यते तदुपमाऽऽदीनां प्रविरलविषयता निर्विषयता वाऽभिहिता स्यात्।**

यदि तु = "चेतनानाम् = चेतनपदार्थनाम्, वाक्यार्थीभावः = वाक्यार्थबोधप्राधान्यम्, रसाद्यलङ्कारस्य = रसवदाद्यलङ्कारस्य, विषयः = अवसरः" इत्युच्यते = एवमुच्यते ( पूर्वपक्षिभिः ) तर्हि = तदा, उपमादीनाम्, अलङ्काराणाम्, प्रविरलविषयता = अत्यल्पविषयत्वम्, निर्विषयता वा = विषयाभावत्वमेव वा, अभिहिता = कथिता, स्यात् = भवेदित्यर्थः।

यदि चेतनपदार्थ का प्राधान्य हो औ रसाद्यलङ्कार का विषय कहा जाय तो उपमादि अलङ्कार का बहुत कम स्थल हो जायगा या विषय का अभाव हो जायगा।

नन्वचेतनवस्तुवृत्तान्तवर्णनह्युपमादीनां विषयसम्भवे कथं निर्विषयत्वमित्यत आह—

**यस्मादचेतनवस्तुवृत्तान्ते वाक्यार्थीभूते, पुनश्चेतनवस्तुवृत्तान्तयोजनया भवितव्यम् ।**

यस्मात् = यतः, अचेतनवस्तुवृत्तान्ते = अचेतनानां चेतनरहितानां, जडानामिति यावत् वस्तूनां पदार्थानां वृत्तान्ते वृत्तान्तवर्णने, वाक्यार्थीभूते = वाक्यार्थबोधप्रधानीभूते, प्राधान्येना वर्णनीय इत्यर्थः, पुनः, चेतनवस्तुवृत्तान्तयोजनया = चेतनवस्तूनां सजीवपदार्थानां वृत्तान्तयोजनया वृत्तान्तवर्णनया, यथाकथञ्चित्, = येन केनापि प्रकारेण, भवितव्यम् = आवश्यकतया भाव्यमित्यर्थः ।

अयम्भावः—यत्र किल जडवस्तुवर्णनं तत्र यदि चेतनवस्तुव्यापारारोपस्तदा जडवस्त्वपि चेतनवत्प्रतीयते ततश्च रसवदादीनामेवालङ्काराणां विषयो नैवोपमादीनामिति व्यक्तमेवोदाहरणाभाव उपमादीनामिति ।

क्योंकि जहाँ अचेतनपदार्थ का वृत्तान्त की प्रधानता हो तो वहाँ चेतनपदार्थ के वृत्तान्तयोजना करनी ही पड़ेगी ।

**अथ "सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो, नासौ रसवदलङ्कारस्य विषयः" इत्युच्यते तन्महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात् ।**

अथ = यदि, "तस्याम् = चेतनवस्तुवृत्तान्तयोजनायाम्, सत्यामपि = विद्यमानायामपि, यत्र = काव्ये, अचेतनानाम् = अचेतनानामेव जडपदार्थामेव, विनाप्येवकारमेवार्थो गम्यतेऽब्भक्षो वायुभक्ष इतिवत् । वाक्यार्थीभावः प्राधान्यम्, असौ, न = नैव, रसवदलङ्कारस्य विषयः किन्तूपमादेरेव, विषयो जडे चेतनवस्तुवृत्तान्तारोपेऽपि चैतन्यराहित्येन रसादेर्बाधात्", इति = एवम् , उच्यते = कथ्यते, तत् = तदा, महतः = वृहतः, काव्यप्रबन्धस्य = साहित्यनिबन्धस्य, रसनिधानभूतस्य = रसैकाश्रयीभूतस्य, नीरसत्वम् = रसशून्यत्वम् , अभिहितम् = कथितम्, स्यात् = भवेदित्यर्थः ।

अयम्भावः—रसवदलङ्कारस्य रसप्राधान्य एव विषयत्वम्, रसप्रधानेष्वेव काव्येषु प्रायो महाकवीनां पर्वताद्यचेतनानां वर्णनं दृश्यते । किन्तु न तत्र नीरसत्वं

समुपलभ्यते प्रत्युत चमत्कृतिविशेषतया रसबाहुल्यं दृश्यते । चेतनवस्तुवृत्तान्तारोपेऽपि चेतने वस्तुतश्चैतन्याभावेन रसवदलङ्कारस्य भवतोऽनभिमतत्वेनावश्यमेव नीरसत्वम् । मन्मते तु रसवतोऽभावेऽपि रसप्राधान्यसत्वे ध्वनेः सद्भावे कथं नीरसत्वम् । वर्णनीयपदार्थस्य रसास्वादे चैतन्याचैतन्ययोरनपेक्षितत्वादित्यलम् ।

और जहाँ चेतन वस्तु के वृत्तान्तयोजना रहने पर भी अचेतन वस्तु की प्रधानता हो वह रसवदलङ्कार विषय नहीं है यदि ऐसा कहा जाय तो बड़े बड़े काव्य-प्रवन्ध जहाँ रस के खजाना ही है वे सब नीरस कहे जा सकते हैं ।

परपक्षदूषणायोदाहरति—

यथा—

'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना,
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाऽऽविद्धं याति स्खलितमभिसन्धाय बहुशो-
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥'

अन्वयः—तरङ्गभ्रूभङ्गाः, क्षुभितविहगश्रेणिरसना, संरम्भशिथिलं, वसनम्, इव, फेनम्, विकर्षन्ती, बहुशः, स्खलितम्, अभिसन्धाय, असहना, सा, इयम्, ध्रुवम्, नदीरूपेण, परिणता, यथा, आविद्धं, याति ।

तरङ्गेति । उन्मादग्रस्तस्य पुरूरवसो नदीवर्णनपरोक्तिरियम् । तरङ्गभ्रूभङ्गा = तरङ्गा वीचय एव ( दैर्घ्यकौटिल्ययोगात् ) भ्रुवोर्भङ्गा विक्षेपा यस्याः सा, क्षुभितविहगश्रेणिरसना = क्षुभिता ( तरङ्गाघातेन ) क्षोभं प्राप्ता विहगश्रेणिः पक्षिपङ्क्तिरेव रसना काञ्ची यस्याः सा, संरम्भशिथिलम् = संरम्भेण वेगेन क्रोधेन वा शिथिलं मुक्तबन्धम्, वसनम् = वस्त्रम्, इव ( स्वच्छम् ) फेनम् = विकर्षन्ती = अधःपतदपि वस्त्रं प्रियतमकरग्रहणशङ्कया बलादुपरि, नयन्ती, बहुशः = बहुवारं, स्खलितम् = ममापराधम्, गतिभङ्गं वा, अभिसन्धाय = मत्वा, असहना = सोढुमक्षमा, सा, इयं = मत्प्रिया, ध्रुवं = निश्चयेन, नदीरूपेण = सरिद्रूपेण, परिणता = पर्यवसिता, यथाविद्धं = सकौटिल्यं, यातीति शेषः । अत्राचेतनाया नद्या वर्णने चेतनाया नायिकायाश्चरितारोपात् सरसत्वेऽनुभूयमानेऽपि भवन्मते रसवदलङ्कारस्य नैव विषयः स्यात् । शिखरिणीच्छन्दः ।

जैसेः—

टेढ़ी भौहों की तरह तरङ्गवाली, रसना के समान क्षोभप्राप्त की हुई पक्षियों की पंक्तियाँवाली, क्रोधावेश में खिसके हुए कपड़े के समान फेनों को खींचती हुई यह नदी बार बार ठोकर खाकर टेढ़ी चाल से जो जारही है वह मानो अनेक अपराधों को समझकर रुठी हुई उर्वशी ही नदी रूप में परिणत हो गई है।

द्वितीयमप्युदाहरति—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः,
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवाश्रिता मधुलिहां शब्दैर्विना लक्ष्यते,
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥'

अन्वयः—तन्वी, मेघजलार्द्रपल्लवतया, अश्रुभिः, धौताधरा, इव, स्वकालविरहात्, वि॰ान्तपुष्पोद्गमा, आभरणैः, शून्या, इव, मधुलिहां, शब्दैः, विना, चिन्तामौनम्, आश्रिता, इव, सा चण्डी, पादपतितं, माम्, अवधूय, जातानुतापा इव, ( लक्ष्यते )।

तन्वीति। उन्मादग्रस्तस्य पुरूरवस एव लतावर्णनपरेयं मित्रं प्रत्युक्तिः। तन्वी = दुर्बला ( नायिकापक्षे ) मृद्वी ( लतापक्षे ), मेघजलार्द्रपल्लवतया, = मेघजलेनार्द्राः पल्लवा यस्याः सा तद्भावस्तत्ता तया, जलधरजलक्लिन्नकिसलयतया, अश्रुभिः = नेत्रजलैः, धौताधरा = धौते अधरे यस्याः सा प्रक्षालितौष्ठेति यावत् इव, स्वकालविरहात् = स्वकालस्य पुष्पप्रादुर्भूतिसमस्य विरहात् राहित्यात्, विश्रान्तपुष्पोद्गमात् = विश्रान्तोऽवरुद्धः पुष्पोद्गमः पुष्पोत्पत्तिर्यस्याः सा, आभरणैः = विभूषणैः, शून्या = विरहिता, इव, मधुलिहां = भृङ्गाणाम्, शब्दैः = आरावैः, विना = अन्तरा, चिन्तामौनम् = चिन्तया मत्सङ्गमोपायान्वेषणेन मौनम् तूष्णीम्भावम्, आश्रिता = अवलम्बिता, इव, सा = मद्दयिता, चण्डी = कोपना, 'चण्डस्त्वत्यन्तकोपन' इति कोषः, पादपतितं = चरणनम्रं, माम्, अवधूय = तिरस्कृत्य, जातानुतापा = उत्पन्नपश्चात्तापा, इव, अग्रे ( लक्ष्यते )। इत्यर्थः। अत्र लतावर्णने कलहान्तरिताया नायिकाया वृत्तान्तारोपाद्रसवत्त्वेऽनुभूयमानेऽपि भवन्मते रसवदलङ्कारस्येदमोदाहरणं संगच्छेत। शार्दूलविक्रीडितं छन्दः।

जैसे—

तन्वी कृशाङ्गी उर्वशी पैरों पर पड़े हुए मुझे तिरस्कृत करके पश्चात्ताप से युक्त की तरह होकर मेघों के जलों से गीले पत्ते हो जाने के कारण ऋतुकाल नहीं होने से, फूलों की उत्पत्तिरहित होने से मानों भूषणों से शून्य की तरह भ्रमरों के शब्दों के विना मानों चिन्ता से मौन सी लतारूप में लक्षित हो रही है।

यथा वा—

'तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां,
क्षेमं भद्र ! कलिन्दशैलतनयातीरे तलावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना,
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥'

अन्वयः—( हे ) भद्र !, गोपवधूविलाससुहृदाम्, राधारहःसाक्षिणाम्, कलिन्दशैलतनयातीरे, तेषां, लतावेश्मनाम्, क्षेमम्, ( कच्चित् ) स्मरतल्पकल्पन-मृदुच्छेदोपयोगे, विच्छिन्ने, विगलन्नीलत्विषः, ते, पल्लवाः, अधुना, जरठीभवन्ति, ( इति ) जाने।

श्रीकृष्णस्य व्रजादागतमुद्धवं प्रति प्रश्नः। तेषामिति। हे भद्र ! = सौम्य ! गोपवधूविलाससुहृदाम् = गोपस्त्रीसुरतकालीननर्मसचिवानाम्, राधारहःसाक्षिणाम्= राधिकैकान्तसाक्षिभूतानाम्, कलिन्दशैलतनयातीरे = यमुनातटे ( विद्यमानानाम् ) तेषाम् = मत्स्मृतिपद्यागतानाम्, लतावेश्मनाम्=लतागृहाणाम् कुञ्जानामिति यावत्, क्षेमम् ! = कुशलम् ! ( कच्चित् ) इति काक्वाप्रश्नः। इत्थमुद्धवं पृष्ट्वा गोपदर्शन-प्रबुद्धसंस्कारआलम्बनोद्दीपनविभावस्मरणाद् द्वारकास्थःश्रीकृष्णो ब्रवीति—स्मरत-ल्पेति। स्मरतल्पकल्पनमृदुच्छेदोपयोगे = मदनशय्यानिर्माणस्वल्पत्रोटनसाफल्ये, विच्छिन्ने = विरते, अनासीने मयि का स्मरतल्पकल्पनेति भावः। विगलन्नीलत्विषः= विनश्यन्नीलकान्तयः, ते, पल्लवाः = किसलयाः, अधुना = साम्प्रतम् मदनुपस्थितौ, जरठीभवन्ति = जीर्णा भवन्ति, इति, जाने = मन्ये, सन्निहिते तु मयि सतत-कलिकोपयोगादिमे पल्लवान्न कदाचिद्विशीर्णतां प्राप्नुवन्तिस्मेति भावः। शार्दूल-विक्रीडितं छन्दः।

अस्मिन्नपि पद्येऽचेतनलतावेश्मवृत्तान्ते चेतननर्मसचिववृत्तान्तारोपाद्रसवत्त्वेऽनुभूयमानेऽपि भवन्मते न रसवदलङ्कारविषयः। अस्मन्मते त्वस्त्येवेति तत्त्वम्।

अथवा जैसे—

हे भद्र ! गोपवधुओं के रमण के मित्र, राधादेवी के एकान्त क्रीडा के साक्षी यमुना के किनारे लताकुञ्ज का तो कुशल है ! मैं समझता हूँ कि कामशास्त्र निर्माणार्थ कोमल कोमल पत्तों के तोड़ना बन्द हो जाने पर नीलकान्ति को छिटकाते हुए, वे पल्लव पुराने होकर गिर रहे होंगे।

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तुवृत्तान्तयोजनाऽस्त्येव।

इत्येवमादौ विषये = पूर्वोक्तोदाहरणत्रये, अचेतनानाम् = जडपदार्थानाम्, वाक्यार्थीभावेऽपि = प्राधान्येऽपि, चेतनवस्तुवृत्तान्तयोजना = सजीवपदार्थवर्णनम्, अस्त्येव = वर्तत एवेत्यर्थः।

ऐसे ऐसे उदाहरणों में अचेतन पदार्थों के प्राधान्य रहने पर भी चेतन पदार्थों की योजना है ही।

पुनरप्येकदेशिमतमनूद्य खण्डयति—

अथ यत्र चेतनवस्तुवृत्तान्तयोजनाऽस्ति तत्र रसादिरलङ्कारः। तदेवं सत्युपमाऽऽदयः प्रविरलविषया निर्विषया वा स्युः।

अथ = यदि, यत्र = काव्ये, चेतनवस्तुवृत्तान्तयोजना = सजीवपदार्थवृत्तारोपः, तत्र = तत्रैव, विनाप्येककारमेवार्थो जायत अब्भक्षो वायुभक्ष इतिवत्, रसादिरलङ्कारः = रसवदाद्यलङ्कारः, इत्युच्यते भवद्भिरिति शेषः, तत् = तदा, एवं सति = इत्थं स्वीकारे, उपमादयः = अलङ्काराः, प्रविरलविषयाः = स्वल्पविषयाः, निर्विषया वा = विषयशून्या वा स्युरित्यर्थः।

और जहाँ चेतन वस्तु के वृत्तान्त की योजना है वहाँ तो रसादि अलङ्कार है। ऐसा होने पर उपमादि अलङ्कार का विषयाभाव या स्वल्पविषय रह जायँगे।

यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्ति। अन्ततो विभावत्वेन। तस्मादङ्गत्वेन च रसादीनामलङ्कारता। यः पुनरङ्गी रसो भावो वा सर्वाकारमलङ्कार्य्यः, स ध्वनेरात्मेति।

तत्र कारणं प्रदर्श्य परमतखण्डनपुरस्सरं स्वमतं द्रढयति—यस्मादित्यादिना। इत्थमन्वयमुखेन व्याख्या ज्ञेया। यस्मात् = यतः, असौ = एतादृशः, अचेतनवस्तुवृत्तान्तः = निर्जीवपदार्थवृत्तान्तवर्णनम्, एव, नास्ति = न वर्तते ( एवकारस्यान्यत्राप्यन्वयस्य नियमाद्भिन्नक्रमः ) यत्र = यस्मिन् वृत्तान्ते, चेतनवस्तुवृत्तान्तयोजना = चेतनपदार्थवृत्तान्तारोपः, नास्ति, किन्तु, अन्ततः = पर्य्यवसाने, विभावत्वेन = विभावमुखेन, अस्ति ( सा योजना ) तस्मात् = कारणात्, अङ्गत्वेन अप्रधानतया, च, रसादीनाम् = रसभावादीनाम्, अलङ्कारता = अलङ्कारत्वमेवेत्यर्थः, यः, पुनः = यः खलु, रसो भावो वा, अङ्गी = अङ्गित्वेन प्रधानत्वेन विद्यमानः, सः, सर्वाकारम् = सर्वप्रकारम्, अलङ्कार्य्यः = अलङ्करणीयः, ध्वनेरात्मा = रसादिध्वनिरित्यर्थः ।

अत्रेदं तत्वम्—भूधरविटपिप्रभृतीनां स्थावराणामप्यचेतनानां स्तम्भपुलकादिवर्ण्यमानमनुभावत्वात्सचेतनमिव चित्तमाक्षिपत्येव। अतिजडान्यपि चन्द्रोद्यानप्रभृतीनि वस्तूनि चेतनवस्तुसम्बन्धेन काव्ये वर्ण्यमानानि शृङ्गारविभावनया सचेतनानीव चित्तमाकर्षन्ति सहृदयानाम्। यत्र कुत्रापि कस्यचिद्रसस्य विभावत्वन्न प्रतीयेत तत्रापि वस्तुसमनियतत्वात्तदाक्षिप्तमेव जायते। लोकेनैतादृशं किमपि वस्तु यत्कविवाग्विषयत्वमापन्नं सत् किमपि विभावत्वमालम्बितुं न शक्नोति। इत्थं चेतनानामेव प्राधान्ये रसाद्यलङ्कारस्य विषयं मन्यमानानां भवतां मते सर्ववस्तुषु रसानां सत्वेन रसवदलङ्कारस्य व्यापकत्वे ह्युपमादीनां विषय एव न प्रतीयत इत्यलं प्रपञ्चेन।

क्योंकि ऐसा अचेतन पदार्थों का वृत्तान्त कोई नहीं है कि जहाँ चेतन पदार्थों के वृत्तान्तयोजना अन्ततःविभाव से नहीं हो। इसलिये रसादि के अङ्ग होने पर अलङ्कार होता है। तथा जो रस या भाव अङ्गी हो वह सब प्रकार से अलङ्कार्य्य है और वह ध्वनि की आत्मा है।

अथ गुणिव्यतिरिक्तगुणवदलङ्कार्य्यव्यतिरिक्तानामेवालङ्काराणामपि निर्णीतत्वेन गुणालङ्कारयोः साम्यं रसध्वने रसवदलङ्काराणामभेदञ्च मन्यमानानां विपक्षिणां मतं निरस्येदानीं गुणालङ्कारयोः स्वरूपं सविभागं निर्दिशति—

किञ्च—

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ ६ ॥

अन्वयः—ये, अङ्गिनम्, तम्, अर्थम्, अवलम्बन्ते, ते, गुणाः, स्मृताः, ( ये ) तु, अङ्गाश्रिताः, ( ते ) कटकादिवत्, अलङ्काराः, मन्तव्याः।

तमर्थमिति। ये, अङ्गिनं सन्तम् = अङ्गित्वेन विद्यमानम् नाङ्गत्वेनेति तात्पर्यम्, तम् = रसादिलक्षणम्, अर्थम् = पदार्थम्, अवलम्बन्ते = आश्रयन्ते, ते, गुणाः, = शूरत्वादिवत्, स्मृताः = प्रसिद्धाः, ये तु = ये पुनः, अङ्गाश्रिताः = अङ्गानि वाच्यवाचकलक्षणानि अर्थात् शब्दार्थस्वरूपाणि, आश्रिता = अवलम्बिता, अङ्गाश्रिताः शब्दार्थवर्तिन इति यावत्, ते, कटकादिवत् = कटककेयूरादिवत्, अलङ्काराः, मन्तव्याः = ज्ञातव्या इत्यर्थः।

कारिकां स्वयमपि वृत्तिकारो व्याचष्टे—

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते, ते गुणाः शौर्यादिवत्। वाच्यवाचकलक्षणान्यङ्गानि ये पुनराश्रिताः, तेऽलङ्कारा मन्तव्याः कटकादिवत्।

ये तमर्थमित्यादि व्याख्यातं प्रागेव कारिकाव्याख्यावसरे।

अयम्भावः—यथा शूरत्वोदारत्वादयो गुणा आत्मनि विद्यमाना आत्मानमेवोत्कर्षयन्तः शरीरमपि तदायतनत्वेनोत्कर्षयन्ति तथैव माधुर्य्यादयो गुणाः रसस्था रसमुत्कर्षयन्तः शब्दार्थावुत्कर्षन्ति। अर्थात्—रसं विना ये नावतिष्ठन्ते, अवतिष्ठमानाश्च "रसमवश्यमुपकुर्व्वन्ति ते गुणा इति" काव्यव्यवहारप्रयोजकत्वे सति, रसोत्कर्षप्रयोजकत्वे च सति रसमात्रवृत्तित्वं गुणत्वमिति गुणस्य लक्षणं निष्पन्नम्। यथा च शरीरस्थाः कटककेयूरादयोऽलङ्कारा यथौचित्यमवस्थापिताः शरीरद्वाराऽऽत्मानमलङ्कुर्व्वन्ति तथैव शब्दार्थवता अनुप्रासोपमादयोऽलङ्कारा अपि वाचकवाच्योत्कर्षाधानमुखेन रसादिमप्यलङ्कुर्व्वन्ति। इत्थञ्च रसोपकारकत्वे सति रसावृत्तित्वम्, रसोपकारकत्वे सति रसानियतस्थितिकत्वं शब्दार्थान्यतरवृत्तित्वमलङ्कारत्वमित्यलङ्कारस्य लक्षणं निष्पन्नमिति तत्वम्।

जो उस रसादि रूप अङ्गी भूत होते हुए को अवलम्बन करते हैं वे शौर्य

आदि की तरह गुण कहाते हैं। और जो वाच्यवाचकरूप अर्थात् शब्दार्थरूप काव्य के अङ्ग हैं वे कटक आदि अलङ्कार के समान अलङ्कार हैं ॥ ६ ॥

ननु माधुर्यादिगुणानां शब्दार्थगतत्वेन कथं रसादिवृत्तित्वमित्याशङ्कायामाह—

तथा च—

श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्य्यं प्रतितिष्ठति ॥ ७ ॥

अन्वयः—परः, प्रह्लादनः, मधुरः, श्रृङ्गारः, एव, रसः, तन्मयम्, काव्यम्, आश्रित्य, माधुर्य्यम्, प्रतितिष्ठति ॥ ७ ॥

श्रृङ्गार इति। परः = अत्युत्कृष्टः, प्रह्लादनः = अतिमोदकरः, मधुरः = मधुररसवन्मधुरः मिष्टः, श्रृङ्गार एव = अष्टसु रसेषु प्रथम एव, रसः, (अतः) तन्मयम् = श्रृङ्गारमयम्, काव्यम = शब्दार्थौ, आश्रित्य = अवलम्ब्य, माधुर्य्यम् = माधुर्य्यनामा गुणः, प्रतितिष्ठति = प्रतिष्ठां गच्छतीत्यर्थः।

भावार्थः—रतेः सकलामरतिर्य्यङ्नरादिजातिषु प्रमोदावहत्वेन, मधुरो यथा शर्करादिरसो ज्ञानिनां मूढानां वा स्वस्थानां रोगिणां वा नृणां झटिति रसनानिपतितः परमाभिलषणीयोऽत्यानन्दकरश्च जायते तथा माधुर्य्यनामा गुणोऽपि रतिसारभूत—श्रृङ्गारप्रधानमेव काव्यमाश्रित्य प्रतिष्ठां प्राप्य सहृदयामत्यानन्दकर इति सारांशः।

यद्यपि वस्तुतो माधुर्याख्यो गुणः, श्रृङ्गारादे रसस्यैवगु णस्तथापि मधुराभिव्यञ्जकशब्दार्थयोस्तु स भाक्त इत्यवधेयम्।

अष्टौ रसा यथा—

श्रृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥
साहित्यदर्पणे प्रोक्ताः।

नन्वग्रिमकारिकायां "करुणे च प्रकर्षवत्" इत्युक्त्या करुणरसस्यैव प्राकार्ष्यबोधनेनैतत्कारिकास्थस्य "श्रृङ्गार एव मधुरः" इत्यत्रैवकारस्य विरोध इति चेन्न। श्रृङ्गार एव माधुर्य्यं न शब्दार्थयोरिति शब्दार्थवृत्तित्वव्यवच्छेदार्थमेवकारस्य सार्थक्येन विरोधाभावात् ॥ ७ ॥

शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात् प्रकाशनपरः। शब्दार्थतया काव्यस्य स माधुर्य्यलक्षणो गुणः।

शृङ्गार एवेति। शृङ्गार एव = रसः नान्यरस इति यावत्, रसान्तरापेक्षया = शृङ्गारेतरहास्यरसाद्यपेक्षया, मधुरः = मधुररसवन्मधुरः, प्रह्लादहेतुत्वात् = प्रह्लादस्यात्यानन्दस्य कारणत्वात्, प्रकाशनपरः = चित्तद्रुतिहेतुत्वात्प्रमोदकरः, काव्यस्य, शब्दार्थतया = शब्दार्थरूपतया, स, माधुर्य्यलक्षणो गुणः = गुणत्वव्यपदेश्य इत्यर्थः।

ननु "श्रव्यं नातिसमस्तशब्दार्थं मधुरमिष्यते" इति केषाञ्चिल्लक्षणं माधुर्यस्य न लक्षणमित्याह—

श्रव्यत्वं पुनरोजसोऽपि साधारणमिति।

"चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते" इत्युक्तलक्षणात्। चित्तद्रुतिकारणत्वमेव माधुर्य्यस्य लक्षणम्। श्रव्यत्वन्तु सुशब्दतया श्रवणेच्छाविषयीभूतत्वं श्रवणानुद्वेजकत्वरूपम् तत्तु पुनः, ओजसोऽपि = ओजोगुणस्यापि, साधारणम् = सामान्यम्, तद्यथा—ओजोगुणोदाहरणे "यो यः शस्त्रं बिभर्ति" इत्यादौ श्रव्यत्वस्यासमस्तत्वस्य च सत्वेऽपि चित्तद्रवीभावस्याभावान्न माधुर्य्यलक्षणं सङ्गच्छतेऽतः प्राचीनलक्षणं सर्वथाऽसङ्गतमित्यवधेयम्।

इसलिये शृङ्गार रस ही सबों से अधिक आनन्द देनेवाला है और मधुर है। उस शृङ्गारमय काव्य के आश्रयण कर ही माधुर्यगुण रहता है।

और जो भामह ने "श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते" ऐसा माधुर्य्य का लक्षण माना है वह श्रव्यत्व तो ओजोगुण में भी रहता है इसलिये श्रव्यत्व माधुर्य्यगुण का लक्षण नहीं मानना चाहिये।

अथ माधुर्य्यस्य प्रमुखं लक्ष्यं प्रदर्शयति—

शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्य्यमार्द्रतां याति यतस्तत्राधिकं मनः॥ ८॥

अन्वयः—यतः, माधुर्य्यम्, विप्रलम्भाख्ये, शृङ्गारे, करुणे, च, प्रकर्षवत्, (अतः) तत्र, मनः, अधिकम्, आर्द्रतां, याति॥ ८॥

शृङ्गार इति। माधुर्य्यम् = माधुर्य्यनामा गुणः, यतः = यस्माद्धेतोः, विप्रलम्भाख्ये = विप्रलम्भनामके, शृङ्गारे, ततोऽपि, करुणे = करुणरसे, च, प्रकर्षवत्

=अत्यौत्कर्ष्यवत्, अतिचमत्कृतिकारि, इत्यर्थः, अतः तत्र = विप्रलम्भ-शृङ्गारे, करुणे च, अधिकम् = अत्यन्तम्, मनः = चित्तम्, आर्द्रताम् = द्रुतिं, याति = प्राप्नोतीत्यर्थः ।

तदुक्तं प्रकाशकृता—

"आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणम्" इति । शृङ्गारस्य किल विप्रलम्भः, संभोगश्चेति द्वौ भेदौ ।

तयोर्लक्षणं यथा—

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ॥"

"दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः ॥" इति

करुणस्य लक्षणञ्च—

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदेकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥" इति,

कारिकार्थं वृत्तिकारोऽपि विशदयति—

**विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत्, सहृदयहृदयावर्जनातिशयनिमित्तत्वादिति ।**

विप्रलम्भशृङ्गारश्च करुणश्च विप्रलम्भशृङ्गारकरुणौ तयोस्तु माधुर्य्यमेव (गुणः) प्रकर्षवत् = उत्तरोत्तरमौत्कर्ष्यकरम्—शृङ्गारापेक्षया करुणे, करुणापेक्षया च शान्ते इति भावः । तदुक्तं प्रकाशकृता—"करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्" इति । तत्र कारणं प्रदर्शयति—सहृदयेत्यादिना । सहृदयानां हृदयस्य यत् आवर्जनमाकर्षणन्तदतिशयहेतुत्वात् ।

माधुर्य्य गुण विप्रलम्भ शृङ्गार में तथा करुणरसमें विशेष कर रहता है । क्योंकि उसमें मन अधिक पिघल जाते हैं ॥ ८ ॥

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ॥
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥ ९ ॥**

अन्वयः—काव्यवर्तिनः, रौद्रादयः, रसाः, दीप्त्या, लक्ष्यन्ते, तद्व्यक्तिहेतू, शब्दार्थौ, आश्रित्य, ओजः, व्यवस्थितम् ॥ ६ ॥

गुणप्रसङ्गादोजोगुणस्यापि विषयं प्रदर्शयति—रौद्रादय इति। काव्य-वर्तिनः = काव्यस्थाः, रौद्रादयः, रौद्रवीरादयः, रसाः, दीप्त्या = चेतोविस्फारत्वेन, लक्ष्यन्ते = प्रतीयन्ते, तदुक्तं दर्पणकृता—"ओजश्चित्तस्य विस्काररूपं दीप्तत्वमुच्यते" इति तद्व्यक्तिहेतू = तत्प्रकाशननिमित्ते, शब्दार्थौ = शब्दमर्थञ्च आश्रित्य = अवलम्ब्य, ओजः = ओजो गुणः, व्यवस्थितम् = विशेषतयाऽवस्थितमित्यर्थः ॥९॥

कारिकार्थं वृत्तिकारोऽपि विशदयति—

**रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति, लक्षणया त एव दीप्तिरित्युच्यते। तत्प्रकाशनपरः शब्दो दीर्घसमासरचनाऽलङ्कृतं वाक्यम्।**

रौद्रादयो हि रसाः, पराम् = अत्युत्कृष्टाम्, दीप्तिम् = उज्ज्वलतां, जनयन्ति = उत्पादयन्ति, इति = एवं, त एव = रौद्रादयो रसा एव, दीप्तिरिति, उच्यते = कथ्यत इत्यर्थः। तत्प्रकाशनपरः = तदभिव्यञ्जनपरः, शब्दः, दीर्घसमास-रचनालङ्कृतम् = दीर्घसमासस्थरचनया रचितम्, वाक्यम् = वाक्यमेवेत्यर्थः।

काव्य में रहने वाले रौद्र, वीर, अद्भुत ये तीनों रस दीप्ति ( चित्तविस्ताररूप ) से लक्षित होते हैं अर्थात् पढ़ने में शब्दों की उज्ज्वलता मालूम पड़ती है। उनके प्रकाश करने के कारण शब्दार्थ को आश्रयण करके ओजो गुण रहता है। इसमें दीर्घसमास रचना दिखाई देती है।

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥

अन्वयः—( हे ) देवि!, चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य, सुयोधनस्य, स्त्यानावबद्धघनशोणितशोणपाणिः, भीमः, तव, कचान्, उत्तंसयिष्यति।

ओजोगुणस्योदाहरणं प्रदर्शयति—चञ्चदिति। दुर्योधनेन सभामध्येऽतिविल-ज्जितावस्थां प्रापितां द्रौपदीं दृष्ट्वा क्रुद्धस्य भीमस्य ताम्प्रत्युक्तिरियम्। हे देवि! द्रौपदि! चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य = चञ्चन् स्फुरन् यो भुजो बाहुस्तेन भ्रमिता घूर्णिता या चण्डा भयङ्करा गदा तस्या योऽभिघातः

प्रहारस्तेन सञ्चूर्णितम् सम्यक् चूर्णितम् उरुयुगलं जङ्घाद्वयं यस्य तस्य तथोक्तस्य सुयोधनस्य न तु दुर्योधनस्य, ( एतेन तस्य निरायासवध्यत्वं सूच्यते ) स्त्यानावबद्धघनशोणितशोणपाणिः = स्त्यानं = स्निग्धम् अवबद्धं = संसक्तं, घनं = गाढं यत् शोणितं = रुधिरं तेन शोणः = रक्तवर्णः, पाणिः करो यस्य सः, भीमः = शत्रूणां भयङ्करः, ( अहम् ) तव, कचान् = केशान्, उत्तंसयिष्यति = रुधिरेण विभूषयिष्यति = संस्करिष्यतीति यावत् । अयं भावः—स्वभुजाभ्यां गदां घूर्णयित्वा तया च तदीयं जङ्घाद्वयं संत्रोट्य तदुच्छलद् घनमसृणरुधिरेण तव केशान् पुनः सुसज्जयिष्यामि धैर्य्यमवलम्ब्यतामिति । "स्त्यानं स्निग्धे प्रतिध्याने घनत्वालस्ययोरपि" इति मेदिनी । "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरश्च । वेणीसंहारस्येदं पद्यम् । वसन्ततिलकाख्यं छन्दः ।

जैसे—हे देवि ! फड़कती हुई भुजाओं से घुमाई हुई गदा के भयङ्कर प्रहार से जिसकी दोनों जंघाओं को चूर चूर कर दिया है उस दुर्योधन के जमे हुए गाढ़े रक्त से रंगे हुए हाथवाला यह भीम तेरे केशों को बाँधकर सुशोभित करेगा।

तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः ।

तत्प्रकाशनपरः = रौद्रादिरसव्यञ्जनपरः, ( सः ) अर्थः केवलं न किन्तु अनपेक्षितदीर्घसमासरचनः = न अपेक्षिता दीर्घसमासा रचना यस्मिन् सः, प्रसन्नवाचकाभिधेयः = प्रसन्नस्य प्रसादगुणयुक्तस्य वाचकस्य शब्दस्य अभिधेयः = अर्थश्चापि । रौद्रादिरसव्यञ्जनपर एवशब्दः केवलमोजसो व्यञ्जको न किन्तु दीर्घसमासरहितः प्रसादगुणव्यञ्जकोऽप्यर्थं ओजसो व्यञ्जक इति भावः ।

उस ओजो गुणका प्रकाश करनेवाला अर्थ दीर्घसमासरचना से रहित प्रसाद गुणों से युक्त भी होता है ।

यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चलति मयि रणे यश्च यश्च प्रतीपः,
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥'

अन्वयः—पाण्डवीनां, चमूनाम्, ( मध्ये ) स्वभुजगुरुमदः, यः, यः, शस्त्रं,

बिभर्ति, पाञ्चालगोत्रे, यः, यः, शिशुः, अधिकवयाः, गर्भशय्यां, गतो वा ( अस्ति ) यः, यः, तत्कर्मसाक्षी, ( अस्ति ) मयि, रणे, चलति, यश्च, यश्च, प्रतीपः, तस्य, तस्य, स्वयं, जगताम्, अन्तकस्य, अपि, क्रोधान्धः, अन्तकः, अहम् ।

यो य इति । वेणीसंहारेऽश्वत्थामचरितप्रधानेऽश्वत्थामाङ्के तृतीयेऽङ्के कर्णं प्रति अश्वत्थाम्न उक्तिरियम् । पाण्डवीनाम् = पाण्डवसम्बन्धिनीनाम्, चमूनाम् = सेनानाम् ( मध्ये ) स्वभुजगुरुमदः = स्वभुजयोः ( बलस्य ) गुरुर्महान्, मदः = गर्वः यस्य सः, यः, यः, = जनः, शस्त्रं = चापं, बिभर्ति = धारयति । ( तथा ) पाञ्चालगोत्रे = द्रुपदकुले, शिशुः = स्तनपायी, अधिकवयाः = वृद्धः, गर्भशय्याम् = गर्भरूपां शय्याम्, गतः = प्राप्तो वाऽस्ति । ( तथा ) यो यः, तत्कर्मसाक्षी = तत्कर्मणः धृष्टद्युम्नकर्तृकद्रोणनिहननरूपस्य ( मन्मरणस्य मृषासम्भावनया त्यक्तशस्त्रं समाहितं केशेषु प्रहृत्य ) नृशंसकार्यस्य साक्षी द्रष्टा, अस्ति । मयि = अश्वत्थाम्नि रणे = संग्रामे चलति = सति, यश्च यश्च, प्रतीपः = प्रतिकूलः ( स्यात् ) तस्य तस्य = तेषां सर्व्वेषामित्यर्थः, जगताम् = भुवनानाम्, अन्तकस्य = यमस्य, अपि, क्रोधान्धः = क्रोधेन पाञ्चालराजपुत्रेण धृष्टद्युम्नेन द्रोणस्य व्यापादनात्तत्कुलम्प्रत्यधिकक्रोधेन, अन्धः, अहम् अश्वत्थामा, अन्तकः = नाशको भविष्यामीत्यर्थः । अत्रेयं पौराणिकीवार्ताऽनुसन्धेया—समारब्धे तु महाभारते, योद्धुं प्रवृत्तेषु पाण्डवेषु शत्रूँश्च संहरत्सु पुत्रमरणशोकमन्तरा द्रोणवधस्यासम्भवत्वेनाश्वत्थाम्नश्चिरजीवित्वे द्रोणवधं सर्वथाऽसम्भवं मत्वा संत्रस्ताः पाण्डवाः—"अश्वत्थामा हत" इति मुहुरूचुः किन्तु भगवता द्रोणाचार्य्येण शस्त्राण्यमोचयित्वैव "सर्वे यूयं मिथ्यावादिनो नाहं युष्माकं वचो विश्वसिमि, अथ यदि युधिष्ठिर एवं वदेत्तदा विरमिष्यामि" इति प्रत्युक्ताः पाण्डवा अश्वत्थामानं गजं निहत्य युधिष्ठिरं कथमपि तथा वक्तुं प्रोत्साहितवन्तः । युधिष्ठिरश्च सत्यवागपि छलेन "अश्वत्थामा हत" इत्युच्चैरुच्चार्यावस्थितः । पाण्डवेषु च हर्षनादेन रोदसी प्रतिनादयमानेषु मन्दं स्वं सत्यवादित्वं साधयितुं गज इत्येवं युधिष्ठिर उच्चारितवान् । अजातशत्रुरपि "अश्वत्थामा गजो हत" इति वाक्यं सङ्गमयन्निव तथोवाच इति महाभारतकथा । स्रग्धराच्छन्दः । 'स्रग्धरा म्रौ भ्रौ यौ यू त्रिः सप्तकैः' इति च तल्लक्षणम् ।

जैसे—जो पाण्डवों की सेना में अपनी भुजाओं के घमण्ड रखने वाला शस्त्र धारण करते हैं अथवा जो जो छोटा बड़ा या गर्भमें रहनेवाला है, और जो जो उस कर्म ( द्रोणवध ) के साक्षी हैं, और जो जो मेरे युद्ध के समय प्रतिकूल होगा उसे क्रोध से अन्ध होकर मैं नाश करडालूँगा। मैं संसार का नाशक यमराज का भी नाशक हूँ।

इत्यादौ द्वयोरोजस्त्वम् ।

इत्यादौ = उदाहरणे, द्वयोः = उदाहरणयोः, पूर्वोदाहरणे, समासदैर्घ्यात्, अत्रोदाहरणे, वीरत्ववर्णनाच्च, ओजस्त्वम् = ओजोगुणवैशिष्ट्यम् ।

इन दोनों उदाहरण में ओजो गुण है।

अथ प्रसङ्गात्प्रसादं लक्षयति—

समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥१०॥

अन्वयः—काव्यस्य, सर्वरसान्, प्रति, तु, यत्, समर्पकत्वम्, सः, सर्वसाधारणक्रियः, प्रसादः, गुणः, ज्ञेयः ॥१०॥

काव्यस्य = कविनिर्मितनिबन्धस्य, सर्वरसान् = शृङ्गारादिरसान्, प्रति, तु = हि ( ह्यर्थे तुः पठितः ) यत्, समर्पकत्वम् = व्यञ्जकत्वम्, सः ( विधेयप्राधान्यात्पुंस्त्वम्, सर्वसाधारणक्रियः = सर्वसाधारणी क्रिया यस्य सः, सकलरसानुकूलवृत्तिक इति यावत्, प्रसादः = प्रसादारकः, गुणः, ज्ञेयः = बोध्य इत्यर्थः । सर्वसाधारणवृत्तित्वमेवावधाय दर्पणे तूक्तम्—

'चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
सः प्रसादः समस्तेषु रसेषु रचनासु च ॥' इति ॥१०॥

जो सभी रसों के प्रति काव्य का समर्पक है और सभी रचनाओं में समान रूप से रहता है उसी को प्रसाद गुण जानना चाहिये ॥ १० ॥

कारिकार्थमेव विवृणुते वृत्तिकारः—

प्रसादस्तु स्वच्छता शब्दार्थयोः। स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्चेति व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः ।

प्रसादस्त्विति। प्रसादस्तु = प्रसादपदार्थस्तु, शब्दार्थयोः = शब्दस्य, अर्थस्य च, स्वच्छता, शब्दे शीघ्रार्थोपस्थापकत्वेन स्वच्छत्वम्, अर्थे तु द्रुतमर्थोपस्थिति-विषयत्वेनैव स्वच्छत्वं बोध्यम्। श्रोतॄणां चित्तं नितरां प्रसादयति यः सः प्रसाद इति व्युत्पत्त्या वास्तविकश्चैतद्गुणस्य नाम प्रसाद इति। स च = प्रसादाख्यः, गुणः, सर्वरससाधारणः = सर्वेषु रसेषु साधारणः, अर्थात् सर्वेष्वप्येषु रसेषु सामान्य-रूपेण वर्तमानः, अस्य रसान् शब्दानर्थान् प्रति नैव नियमोऽस्तीति भावः। सर्व्वरचनासाधारणश्च = सर्वासु रचनासु शब्दगतासु, अर्थगतासु, समस्तासु, असमस्तासु च साधारणः' सामान्यरूपेण वर्तमानः, शब्दस्य स्ववाच्यात्मकत्व-मात्रसम्भावनायां काऽलौकिकता, एवमर्थस्यापि व्यङ्ग्यं प्रत्येव समर्पकत्वसम्भा-वनायां किमपूर्वत्वमिति शब्देषु, अर्थेषु, द्वयोरपि प्रसादस्य सम्भवः, न केवलं शब्दे, नापि केवलमर्थे, एवं न केवलं दीर्घसमासरचनायामेवापित्वल्पसमास रचनायामपीति भावः। इति = एवं, व्यङ्ग्यार्थापेक्षयैव = व्यङ्ग्या येऽर्था रसास्ते-षामपेक्षयाऽपि (अत्रैव शब्दोऽप्यर्थः) अर्थात् केवलं रचनापेक्षयैव न किन्तु रसापेक्षयापीति भावः, मुख्यतया = मुख्यत्वेन, व्यवस्थितः = विशिष्टावस्थापन्नः, मन्तव्यः = बोध्य इत्यर्थः।

शब्द और अर्थ की स्वच्छता को प्रसाद कहते हैं। वह सभी रसों में साधारण रूप से रहता है और सभी रचनाओं में साधारण रूप में रहता है, व्यङ्ग्यार्थ की अपेक्षा ही से मुख्यरूप में व्यवस्थित है।

इत्थं गुणालङ्कारयोर्विभागमुद्भटप्रतिभटसम्मतं प्रदर्श्य साम्प्रतं तत्सम्मतमेव दोषाणां नित्यानित्यत्वयोर्व्यवहारं खण्डयन् स्वसिद्धान्तं दर्शयति—

श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥ ११॥

अन्वयः—श्रुतिदुष्टादयः, ये, च, अनित्याः, दोषाः, दर्शिताः, ते, ध्वन्यात्मनि, शृङ्गारे, एव, हेयाः, इति, उदाहृताः॥ ११॥

श्रुतिदुष्टादय इति। श्रुतिदुष्टादयः = श्रुतिदुष्टाः, आदिपदादर्थदुष्टा अपि ग्राह्याः, श्रुतिदुष्टा अर्थदुष्टाश्चेत्यर्थः, येऽनीत्या दोषाः दर्शिताः = निर्दिष्टाः, ते, ध्वन्यात्मनि = ध्वनिप्रधाने, शृङ्गारे, रस एव हेयाः = त्याज्या न तु रौद्रादौ, इति,

उदाहृताः = कथिता, बुधैरिति शेषः। परुषवर्णतया श्रुतिदुःखावहत्वं श्रुतिदुष्टत्वम्, तद्यथा—"कार्तार्थ्यं या तु तन्वङ्गी, तिपद्यै कार्तार्थ्यमिति पदम्। वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारित्वम्, तद्यथा—"छिद्रान्वेषी महांस्तब्धो घातायैवोपसर्पति" इति। यथा वा—'कुरु रुचिम्' इत्यत्र क्रमव्यत्यासे। श्रुतिदुष्टत्वादयो दोषाः कति? कति के च नित्याः, केचानित्या इत्याकाङ्क्षायां परिगण्यन्ते—श्रुतिदुष्टत्वादयः शब्दगता दोषास्तावत् षोडश—तत्र श्रुतिदुष्टत्वम्, अश्लीलत्वम्, अप्रयुक्तत्वम्, ग्राम्यत्वम्, अप्रतीतत्वम्, सन्दिग्धत्वम्, निहतार्थत्वम्, क्लिष्टत्वम्, विरुद्धमतिकारित्वम्, निरर्थकत्वम्, अविमृष्टविधेयांशत्वम्—एते एकादश दोषा अनित्याः ज्ञेयाः। अनुचितार्थत्वम्, नेयार्थत्वम्, अवाचकत्वम्, असमर्थत्वम्, च्युतसंस्कारत्वम्, एते पञ्चदोषा नित्या ज्ञेयाः। अर्थदोषाः कति? तत्र के नित्याः? केचानित्या इति जिज्ञासायाम्—अपुष्टत्वादयोऽर्थदोषाः (२३) त्रयोविंशतिसंख्याकास्तेषु—अपुष्टार्थत्वम्, दुष्क्रमार्थत्वम्, ग्राम्यार्थत्वम्, व्याहतार्थत्वम्, अश्लीलार्थम्, कष्टार्थत्वम्, निर्हेत्वर्थता, विशेषेऽविशेषार्थता, एतेऽष्टौ दोषा अनित्याः।

प्रकाशितविरुद्धार्थत्वम्, विद्याविरुद्धार्थता, साकाङ्क्षार्थता, सहचरभिन्नार्थता, अविशेषे विशेषार्थता, अनियमे नियमार्थता, नियमेऽनियमार्थता, विध्ययुक्तार्थता, अनुवादायुक्तार्थता, अप्रयोजकत्वम्, एते दशदोषा नित्याः। अवशिष्टाः अनवीकृतार्थत्व–सन्दिग्धार्थत्व–ख्यातिविरुद्धार्थत्वा-ऽस्थानयुक्तार्थत्व–निर्मुक्तपुनरुक्तार्थत्वादयः पञ्च क्वचिन्नित्याः क्वचिदनित्या इति तेषां न नित्येषु गणना नाप्यनित्येषु, इत्यवधेयम्॥ ११॥

श्रुतिदुष्टादि जो अनित्य दोष दिखाये गये हैं वे ध्वनि के आत्मभूत शृङ्गार ही रस में वर्जनीय हैं॥ ११॥

वृत्तिकारोऽपि कारिकार्थं विशदीकरोति—

अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचिताः, तेऽपि न वाच्येऽर्थमात्रे, न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि वा ध्वनेरनात्मभावे, किन्तर्हि, ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः। अन्यथा हि

तेषामनित्यदोषतैव न स्यात्। एवमसंलक्ष्यक्रमोद्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन।

अनित्या दोषाश्च = शब्दगतश्रुतिदुष्टत्वादिषु षोडशसु एकादश, ये श्रुतिदुष्टादयः, सूचिताः = निर्दिष्टाः, तेऽपि, न = नहि, वाच्ये = अर्थमात्रे प्रतीते न च=नापि, व्यङ्ग्ये = साधारणव्यङ्ग्येऽङ्गत्वेन प्रतीते गुणीभूतव्यङ्ग्यादावित्यर्थः, शृङ्गारव्यतिरेकिणि=शृङ्गारातिरिक्तरसे, (नापि) ध्वनेः, अनात्मभावे = अङ्गभावे, श्रुतिदुष्टादयो हेयाः, किन्तर्हि = किन्तु, ध्वन्यात्मन्येव = ध्वनिसारभूत एव शृङ्गारे, अङ्गितया = प्रधानतया, व्यङ्ग्ये = व्यङ्ग्यव्यङ्ग्यव्यञ्जके शृङ्गाररस एव ते दोषा हेयाः = त्याज्या, इत्युदाहृताः।

अयम्भावः—श्रुतिदुष्टादयो दोषाः केवलं ध्वन्यात्मभूते शृङ्गार एव न प्रयोज्याः, अङ्गत्वेन प्रतीयमाने गुणीभूतव्यङ्ग्यादौ शृङ्गारातिरिक्ते रौद्रादौ रसे, ध्वन्यङ्गभूते शृङ्गारे वा प्रयुज्यमानाः श्रुतिदुष्टादयो दोषास्तु न दोषावहा इति तत्त्वम्। अन्यथा = सर्वत्र हेयत्वे, तेषां = दोषाणां हि, अनित्यदोषतैव, न स्यात्। येषां दोषाणां क्वाचित्कत्वं ( क्वचिद् दोषा जायन्ते क्वचिन्न ) तेषामनित्यत्वसम्भावनैव नास्तीति भावः। एवम् = उक्तरीत्या, असंलक्ष्यक्रमोद्योतः, ध्वनेः, आत्मा = स्वरूपम्, सामान्येन = साधारण्येन, अविशेषेणेत्यर्थः, प्रदर्शितः = वर्णितः।

अनित्य दोष जो श्रुतिदुष्टादि बताये गये हैं वे न वाच्यार्थ मात्र में, और नहीं शृङ्गार से अतिरिक्त व्यङ्ग्य रसादि में, और नहीं ध्वनि के अनात्मभूत अर्थात् गुणीभूत शृङ्गार में किन्तु प्रधानतया व्यङ्ग्य ध्वन्यात्मक शृङ्गार में ही वर्जनीय है। अन्यथा उनसबों को अनित्य दोष ही नहीं कहा जासकता है।

इस प्रकार यह असंलक्ष्यक्रमद्योत ध्वनि का स्वरूप सामान्यतः दिखाया गया।

सामान्येन तत्स्वरूपवर्णने कारणमाह—

तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥ १२ ॥

अन्वयः—तस्य, अङ्गानाम्, ये, प्रभेदाः, ये, च, स्वगताः, प्रभेदाः, तेषाम्, अन्योन्यसम्बन्धपरिकल्पने, आनन्त्यम् ॥ १२ ॥

तस्येति। तस्य = विवक्षितान्यपरवाच्यभेदस्य रसादिध्वनेः, अङ्गानाम् = अङ्गभूतानामलङ्कारादीनाम्, ये, प्रभेदाः = उपमादयः, (तथा) ये च, स्वगताः = स्वीयाः, प्रभेदाः = रसभावादयः, सम्भोगविप्रलम्भादयश्च (सन्ति) तेषाम्, अन्योन्यसम्बन्धपरिकल्पने = अन्योन्यं मिथः यः सम्बन्धसङ्करसंसृष्टीनां सम्पर्कः, तस्य परिकल्पने सम्पादने, सति, आनन्त्यम् = आनन्त्यदोषः स्यादिति हेतोर्विशेषेण भेदा न प्रदर्शिताः, किन्तु सामान्येनैवेत्यर्थः ॥ १२ ॥

उस असंलक्ष्यक्रम व्यङ्ग्य के अङ्गों के (अलङ्कारादि) जो भेद हैं और उसके जो स्वगत भेद हैं उन सबों के परस्पर सम्बन्ध कल्पना की जाय तो अनन्त होजांयगे वह एक प्रकार के आनत्यदोष होजायगा ॥ १२ ॥

कारिकार्थं वृत्तिकारोऽपि स्फुटीकरोति—

**अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक एव आत्मा य उक्तः, तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयो, ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निस्सीमानो विशेषाः, तेषामन्योन्यसम्बन्धपरिकल्पने क्रियमाणे, कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसङ्ख्यातुं न शक्यन्ते किमुत सर्वेषाम्।**

अङ्गितयेति। अङ्गितया = प्रधानतया नाङ्गतयेति यावत्, (वर्तमानः) रसादिः = रसभावादिः, व्यङ्ग्यः, विवक्षितान्यपरवाच्यस्य = एतद्भेदस्यासंलक्ष्यक्रमोद्योतस्य, ध्वनेः, यः, एकः = एक एव, (विनाप्येवकारं तत्प्रतीति नियमात्) आत्मा = स्वरूपम्, उक्तः = कथितः, तस्य, अङ्गानाम्, अङ्गभूतानाम्, नाङ्गिनाम्, वाच्यवाचकानुपातिनाम् = वाच्यश्च वाचकश्च वाच्यवाचकौ तावनुपतितुं शीलं येषान्ते तेषाम्, शब्दार्थानुगामिनामित्यर्थः, अलङ्काराणाम् = उपमादीनाम्, ये प्रभेदाः = प्रकृष्टभेदाः, निरवधयः = निःसीमानः। तस्य, अङ्गिनः, अर्थस्य = रसादेः, ये च, स्वगताः = स्वीयाः प्रभेदाः, रसभावतदाभासतत्प्रशमलक्षणाः = रसा अष्टौ, भावाः स्थायिभावा व्यभिचारिभावाश्च, तदाभासः, रसाभासः, भावाभासश्च, तत्प्रशमः भावप्रशमः भावसन्धिः भावशबलः, इत्यादिः,

तल्लक्षणाः, विभावानुभावव्यभिचारिप्रतिपादनसहिताः = विभाव्यन्ते आस्वादाङ्कुर-प्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिरिति विभावाः = नायिका-नायकश्च अनुभावयन्ति वासनारूपेणावस्थितान् रत्यादीन् स्फुटमिति अनुभावाः चन्द्रचकोरादयः, व्यभिचारिणः निर्वेदादयः, तेषां यत्प्रतिपादनन्तेन सहिताः, अनन्ताः = असंख्याः, स्वाश्रयापेक्षया = स्वभेदापेक्षया, निस्सीमानः = निरवधयः, विशेषाः = बहवः, तेषाम्, अन्योन्यसम्बन्धपरिकल्पने = परस्परसम्बन्धयोजने, क्रियमाणे = सम्पाद्यमाने कस्यचित्, अन्यतमस्य = एकस्यापि, रसस्य, प्रकारा = भेदाः, परिसंख्यातुम् = गणयितुम्, न = नैव, शक्यन्ते = असंख्येया इत्यर्थः, सर्वेषाम् = भेदानान्तु, भेदाः परिसंख्यातुं किमुत = कथं, शक्यन्त इत्यर्थः।

विवक्षितान्यपर वाच्य ध्वनिका प्राधान्यरूपेण वर्तमान व्यङ्ग्य रसादि कारि-कार्थ को वृत्तिकार एक स्वरूप कहा गया है उसके अङ्गभूत वाच्यवाचक अर्थात् शब्दार्थ में रहने वाले अलङ्कारों के भेद असंख्य हैं तथा उस अङ्गी अर्थ के अर्थात् रसादि ध्वनि के रसभाव-तदाभास ( रसाभास-भावाभास ) तत्प्रशमरूप विभाव अनुभाव-व्यभिचारिभाव के कथन सहित असंख्य और अपने आश्रय अर्थात् स्त्री-पुरुष आदि के भेद की अपेक्षा से निस्सीम ( अर्थात् अनन्त ) हैं और विशेष ( भेद उपभेद ) हैं, उन सबों का परस्पर एक दूसरे के साथ ( संसृष्टि-संकर ) सम्बन्ध कल्पना करने पर उनसबों में से किसी एक भी रसके प्रकार ( भेद ) की गणना कर नहीं सकते और सबों की तो क्या ?

तथा हि—शृङ्गारस्यैवाङ्गिनस्तावदाद्यौ द्वौ भेदौ, सम्भोगो विप्र-लम्भश्च। सम्भोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः। विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः। तेषाञ्च प्रत्येकं विभावानुभावव्यभिचारिभेदाः। तेषाञ्च देशकालाद्याश्रयावस्था-भेदा इति स्वगतभेदापेक्षयैव तस्यापरिमेयत्वम्, किं पुनरङ्गप्रभेद-कल्पनया। ते हि प्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति।

आनन्त्यप्रकारमेव दर्शयति—तथा हीति। अङ्गिनः = प्रधानस्य शृङ्गारस्यैव, तावत्, आद्यौ = प्रथमौ, द्वौ भेदौ = भेदद्वयम्, ( प्रथमः ) सम्भोगः,

( द्वितीयः ) विप्रलम्भश्च । 'दर्शनस्पर्शनादीनि विषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृत' इत्युक्तलक्षणः सम्भोगः, "यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ" इत्युक्तलक्षणः विप्रलम्भः । सम्भोगस्य च, परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः = परस्परं प्रेम्णा दर्शनं प्रेमदर्शनम् सम्भाषणञ्च सुरत = चतुष्पष्टिप्रकारमालिङ्गनादि, विहरणम् = उद्यानेषु गमनम् आदिपदेन जडक्रीडापानकचन्द्रोदयक्रीडा, तल्लक्षणाः, प्रकाराः = भेदाः, विप्रलम्भस्यापि भेदस्य, अभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः = अभिलाषः = पूर्वरागः, ईर्ष्या = अक्षमा, विरहः = गुरुजनलज्जापारवश्यदैवप्रतिबन्धककार्य्यहेतुको नायिकानायकयोरसंयोगः, प्रवासः=विदेशवासः, विप्रलम्भः = वियोगः तदादयः । तेषाञ्च प्रत्येकम् , विभानुभावव्यभिचारिभेदाः = एषां लक्षणन्तु पूर्वमेवोक्तम् । तेषाञ्च, देशकालाद्याश्रयावस्थाभेदाः = देशकालादीनामाश्रयस्य अवस्थायाश्च भेदाः, इति = एवं, स्वगतभेदापेक्षयैव = स्वजनाः स्वीयाः ये भेदा रसभावादयः तदपेक्षयैव, तस्य = शृङ्गारस्य, अपरिमेयत्वम् = असंख्येयत्वम् , अङ्गप्रभेदकल्पनया = अङ्गानामलङ्काराणां ये प्रभेदास्तत्कल्पनया तद्वर्णनेन, किं पुनः अर्थात् किं वक्तव्यम् । ते हि प्रभेदाः = अङ्गभेदाः प्रत्येकम् , अङ्गिनां ये प्रभेदास्तत्सम्बन्धस्य परिकल्पने, क्रियमाणे = विधीयमाने सति आनन्त्यमेव = असंख्यतामेव, उपयान्ति = प्राप्नुवन्तीत्यर्थः ।

जैसे—अङ्गी ( प्रधानभूत ) रसके पहले दो भेद हैं । संभोग और शृंगार । और संभोग शृगार के परस्पर प्रेम दिखलाना सुरत और उद्यानविहरण ( पुष्पवाटिका विहार ) आदि भेद हैं । विप्रलम्भ शृंगार के भी अभिलाष-ईर्ष्याविरह-प्रवास-वियोग आदि भेद हैं । उनसबों में प्रत्येक के विभाव, अनुभाव, व्यभिचारि भाव भेद हैं । उन विभावादि का भी देश-काल-आश्रय अवस्था के भेद हैं । इस प्रकार स्वगत भेदों की अपेक्षा उस एक शृङ्गार की संख्या करना असम्भव है । और उनके अङ्गों के भेदोपभेद की कल्पना में तो कहना ही क्या है ? वे अङ्गों के अर्थात् अलङ्कार आदि के भेद प्रत्येक अङ्गी रसादि के भेदों के साथ सम्बन्ध कल्पना करने पर आनन्त्य ( असंख्य ) दोष ही होने लगते हैं इसलिये यह दोष त्याज्य है ।

दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ १३ ॥

अन्वयः—तु, दिङ्मात्रम्, उच्यते, येन, व्युत्पन्नानां, सचेतसाम्, बुद्धिः, सर्वत्र, एव, आसादितालोका, भविष्यति ॥ १३ ॥

दिङ्मात्रमिति। 'यद्यपि रसादिध्वनेर्भेदानामपरिसंख्येयत्वम्, तु = किन्तु, दिङ्मात्रम् = दिशां प्रदर्शनमात्रम्, उच्यते = मार्गप्रदर्शनमात्रं क्रियत इत्यर्थः, येन = पथप्रदर्शनमात्रेण, व्युत्पन्नानाम् = विशेषविदाम्, काव्यतत्त्वविदाम् प्रतिभावतामित्यर्थः, सचेतसाम् = सहृदयानाम्, बुद्धिः = मतिः, सर्व्वत्रैव = रसादिषु, आसादितालोका = आसादितः प्राप्तः, आलोकः प्रकाशः, सम्यग्व्युत्पत्तिर्यया सा प्राप्तप्रकाशा भविष्यति, इत्यर्थः।

विस्तरेण तद्भेदप्रदर्शनस्याशक्यतया प्रतिभावतां दिग्दर्शनमात्रेणापि सकलतत्वावगमसम्भवे संक्षेपेणैव असंलक्ष्यक्रमध्वनिरुच्यत इति कारिकातात्पर्यम्।

उन सबों का दिङ्मात्र ( इशारा मात्र ) आगे कहे जाते हैं जिससे व्युत्पन्न सहृदयों की बुद्धि सर्वत्र प्राप्त कर लेगी ॥ १३ ॥

कारिकार्थं वृत्तिकृदपि विवृणोति—

**दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे कर्तव्येऽलङ्कारेऽङ्गाङ्गिपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति।**

कारिकाव्याख्ययैव एतद्ग्रन्थस्य व्याख्या गतार्था।

इशारा मात्र करने ही से व्युत्पन्न सहृदयों की बुद्धि एक भी रस भेद में अलङ्कारों के साथ अङ्गाङ्गिभाव के पूर्णज्ञान होने से सभी जगह प्रकाश प्राप्त कर सकेगी।

तत्र—

तत्र = वक्तव्ये दिङ्मात्रे। एतदवश्यमवगन्तव्यम्।

**शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात्।**
**सर्व्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ १४ ॥**

अन्वयः—अङ्गिनः, शृङ्गारस्य, सर्वेषु, एव, प्रभेदेषु, यत्नात्, एकरूपानुबन्धनात्, अनुप्रासः, न, प्रकाशकः ॥ १४ ॥

शृङ्गारस्येति। अङ्गिनः = अङ्गित्वेन विद्यमानस्य, शृङ्गारस्य = रसस्य, सर्वेषु एव = सम्पूर्णेष्वेव, प्रभेदेषु, यत्नात् = यत्नतः क्रियमाणात्, एकरूपानुबन्धनात्

=एकरूपस्य एकाकारस्य अनुबन्धनात् सम्पादनात्, हेतोः, अनुप्रासः = "अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" इति दर्पणोक्तलक्षणलक्षितः शब्दालङ्कारः, न = नैव, प्रकाशकः = व्यञ्जक इत्यर्थः ।

शृङ्गारस्यातिसुकुमारतया बाहुल्येन यमकादिनिबन्धनं व्यञ्जकत्वे सर्वथा बाधकमिति कारिकायास्तत्वम् ॥ १४ ॥

उसमें—अङ्गी शृङ्गार रस के सभी भेदों में यत्नपूर्वक लगातार एक रूप से अनुबद्ध होने से अनुप्रास रसका अभिव्यञ्जक नहीं होता ॥ १४ ॥

तदेव विवृणुते वृत्तिकारः—

**अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदाः, तेषु सर्व्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः ।**

कारिकाव्याख्ययैवास्य गतार्थत्वम् । अयम्भावः—यन्निबन्धे पृथग् यत्नस्य नापेक्षा त एवालङ्कारा अतिसुकुमारस्य शृङ्गारध्वनेर्व्यञ्जकाः । अनुप्रासादयस्त्वर्थव्यवधायकत्वेन तदीयं सौकुमार्य्यं झटिति तिरोदधत्येवातो यदा कदापि शृङ्गारवर्णनेऽनुप्रासादीनां निबन्धनेषु न कदापि क्षतिः किन्तु यत आरभ्य यावत्पर्य्यन्तं शृङ्गाररसवर्णनं तावत्पर्य्यन्तमेकप्रकारतयाऽनुप्रासनिबन्धने तु नैव तद्रसस्य व्यञ्जनं भवत्यतो महाकविभिरत्रावश्यमेव यत्नो विधेयः । इति तात्पर्य्यम् ।

कारिकायामङ्गिन इति विशेषणस्य प्रयोजनं प्रतिपादयति—

**अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह ।**

अङ्गिन इत्यनेन = अङ्गिन इति विशेषणदानेन, अङ्गभूतस्य = अङ्गत्वेन निबद्धस्य, शृङ्गारस्य = तदाख्यरसस्य, एकरूपानुबन्ध्यनुप्रासनिबन्धने = एकरूपेण एकप्रकारेण अनुबन्धिनोऽनुप्रासस्य निबन्धने, कामचारम् = स्वच्छन्दताम्, आह निबन्धयितः स्वेच्छात्वमित्यर्थः ।

कहने का यह तात्पर्य्य है कि अङ्गभूत शृङ्गार एक रूप से अनुप्रास निबन्ध में स्वेच्छा है अर्थात् अङ्गभूत लगातार यदि अनुप्रास रचना हो तो कोई दोष नहीं ।

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।**
**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥१५॥**

अन्वयः—ध्वन्यात्मभूते, शृङ्गारे, विशेषतः, विप्रलम्भे, यमकादिनिबन्धनम्, शक्तौ, अपि, प्रमादित्वम् ।

तन्निबन्धनेऽपरमपि हेतुं प्रदर्शयति—ध्वन्यात्मभूत इति । ध्वन्यात्मभूते =ध्वनेरात्मभूते ध्वन्यागारे, शृङ्गारे = रसे, विशेषतः = विशेषेण, विप्रलम्भे = विप्रलम्भशृङ्गारे, यमकादिनिबन्धनम् = यमकादीनाम् यमक-सभङ्गश्लेष चित्र-भाषासमप्रभृतीनाम् निबन्धनम् सन्निवेशनम्, ( कवेः ) शक्तावपि = प्रतिभायामपि, प्रमादित्वम् = अनवधानता, लक्ष्यत इति शेषः ॥१५॥

शक्ति रहने पर भी ध्वनि के आत्मभूत शृङ्गार रसमें यमकादि अनुप्रास का निबन्ध करना कवि को प्रमादित्व ( उन्मादित्व ) कहा जासकता है और विशेषकर विप्रलम्भ शृङ्गार में ॥ १५ ॥

कारिकार्थे वृत्तिकारोऽपि विशदीकरोति—

ध्वनेरात्मभूतः शृङ्गारस्तात्पर्य्येण वाच्यवाचकाभ्यां प्रकाश्यमानः, तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम् ।

ध्वनेः, आत्मभूतः = सारभूतः, शृङ्गारः, तात्पर्य्येण = तात्पर्य्यद्वारा, वाच्य-वाचकाभ्याम् = शब्दार्थाभ्याम्, प्रकाश्यमानः = प्राकाश्यं नीयमानः, ( सन् ) तस्मिन् = शृङ्गारध्वनौ, यमकादीनाम् = यमकम्—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥

इति दर्पणकारलक्षितम्, तदादयः सभङ्गश्लेषचित्रभाषासमप्रभृतयस्तेषाम्, यमकप्रकाराणाम् = यमकसदृशालङ्काराणाम्, दुष्करशब्दभङ्गश्लेषादीनाम् = दुष्करः दुःखेन कर्तुं शक्यः यः सभङ्गश्लेषस्तदादयः चित्रभाषासमादयस्तेषाम् । चित्रस्य लक्षणं यथा दर्पणे—

'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते, इति प्रायः पद्मबन्धमुरजबन्धादीनां दुष्करत्वेनैव दुष्करत्वमुक्तं भवति ।

तत्र पद्मबन्धो यथा--

'भासते प्रतिभासार ! रसाभाताहताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥




एतादृशो बन्धः सर्वथा दुष्करः। खड्गबन्धः–मुरजबन्धः–सर्वतोभद्रबन्धश्चे-त्यादीनां सर्व्वेषामेव दुष्करत्वं बोध्यम्। शक्तावपि = कवेः सामर्थ्येऽपि, प्रमादित्वम् = महत्स्खलनं सञ्जायते, इत्यर्थः।

ध्वनि के आत्मभूत शृङ्गार रस तात्पर्य्य द्वारा शब्दार्थ से ही प्रकाशित होता है। उसमें यमकादि अर्थात् यमकसदृश शब्दश्लेष या सभङ्गश्लेष तथा मुरजादि बन्ध दुष्कर ( कठिन ) अलङ्कारों से निबन्ध करना शक्ति होने पर भी कवि को प्रमादित्व सूचक है।

"प्रमादित्वम्" इत्यनेनैतद्दर्श्यते—काकतालीयेन कदाचित्कस्यचि-देकस्य यमकादेर्निष्पत्तावपि, भूम्नाऽलङ्कारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य इति।

अथ कारिकायां "प्रमादित्व"मिति विशेषणस्य सार्थक्यं दर्शयति—प्रमा-

द्वित्वमिति । 'प्रमादित्वम्' इत्यनेन = इति विशेषणदानेन, एतत् = फलम्, दर्श्यते = दर्शयतीति स्फुटोऽर्थः, काकतालीयेन = काकतालीयन्यायेन, काककृततालफलोपभोगवत्, कदाचित् = कस्मिंश्चित्समये न तु सर्व्वदा कस्यचित्, एकस्य, यमकादेः = अलङ्कारस्य, निष्पत्तावपि = सन्निवेशेऽपि, नैव कापि हानिः, किन्तु, भूम्ना = बाहुल्येन, अलङ्कारान्तरवत् = रूपकाद्यलङ्कारवत्, रसाङ्गत्वेन = रसस्याङ्गत्वेन, नाङ्गितया निबन्धः = निबन्धनम्, न = नैव, कर्तव्य इत्यर्थः ।

**'विप्रलम्भे विशेषतः' इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते। तस्मिन् द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य इति ।**

अथ कारिकायां "विप्रलम्भे विशेषतः" इति विशेषणस्य प्रयोजनं प्रतिपादयति—विप्रलम्भ इति । "विप्रलम्भे विशेषतः" इत्यनेन = इति विशेषणदानेन, विप्रलम्भे = विप्रलम्भशृङ्गारे, सौकुमार्य्यातिशयः = सौकुमार्य्यस्य सुकुमारत्वस्य अतिशयः = प्रकर्षः, ख्याप्यते = ख्यातिं नीयते, "विप्रलम्भशृङ्गारः सुकुमारतरः" इति ख्यातिविषयतां प्राप्यते इति भावः । तस्मिन् = विप्रलम्भशृङ्गारे, द्योत्ये = व्यङ्ग्ये, अङ्गस्य, यमकादेः, निबन्धः = सन्निवेशः, नियमात् = नियमपूर्वकम्, न = नैव, कर्तव्य इत्यर्थः । विप्रलम्भशृङ्गारो ह्यतिसुकुमारतया स्वल्पमप्यन्यालङ्कारमिश्रणन्न सहत इत्यतो निबन्धो यमकादेर्नैव कार्य्य इति भावः।

"प्रमादित्वम्" यह कहने से यह दिखाया गया है कि काकतालीयन्याय से कभी किसी एक यमकादि की रचना होने पर भी अन्य अलङ्कारों के सदृश बाहुल्येन निबन्ध नहीं करना चाहिये। "विप्रलम्भे विशेषतः" ऐसा कहने से विप्रलम्भ शृङ्गार में अत्यन्त सुकुमारता घोषित होती है । विप्रलम्भ शृङ्गारद्योत्य होने पर अङ्ग यमकादि अलङ्कारों का निबन्ध नियमतः नहीं करना चाहिये ।

ननु तर्हि शृङ्गारादिध्वनौ यमकादेर्निबन्धस्य का खलु युक्तिरित्यपेक्षायामाह—

**अत्र युक्तिरभिधीयते—**

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ १६ ॥**

अन्वयः—यस्य, बन्धः, अपृथग्यत्ननिर्वर्त्यः, (भवेत्) (तथा) रसाक्षिप्ततया, शक्यक्रियः, भवेत्, सः, अलङ्कारः, ध्वनौ, मतः ॥ १६ ॥

रसाक्षिप्ततयेति । यस्य = यमकादेरलङ्कारस्य, बन्धः = निबन्धनम्, अपृथग्यत्ननिर्वर्त्यः = पृथग्यत्नेन न निर्वर्त्यः किन्तु रसबन्धानुकूलप्रयत्नेनैव सम्पाद्यो भवेत्, ( तथा ) रसाक्षिप्ततया = रसेनैव आक्षिप्ततया शक्यक्रियः = कर्तुं शक्यो भवेत्, अर्थात्, सः, स एव, अलङ्कारः, ध्वनौ=शृङ्गारध्वनौ, मतः = सर्वसम्मतः । रसनिबन्धक्रमे यदि रसेनैवालङ्कार आक्षिप्तो भवेत्तदैव सोऽलङ्कारो ध्वनौ मत इति तात्पर्य्यम् ।

इसमें युक्ति कही जाती है:—

रसादि ध्वनि में जिस अलङ्कार का निबन्ध ( रचना ) रसों से आक्षिप्त होकर पृथक् यत्नों से यदि नहीं हो सके तो वह अलङ्कारसंयत है ॥ १६ ॥

कारिकार्थं वृत्तिकारोऽपि विशदयति—

निष्पत्तावाश्चर्य्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत्, सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलङ्कारो मतः । तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः ।

निष्पत्तौ = रसनिबन्धनप्रयासेऽकस्मादलङ्कारस्यापि स्वतः सिद्धौ, आश्चर्य्यभूतोऽपि = "कथमयमकस्मान्निष्पन्नः" इत्याश्चर्य्यं प्रापयन्नपि, यस्य अलङ्कारस्य, रसाक्षिप्ततयैव = रसाकृष्टतयैव बन्धः = निबन्धः, शक्यक्रियः = शक्या क्रिया यस्य सः कर्तुं शक्य इत्यर्थः । भवेत् = जायेत, सः, अस्मिन्, अलक्ष्यक्रमव्यङ्ग्ये = असलक्ष्यक्रमोद्योते ध्वनौ, अलङ्कारः, मतः । तस्यैव = अलङ्कारस्य, रसाङ्गत्वम् = रसस्याङ्गत्वम्, मुख्यम् = प्रधानमित्यर्थः ।

अलङ्काराणां रसाङ्गत्वे सत्यपि त एवालङ्कारा अलक्ष्यक्रमोद्योते मुख्या येषां बन्धो रसबन्धप्रयत्नेनैव सुसम्पन्नो जायेत, तथा निबद्धेन रसेनैव समाक्षिप्तो लक्ष्येत । पृथग्यत्ननिष्पाद्यानामलङ्काराणान्तु सर्व्वथाऽमुख्यत्वमित्याकूतम् ।

यमकादि अलङ्कार की निष्पत्ति अर्थात् रचना हो जाने पर "इस प्रकार सुन्दर यमकादि कैसे बन गया" ऐसा आश्चर्य्य होने पर भी जिस अलङ्कार की रचना ( निबन्ध ) रसों से आक्षिप्त ही होकर होसके वही इस असंलक्ष्यक्रम व्यङ्ग्य ध्वनि में अलङ्कार मान्य है । और उसी अलङ्कार के रस के अङ्ग रहना मुख्य है ।

अपृथग्यत्ननिर्वर्त्यमलङ्कारमुदाहरति—

यथा—

कपोले पत्राली करतलनिरोधेन मृदिता,
निपीतो निश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति वाष्पस्तनतटं,
प्रियो मन्युर्जातस्तव निरनुरोधे ! न तु वयम् ॥

अन्वयः—( हे ) निरनुरोधे !, ( तव ) कपोले, पत्राली, करतलनिरोधेन, मृदिता, अयम्, अमृतहृद्यः, अधररसः, निःश्वासैः, निपीतः ( तथा ) कण्ठे, लग्नः, वाष्पः, मुहुः, स्तनतटम्, तरलयति, तव, मन्युः, प्रियः जातः, तु, वयम्, न ।

कपोल इति । कामपि मानिनीं सान्त्वयतः कस्यचिन्नायकस्योक्तिरियम् । हे निरनुरोधे = अनुरोधान्निष्कान्ता निरनुरोधा तत्सम्बुद्धौ, निरपेक्षे ! इत्यर्थः, तव, कपोले = गण्डस्थले, ( या ) पत्राली = पत्ररचना, करतलनिरोधेन = विषादाद्वाम-कपोले न्यस्तस्य वामकरतलस्य निरोधेन अवरोधेन, मृदिता = प्रोञ्छिता, ( तथा ) अयं = प्रत्यक्षः, अमृतहृद्यः = अमृतवत् हृद्यः मनोरञ्जकः, अधररसः = ओष्ठरसः, निश्वासैः = उच्छ्वासैः, निपीतः = निश्शेषं पीतः, ( तथा ) कण्ठे = गले, लग्नः = सक्तः, वाष्पः = अश्रु, मुहुः = वारंवारम्, स्तनतटम् = कुचतटम्, तरलयति = कम्पयति, ( अतः ) तव, ते, मन्युः = क्रोधः, प्रियः, = प्रियतरः, जातः = अजनि, तु = किन्तु, वयम्, ( प्रियाः ) न = नैव, जाताः, इति शेषः ।

अयम्भावः—क्रोधवशात्किञ्चित्स्मर्तुकामायाः करतले वामकपोलं न्यस्तायास्तव पत्ररचनाप्रयासोऽपि विफलो लक्ष्यते । सखेदं दीर्घनिःश्वासमोचनेन मनोरम ओष्ठ-रसोऽपि नितरामुदासीनो लक्ष्यते । गले संलग्नस्य वाष्पस्य सगद्गदस्वरेण पयोधरस्यापि समुच्छ्वलनपीडा इत्थं तव क्रोध एव इदानीं प्रियो लक्ष्यते वयन्तु नितरामप्रिया इति सारांशः ।

अत्र नायकापेक्षया मानस्यैव नायिकाप्रियत्वेनापृथग्यत्नेन निष्पद्यमानो व्यतिरेकालङ्कारो विप्रलम्भश्रृङ्गारध्वनिमुपस्कुर्वन् सर्वथा तदङ्ग एव ।

किसी मानिनी नायिकाको समझाता हुआ नायक कहता है कि—उपेक्षा

करने वाली प्रिये ! कोपवश हाथ पर गाल रखने से तुम्हारी पत्ररचना नष्ट हो गई और सुन्दर होठ की लालिमा लम्बी सांस लेने से उदास पड़ गई है। कण्ठ के भीतर विद्यमान आंशु की धार कपसने से अर्थात् फूट फूटकर रोने से तुम्हारा स्तनतट उछल रहे हैं इसलिये क्रोध ही तुझे प्यार है मैं नहीं। यहाँ नायक की अपेक्षा मानवती नायिका के मान प्रिय होने के कारण लक्षित जो व्यतिरेकालङ्कार है वह विप्रलम्भ शृङ्गार रस ध्वनि का अङ्गभाव से विराजमान है।

**रसाङ्गत्वे च तस्य लक्षणमक्षुण्णमपृथग्यत्नं निर्वर्त्यत इति।**

अत्र ह्यर्थे चः पठितः, हि = यतः योऽलङ्कारः, अपृथग्यत्नम् = पृथक्यत्नं विनैव, निर्वर्त्यते = संपद्यते, तस्य = अलङ्कारस्य, रसाङ्गत्वे, = प्रधानीभूतरस-स्याङ्गत्वे लक्षणम् = अलङ्कारस्य यल्लक्षणम् तल्लक्षणम् ( सर्वथा ) अक्षुण्णम् = क्षोदक्षेमरहितम् अबाधकं सत् सुसङ्गतम् इत्यर्थः।

जो अलङ्कार ध्वनिस्थापन में जो यत्न किया जाता है उसी यत्न के साथ निकल जाय उसके लिये अलग यत्न नहीं किया जाय उसी अलङ्कार का रसाङ्ग होने में लक्षण सङ्गत हो सकता है यदि उसके लिये अलग प्रयास करना पड़ा तो वही मुख्य हो जाता है ध्वनि नहीं।

अथेदानीं यमकाद्यलङ्काराणां रसध्वनेः सर्वथाङ्गत्वाभाव इति सप्रपञ्चं विविच्यते—

**रसं बन्धुमध्यवसितस्य कवेर्योऽलङ्कारस्तां वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते, न रसाङ्गमिति। यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणरूपः।**

रसमिति। रसं बन्धुम् = रसनिबन्धनाय, अध्यवसितस्य = कृतोद्योगस्य कवेः, तां वासनाम् = रससम्बन्धिसंस्कारपरम्पराम्, अत्यूह्य = अतिक्रम्य, यत्नान्तरम् = रसातिरिक्ततत्सदृशशब्दान्वेषणरूपपृथग्व्यापारम्, आस्थितस्य = विहितवतः योऽलङ्कारः, निष्पद्यते = निस्सरति सः अलङ्कारः, रसाङ्गम् = रसस्य, अङ्गं न भवतीत्यर्थः। बुद्धिपूर्वकम् = स्वमत्युल्लासपूर्वकम्, प्रबन्धेन = बन्धबाहुल्येन, क्रियमाणे = निबध्यमाने, यमके तु, शब्दविशेषान्वेषणरूपः = सदृशाकृतितुल्यार्थकशब्दविशेषयदन्वेषणं तद्रूपः, यत्नान्तरपरिग्रहः = अपरस्य यत्नस्याभ्युपगमः नियमेनैव = नियतरूपेणैव, आपतति = आयातीत्यर्थः।

अत्रायं निष्कर्षः—यमकस्य पृथग्यत्नसाध्यत्वेन रसनिबन्धनप्रयासेनैव चेद् यमकानुबन्धोऽपि कर्तुं शक्येत कविस्तदा यमकं रसस्याङ्गन्न किन्तु सर्वथाङ्गि एव जायेत रसादिस्त्वङ्गभूतो न हि ध्वनिकक्षामवगाहेतेति सारम् ।

जो अलङ्कार रस निबन्ध में तत्पर कविकी उस वासना को अतिक्रमण कर अन्य यत्न का आश्रय कर लेने पर वह रसका अङ्ग नहीं होता। यमकालङ्कार में तो बुद्धि पूर्वक करने पर शब्दविशेष के अन्वेषण ( खोज ) रूप प्रायः अन्य यत्नका परिग्रह करना पड़ता है।

अलङ्कारान्तरेष्वपि तत् तुल्यमिति चेत्, मैवम्, अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहम्पूर्विकया परापतन्ति । यथा कादम्बर्य्याम्—कादम्बरीदर्शनावसरे । यथा च मायारामादिशिरोदर्शनविह्वलायां सीतादेव्यां सेतौ । युक्तञ्चैतत्, यतो रसावाच्यविशेषैरेवाक्षेप्तव्यास्तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः, तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ । यमकदुष्करमार्गे तु तत्स्थितमेव । यत्तु रसवन्ति कानिचिद् यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता यमकादीनान्त्वङ्गितैव । रसाभासे चाङ्गत्वमप्यविरुद्धम् । अङ्गिता तु व्यङ्ग्ये रसे नाङ्गत्वम् पृथग्यत्ननिर्वर्त्यत्वाद् यमकादेः ।

अलङ्कारान्तरेषु तत्तुल्यतां प्रदर्श्य खण्डयति—अलङ्कारान्तरेष्विति । ननु यमकातिरिक्तालङ्कारेष्वपि तद् = अर्थविशेषान्वेषणरूपत्वम्, तुल्यम् = समानम् । इति कथ तेषां रसाङ्गत्वम् ? इति एवं चेत् = यदि, शङ्क्यते, मैवम् = नैवं शङ्क्यताम्, हि = यतः, अलङ्कारान्तराणि = यमकाद्यतिरिक्तालङ्काराः, निरूप्यमाणदुर्घटनान्यपि = निरूप्यमाणे विचार्य्यमाणे दुर्घटनान्यपि दुष्करत्वेन प्रतीयमानान्यपि, रससमाहितचेतसः = रसैकतानचित्तस्य, प्रतिभानवतः, प्रतिभाशालिनः, कवेः = कवयितुः, अहंपूर्विकया = अहमहमिकया, परापतन्ति = समागच्छन्ति । नैव तेषां स्थापने यत्नस्यावश्यकतेति नैव यमकतुल्यत्वमिति सारांशः । यथा कादम्बर्य्यां = कादम्बरीनाम्नि बाणकवेः कथाकाव्ये, कादम्बरीदर्शनावसरे = कादम्बरीनिरीक्षणसमये, यथा च = येन प्रकारेण, सेतौ = प्रवरसेनसेतुबन्धमहाकाव्ये,

मायारामादिशिरोदर्शनविह्वलायां = मायया मेघनादेन छिन्नस्य मायाशिरसः दर्शनेन विह्वलायां सीतादेव्याम् ।

युक्तञ्चैतत् = एतद् अर्थालङ्काराणामहम्पूर्विकया परापतनञ्च, युक्तम् = उचितम्, यतः = यस्माद् हेतोः, रसाः = रसाद्यलङ्काराः, वाच्यविशेषैरेव, तत्प्रतिपादकैः = तद्वाचकैः, शब्दैरेव, आक्षेप्याः = आक्षेपणीया व्यञ्जनीया इत्यर्थः । तत्प्रकाशिनः = रसप्रकाशिनः, रूपकादयोऽर्थालङ्काराः, वाच्यविशेषा एव, तस्माद् हेतोः तेषाम् = अलङ्काराणाम्, रसाभिव्यक्तौ रसव्यञ्जने, न, बहिरङ्गत्वम् = बहिरङ्गसाध्यत्वम् किन्तु अन्तरङ्गत्वमेवेत्यर्थः । यमदुष्करयोगे तु दुष्करे यमकालङ्कारे तु, तद् बहिरङ्गत्वम् यत्नान्तरसाध्यत्वमित्यर्थः, स्थितमेव = वर्तते एवेति सारांशः ।

ननु शिशुपालवधस्य षष्ठसर्गे माघकवेः, रघुवंशस्य नवमसर्गे कालिदासस्य बहुशो यमकनिबन्धेऽपि रसध्वनिदर्शनेऽन्तरङ्गत्वबहिरङ्गत्वविचारो निष्फल एवेत्याशङ्कां समाधत्ते "यत्तु" इत्यादिना—यत्तु कानिचित् यमकादीनि = यमकाद्यलङ्काराः, रसवन्ति = रसयुक्तानि, दृश्यन्ते = अवलोक्यन्ते । तत्र = रसयुक्ते यमकाद्यलङ्कारे, रसादीनाम् = रसाद्यलङ्काराणाम्, अङ्गता = अप्रधानत्वम्, यमकादीनान्तु, अङ्गितैव = प्रधानतैवेत्यर्थः । रसाभासे च, अङ्गत्वमपि = अप्रधानत्वमपि, अविरुद्धम् = अनुकूलम् । व्यङ्ग्ये रसे तु अङ्गिता = प्रधानत्वम्, न, अङ्गत्वम् = अप्रधानत्वम्, यमकादेः पृथग्यत्ननिर्वर्त्यत्वात् = अतिरिक्तयत्नसाध्यत्वात् ।

पूर्वपक्षी कहता है कि—यह बात ( शब्दविशेष का अन्वेषण ) तो यमकसे अतिरिक्त और अलङ्कारों में भी तुल्य ही है—यह कहना ठीक नहीं है । क्योंकि दूसरे अलङ्कारों की रचना में कठिनाइयाँ रहने पर भी रसनिबन्ध में दत्तचित्त प्रतिभावान् कवि के सामने एकाएक अलङ्कार उपस्थित होने लगते हैं । जैसे—कादम्बरी कथाकाव्य में कादम्बरी नायिका के दर्शन के अवसर पर । तथा सेतुबन्धकाव्य में मेघनाद कृत बनावटी रामचन्द्र के कटे हुए सिर को देखकर सीतादेवी के विह्वल होने पर ।

और यह बात ( अहंपूर्विकया परापतन ) उचित भी है—क्योंकि रसों की अभिव्यक्ति वाच्यविशेष ही से होती है । उन काव्य के प्रतिपादक

शब्दों से रसों के प्रकाशक रूपकादि अलङ्कार वाच्यविशेष ही है। इसलिए उन अलङ्कारों की रस की अभिव्यक्ति में बहिरङ्गता नहीं है किन्तु अन्तरङ्गता ही है। यमक के कठिन मार्गं में तो वह ( भिन्नप्रयत्नसाध्यत्व ) निश्चित ही है। जहाँ कहीं कोई कोई यमकादि अलङ्कार रससहित दिखाई देते हैं वहाँ रसादि की अप्रधानता है यमकादि को तो प्रधानता ही है। रसाभास में यमकादि को अङ्ग रहना भी विरुद्ध नहीं है क्योंकि जहाँ पर रस प्रधानतया व्यङ्ग्य हो वहाँ तो पृथक् प्रयत्न साध्य होने से यमकादि अङ्ग नहीं हो सकते।

अस्यैवार्थस्य संग्रहश्लोकाः—

'रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।
शक्तस्यापि, रसेऽङ्गत्वं तस्मादेषां न विद्यते॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्य्यते।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥'

अन्वयः—महाकवेः, रसवन्ति, सालङ्काराणि ( च ) कानिचित्, वस्तूनि, एकेन, एव, प्रयत्नेन, निर्वर्त्यन्ते, शक्तस्य, अपि, यमकादिनिबन्धे तु, पृथक्, यत्नः, जायते, तस्मात्, एषां, रसे, अङ्गत्वं, न, विद्यते, यमकादेः, रसाभासाङ्गभावः, तु, न, वार्य्यते, ध्वन्यात्मभूते, शृङ्गारे, तु, अङ्गता, न, उपपद्यते।

महाकवेः = महाकवित्वशालिनः, रसवन्ति = रसयुक्तानि, सालङ्काराणि = अलङ्कारसहितानि, कानिचित् = कानिचित् वस्तूनि ( पदार्थाः ) एकेनैव = न पृथक्, प्रयत्नेन = प्रयासेन, निर्वर्त्यन्ते = सम्पद्यन्ते, शक्तस्यापि कवित्वशक्तिशालिनोऽपि, अस्य = कवेः यमकादिनिबन्धे = यमकाद्यलङ्काररचनायाम्, पृथक् = भिन्नः, यत्नः प्रयासः, जायते = भवति, तस्मात् = हेतोः, एषाम् = यमकादीनाम्, रसे, अङ्गत्वम् = अप्रधानत्वम्, न, विद्यते = अस्ति, यमकादेः = दुष्करयमकादेः, रसाभासाङ्गभावस्तु = रसाभासेऽङ्गभावस्तु अप्रधानत्वन्तु न, वार्य्यते = न निवार्य्यते, ध्वन्यात्मभूते = ध्वनेः सारभूते शृङ्गारे = शृङ्गाररसे, अङ्गता = अप्रधानत्वम्, नोपपद्यते = न भवतीत्यर्थः।

महाकवित्वशक्तिशाली कवि के कोई-कोई वस्तुएँ रसयुक्त होते हुए भी सालङ्कार भी एकही व्यापार से बन जाते हैं। अर्थात् अलङ्कारनिष्पादन में अलग यत्न नहीं करना पड़ता है।

किन्तु यमक आदि की रचना में तो शक्तिशाली कवि को भी अलग यत्न करना पड़ता है इसलिये वे यमकादि रस के अङ्ग नहीं होते।

( हाँ ) रसाभासों में यमकादि को अङ्ग होने में कोई निषेध नहीं है (केवल) ध्वनि के सारभूत शृङ्गार रस में अङ्गता अर्थात् अप्रधानता नहीं होती है।

इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते—

'ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥१७॥

अन्वयः—स्पष्ट एव ॥१७॥

ननु तर्हि केषामलङ्काराणां रसाङ्गत्वमित्याशङ्कां समाधत्ते—इदानीमित्यादिना। इदानीम् = अतः परम्, ध्वन्यात्मभूतस्य = ध्वनिसारभूतस्य, शृङ्गारस्य रसस्य, व्यञ्जकः = प्रकाशकः, अलङ्कारवर्गः = अलङ्कारसमूहः, आख्यायते=वर्ण्यते—

ध्वन्यात्मभूत इति। ध्वन्यात्मभूते = ध्वनेः सारभूते शृङ्गारे = शृङ्गाररसे, समीक्ष्य = बुद्धिपूर्वकरसोपयोगित्वं विचार्य्य, विनिवेशितः = स्थापितः, रूपकादिः, अलङ्कारवर्गः = अलङ्कारसमूहः, यथार्थताम् = रसोपयोगितया वास्तविकीमलङ्कारताम्, एति = यातीत्यर्थः ॥१७॥

अब ध्वनि के सारभूत शृङ्गार के अभिव्यञ्जक अलङ्कार समूह को निरूपण करते हैं:—

ध्वन्यात्मक शृङ्गार रस में रसोपयोगिता को अच्छी तरह सोच समझ कर प्रयुक्त किया गया रूपकादि अलङ्कार वर्ग वास्तविक अलङ्कार होते हैं ॥ १७ ॥

अलङ्कारो हि बाह्यालङ्कारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते। वाच्यालङ्कारवर्गश्च यावानुक्तौ, वक्ष्यते च कैश्चित् अलङ्काराणामनन्तत्वात्, स सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्वस्यैव चारुत्वहेतुर्निष्पद्यते।

अलङ्कारो हि = रूपकादिः, बाह्यालङ्कारसाम्यात् = शरीरशोभाधायकभूषण-

सादृश्यात्, अङ्गिनः = प्रधानरसस्य ( शरीरिणश्च ) चारुत्वहेतुः = सौन्दर्य्य-कारणम्, उच्यते = प्रतिपाद्यते। वाच्यालङ्कारवर्गश्च = अर्थालङ्कारसमूहश्च यावान्, उक्तः = कथितः, कैश्चित् = भामहादिभिः, वक्ष्यते च = कथयिष्यते च, अलङ्काराणाम्, अनन्तत्वात् = असंख्यत्वात् स सर्वोऽपि = निखिलोऽपि, यदि = चेत्, समीक्ष्य = रसोपयोगिसमीक्षां विधाय, विनिवेश्यते = निबध्यते, तदलक्ष्यक्रमव्यङ्गयस्य, = तदाख्यस्य, ध्वनेः, सर्वस्यैव = सकलस्यैव चारुत्वहेतुः = सौन्दर्य्य-कारणम्, निष्पद्यते = सम्पद्यते, इ॰ र्थः, ।

जिस प्रकार कटककुण्डलादि अलङ्कार यथास्थान में पहरने पर शरीर की शोभा बढ़ाते हैं उसी प्रकार विचार कर रूपकादि अलङ्कार भी रसोपयोगिसमीक्षा में निबद्ध होने पर वास्तविक शब्दार्थ की शोभा बढ़ाते हुए अलङ्कार कहलाते हैं। यदि हाथ में नूपुर और चरण में वलय पहर लिये जाँय तो क्या शरीर की शोभा हो सकती है नहीं, उसी प्रकार रूपकादि अलङ्कार भी विना विचारे स्थापित होने पर अलङ्कार नहीं होते।

एषा चास्य विनिवेशने समीक्षा—

विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ १८ ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥ १९ ॥

अन्वयस्तु—स्पष्ट एव ॥ १८–१९ ॥

अस्य = रूपकादेः, विनिवेशने = निबन्धे, एषा च = इयञ्च, समीक्षा = सम्यक्विचारः।

विवक्षेति। तत्परत्वेन = रसाङ्गत्वपरत्वेन, अङ्गित्वेन = प्रधानत्वेन, कथञ्चन = कदापि, न, विवक्षा = वक्तुमीहा कार्य्येति शेषः। काले च = समये च, ग्रहणत्यागौ = ग्रहणं स्वीकारः, त्यागश्च हानञ्च, अतिनिर्वहणैषिता = अत्यन्त-निर्वाहेच्छा, न = नहि, कार्य्येति शेषः। निर्व्यूढावपि = निर्वाहेच्छायामपि, अङ्गत्वे = अप्रधानत्वे, यत्नेन = पूर्णप्रयासेन, प्रत्यवेक्षणम् = सम्यङ्निरीक्षणम्। रूपकादेः, अलङ्कारवर्गस्य = अलङ्कारसमूहस्य ( एतेन ) अङ्गत्वसाधनम् = अङ्गत्व-करणस्योपाय इत्यर्थः ॥ १८–१९ ॥

रूपकादि अलङ्कारों की रचना में इन बातों का विचार करना आवश्यक है:— (१) रूपकादि अलङ्कार की विवक्षा रसपरत्वेन होनी चाहिये (२) प्रधानत्वेन कदापि नहीं (३) समय समय पाकर ग्रहण और (४) उसका त्याग भी होना चाहिये (५) आदि से अन्त तक निर्वाह की इच्छा नहीं करनी चाहिये (६) यदि निर्वाह की इच्छा भी करें तो सावधानी से अङ्ग में ही देख कर रहना चाहिये यही रूपकादिअलङ्कार के अङ्गत्व रखने का साधन (उपाय) है ॥१८-१९॥

**रसबन्धेष्वादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति । यथा—**

**'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ।**
**करौ व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधुरम्**
**वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥'**

अन्वयः—हे मधुकर ! चलापाङ्गां, वेपथुमतीं, दृष्टिं, बहुशः, स्पृशसि, रहस्याख्यायी, इव, कर्णान्तिकगतः मृदु, स्वनसि, करौ, व्याधुन्वन्त्याः रतिसर्वस्वम्, अधरं, पिबसि, वयं, तत्वान्वेषान्, हताः, त्वं, खलु, कृती ।

चलापाङ्गामिति । शकुन्तलायाः पद्यमिदम् । दुष्यन्तो राजा भ्रमरं प्रति वक्ति । हे मधुकर ! = हे भ्रमर ! ( अस्याः शकुन्तलायाः ) चलापाङ्गाम् = चलत्कटाक्षाम्, वेपथुमतीम् = कम्पयुक्ताम्, दृष्टिम् = नयनम्, बहुशः = बहुवारम्, स्पृशसि, रहस्याख्यायी = रहस्यं वक्तुमिच्छुः, कर्णान्तिकगतः = श्रवणसमीपगतः, मृदु = कोमलम् स्वनसि = शब्दं करोषि । तथा, करौ = हस्तौ, व्याधुन्वन्त्याः = विक्षिपन्त्याः, रतिसर्वस्वम् = रतेः सर्वस्वं निधिम् अधरम् = ओष्ठं, पिबसि = अधरपानं करोषीत्यर्थः । वयम्, तत्वान्वेषात् = तत्वस्य गुप्तस्य तत्वस्य, अन्वेषात् विवेचनात्, हताः = नष्टाः, त्वन्तु भ्रमरो भूत्वा, खलु = निश्चयेन, कृती = धन्य इत्यर्थः । शिखरिणी वृत्तम् ।

रसबन्ध में आदरवान् कवि जिस अलङ्कार रसादि के अङ्गतया वर्णन करना चाहता है :—

यह पद्य शकुन्तला का है । ( राजा दुष्यन्त वाटिका में छिपकर देखता हुआ शकुन्तला की ओर दौड़ता हुआ भ्रमर को देखकर कहता है )—हे भ्रमर !

शकुन्तला की चञ्चल कटाक्षवाली दृष्टि को स्पर्श करते हो, एकान्त में रहस्य कहने की इच्छा से कर्ण में लगकर धीरे २ गुनगुनाते हो। उड़ाने के लिये इधर-उधर हाथ फेंकती हुई शकुन्तला का रति का खजाना अधर को पान करते हो इसलिए हम तो तत्व ही के खोज में रहकर चूक गये तूँ तो निश्चय ( कृतकृत्य ) धन्य हो गया।

अत्र हि भ्रमरस्वभावोक्तिरलङ्कारोऽनुगुणः। नाङ्गित्वेन न प्राधान्येन।

इस पद्य में भ्रमर की स्वभावोक्ति अलङ्कार रस के अनुगुण ही है अर्थात् अङ्ग ही है। न कि प्रधानतया है।

कदाचित् रसादितात्पर्येण विवक्षितोऽलङ्कारः। कश्चिदङ्गित्वेन विवक्षितो दृश्यते। यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्॥

अन्वयः—यः, चक्राभिघातप्रसभाज्ञया, एव, राहुवधूजनस्य, आलिङ्गनोद्दामविलासवन्ध्यं, चुम्बनमात्रशेषम्, रतोत्सवं, चकार। यः = विष्णुः, चक्राभिघातप्रसभाज्ञया = चक्रेण सुदर्शनचक्रेण अभिघातः हननं तत्र प्रसभाज्ञयाऽवश्यकरणीयनिदेशेन, राहुवधूजनस्य = राहुस्त्रीजनस्य = आलिङ्गनोद्दामविलासवन्ध्यम् = आलिङ्गनमेव उद्दामं प्रधानं येषु तैर्विलासैः वन्ध्यम् शून्यम्, चुम्बनमात्रमेव शेषं यस्मिन् तत् चुम्बनमात्रशेषं, चकार, राहुशिरश्चिच्छेदेति भावः।

कभी रसादि तात्पर्य रहने पर भी प्रर्यायोक्त अलङ्कार की प्राधान्येन विवक्षा है। जैसेः—जो भगवान् अपना सुदर्शन चक्र के प्रहाररूप बलात्कार आज्ञा से राहु की स्त्रियों के रतिकालीन उत्सव को आलिङ्गन विलास से रहित चुम्बन मात्र शेष कर दिया।

अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा, रसादितात्पर्ये सत्यपि।

अत्र हि = पद्ये, पर्यायोक्तस्य = अलङ्कारस्य रसादितात्पर्य्ये सत्यपि = रसस्य शृङ्गारवीरकरुणान्यतमस्य विष्णुविषयकरतिभावस्य सत्यपि विवक्षणे राहोः स्त्रीजनस्यालिङ्गन-चुम्बनमात्रावशेषकरणेन राहुशिरश्छेदे पर्यवसानात् पर्यायोक्तालङ्कारस्य, अङ्गित्वेन = प्रधानत्वेन विवक्षा = विवक्षणम्।

यहाँ रसादितात्पर्य रहने पर भी पर्यायोक्त अलङ्कार प्रधानतया विवक्षित है।

अङ्गत्वेन विवक्षितमपि यमवसरे गृह्णाति नानवसरे। अवसरे गृहीतिर्यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥

इत्यत्र उपमा श्लेषस्य।

अङ्गत्वेन = अप्रधानत्वेन, विवक्षितमपि = वक्तुमिष्टमपि, यम् = अलङ्कारम्, अवसरे = रसनिबन्धसमये गृह्णाति = स्वीकरोति, अनवसरे = रसनिबन्धानवसरे, न। तत्र अवसरे ग्रहणस्योदाहरणं प्रदर्शयति। यथा—

उद्दामोत्कलिकामिति। रत्नावलीनाटिकायाः पद्यमिदम्। नवमालिकां लतां दोहदविशेषेण कुसुमितां वीक्ष्य वासवदत्तेर्ष्याभिया नर्मसचिवं विदूषकं प्रति राज्ञ उक्तिरियम्।

उद्दामोत्कलिकाम् = ( लतापक्षे ) प्रादुर्भूतोत्कटकुड्मलाम् ( नारीपक्षे ) प्रबलोत्कण्ठाम्, विपाण्डुररुचम् = ( लतापक्षे ) कलिकाबाहुल्येन श्वेतवर्णोपलक्षिताम्, ( नारीपक्षे तु ) अतिपाण्डुवर्णाम्, प्रारब्धजृम्भाम् = ( लतापक्षे ) क्षणात् तस्मिन्नेवं प्रारब्धः जृम्भो मम मे विकासो यस्याः सा ताम् अतिविकसितमित्यर्थः। ( नारीपक्षे तु ) मदनावेशवशात् प्रारब्धमुखविकासाम्, अविरलैः = निरन्तरैः, श्वसनोद्गमैः = ( लतापक्षे ) वासन्तिकवायूनामुल्लासैः, ( नारीपक्षे तु ) श्वासविकासैः आत्मनः = स्वस्य, आयासम् = ( लतापक्षे ) आन्दोलनम्, ( नारीपक्षे ) खेदम्, आतन्वतीम् = कुर्वन्तीम्, पक्षे प्रकटयन्तीम्, समदनाम् = ( लतापक्षे ) मदनतामपुष्पयुताम्, ( नारीपक्षे ) मन्मथयुक्ताम्, इमाम् = पुरोवर्तिनीम् उद्यानलताम् = वाटिकागतलताम्, अन्याम् = अपराम्, नारीमिव नायिकामिव, ध्रुवम् = निश्चयेन, पश्यन् = अवलोकयन्, देव्याः—प्रियायाः, मुखम् = आस्यम्, कोपविपाटलद्युति = क्रोधरक्तकान्ति अद्याहं, करिष्यामि = विधास्यामि।

अत्रोपमाश्लेषस्य ग्रहणम्।

अङ्गरूप से विवक्षित होने पर भी अवसर में ग्रहण का उदाहरण यह है—

जैसेः—प्रबल उत्कण्ठा से युक्त ( प्रचुर मात्रा में कलियों से युक्त ) पाण्डु वर्ण वाली ( विशेषकर कलियों से श्वेतवर्ण ) मदनावेश के कारण जम्भाई लेती हुई ( क्षण ही में विकसित होती हुई ) अत्यन्त लम्बी सांस लेने से ( विशेष कर वायु के चलने से ) हृदय के सन्ताप को बढ़ाती हुई ( कम्पित होती हुई ) कामविकारयुक्त ( मदनवृक्ष सहित ) अन्य नारी के समान इस वाटिकागत लता को मैं आज देखता हुआ निश्चय ही देवी के मुख को क्रोध से लाल करूँगा।

यहाँ उपमा श्लेष का ग्रहण है।

गृहीतमपि यमवसरे त्यजति तद्रसानुगुणतयालङ्कारान्तरापेक्षया। यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे यामपि।
कान्तापादतलाहतिस्तव मुदे, तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक! केवलमहं धात्रा सशोकः कृतः॥

अन्वयः—त्वम्, नवपल्लवैः, रक्तः, अहम्, अपि, श्लाघ्यैः, प्रियायाः, गुणैः ( रक्तः ) त्वाम्, शिलीमुखाः, आयान्ति, याम्, अपि, स्मरधनुर्मुक्ताः, ( शिलीमुखाः ) ( आयान्ति ) कान्तापादतलाहतिः, तव, मुदे, तद्वत्, ममापि, हे अशोक! सर्वम्, आवयोः तुल्यम्, केवलम्, अहम्, धात्रा, सशोकः, कृतः।

(हे) अशोक!, त्वम्, नवपल्लवैः, नूतनपत्रैः, रक्तः=लोहितः अहमपि, श्लाघ्यैः =प्रशंसनीयैः, गुणैः, रक्तः=अनुरक्तः, हे सखे=मित्र! त्वाम्, शिलीमुखाः=भ्रमराः, आयान्ति=पतन्ति, मामपि स्मरधनुर्मुक्ताः=कामशरोन्मुक्ताः, शिलीमुखाः=बाणाः उपरि पतन्ति, कान्तापादतलाहतिः=स्त्रीजनचरणतलाघातः, तव मुदे=आनन्दाय, तद्वत्, ममापि, नारीजनचरणाघातो मुदे, आवयोः सर्वं=सकलम्, तुल्यम्= समानम्, केवलम्, धात्रा=ब्रह्मणा अहं, सशोकः=शोकयुक्तः, कृतः=निर्मितः।

ग्रहण करने पर भी रस के अनुकूल अलङ्कारान्तर की अपेक्षा से कवि अवसर पर छोड़ देता है। जैसेः—

राजा अशोक ! वृक्ष से कहता है — हे अशोक नवीन पल्लवों से युक्त हो मैं भी प्रिया के प्रशंसनीय गुणों से अनुरक्त हूँ। तुम्हारे पास भौंरे आते हैं तो मित्र ! कामदेव के धनुष से छुटे हुए बाण मेरे ऊपर भी आते हैं। स्त्रियों का पादप्रहार तेरे लिये आनन्द देने वाला है। उसी प्रकार स्त्रियों का पादप्रहार मेरे भी आनन्द दायक है। हे अशोक ! हम दोनों का सब कुछ बराबर है किन्तु भेद इतना ही है कि तुम शोकरहित हो। मुझे विधाता ने शोकयुक्त कर दिया है।

**अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति।**

अत्र हि = श्लोके, प्रबन्धप्रवृत्तः = प्रथमपादत्रयनिर्व्यूढः, अपि, श्लेषः, व्यतिरेकविवक्षया = चतुर्थचरणस्थव्यतिरेकविवक्षया, त्यज्यमानः = रसानुगुणतयोपेक्ष्यमाणः, रसविशेषम् = विप्रलम्भशृङ्गारम्, पुष्णाति = परिपोषं करोति। शब्दपरिवर्तनासहत्वेन रक्तशिलीमुखशब्दयोश्शब्दश्लेषः। कान्तापादतलाहतिस्तवेत्यत्र किलशब्दपरिवृत्तिसहत्वेनार्थश्लेषः। रक्तत्वादिभिः साधर्म्यस्य सत्वेऽपि सशोकत्वेनात्मनात्मन उपमेयस्य न्यूनत्वप्रतिपादनाद् व्यतिरेकालङ्कारः।

इस श्लोक में आदि से अन्त तक प्रबन्ध में श्लेष विद्यमान रहने पर भी अन्त में व्यतिरेकालङ्कार की विवक्षा से छोड़ देने पर भी रसविशेष को पुष्ट करता है।

**नात्रालङ्कारद्वयसन्निपातः, कं तर्हि ? अलङ्कारान्तरमेव श्लेषव्यतिरेकलक्षणं नरसिंहवदिति चेत्। न, तस्य प्रकारान्तरेण व्यवस्थापनात्। यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते, स तस्या विषयः। यथा—**

अब संसृष्टिवादी और सङ्करवादी का सिद्धान्त दिखलाते हैं:—

सङ्करवादी पूर्वपक्षी का यह कहना है कि—इस श्लोक में दो अलङ्कारों का अर्थात् श्लेष और व्यतिरेक का सन्निपात ( समूह ) नहीं है किन्तु नरसिंह की तरह श्लेष और व्यतिरेक का एकाश्रयानुप्रवेशरूप शङ्कर है।

संसृष्टिवादी सिद्धान्त पक्षी का यह कहना है कि—यह कहना ठीक नहीं है। क्योंकि एकाश्रयानुप्रवेश रूप सङ्कर की स्थिति प्रकारान्तर से होती है। जहां

श्लेषालङ्कार के विषयभूत शब्द में ही प्रकारान्तर से व्यतिरेकालङ्कार की प्रतीति होती है वही सङ्कर का विषय है। जैसेः—

'स हरिर्नाम्ना, देवः स हरिर्वरतुरगनिवहेन' इत्यादौ। अत्र ह्यन्य एव शब्दः श्लेषस्य विषयः। अन्यश्च व्यतिरेकस्य यदि चैवंविधे विषयेऽलङ्कारान्तरत्वकल्पना क्रियते तत्संसृष्टेर्विषयापहार एव स्यात्।

वह देव तो नाममात्र से सहरि हैं यह राजा तो श्रेष्ठ घोड़े के समूह से सहरि हैं।

यहां अन्य ही शब्द ( रक्त आदि ) श्लेष का विषय है अन्य ही ( अशोक सशोक ) व्यतिरेक का।

श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेत्।

शङ्करवादी पुनः शङ्कते—श्लेषमुखेनेत्यादि। अयम्भावः—अलङ्कारस्य सम्भावनायां तिलतण्डुलवत् मिश्रणे संसृष्टेर्विषयः। यदाऽलङ्काराणां नीरक्षीरन्यायेन विमिश्रणं तदा सङ्करस्य विषयः, अत्र=प्रागुक्तश्लोके, श्लेषमुखेनैव=श्लेषोत्थापितोपमयैव, व्यतिरेकस्य=व्यतिरेकालङ्कारस्य, आत्मलाभः=स्वत्वलाभः, इति=हेतोः, न=नहि अयं संसृष्टेर्विषयः किन्तु सङ्करस्यैव विषयः। श्लेषोपमाव्यतिरेकयोरनुग्राह्यानुग्राहकभावस्य सुस्पष्टं लक्षितत्वात्। संसृष्टेस्तु सापेक्षानपेक्षतयैव प्राप्तेः।

सङ्करवादी फिर शङ्का करता है कि—अच्छा यहाँ एकानुप्रवेशरूप सङ्कर तो नहीं है किन्तु सङ्कर का दूसरा भेद अङ्गाङ्गिभावसङ्कर तो हो सकता है। क्योंकि व्यतिरेक तो उपमागर्भ होता है। किन्हीं दो की तुलना करके ही उनमें एक का आधिक्य कहा जा सकता है यहाँ अशोक और नायक की तुलना "रक्तस्त्वम्" इत्यादि श्लिष्ट विशेषणों के कारण ही प्रतीत होता है। अतः श्लेष व्यतिरेक का अनुग्राहक है। इसलिये यहाँ अङ्गाङ्गिभाव संकर ही है, संसृष्टि का यह विषय नहीं है।

न व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात्।

संसृष्टिवादी सिद्धान्तपक्षीयः समाधत्ते—नेत्यादिना।

संसृष्टिवादी कहता है कि—यह कहना ठीक नहीं, क्योंकि व्यतिरेक श्लेषोपमा

ही के द्वारा नहीं रहता है किन्तु उपमा कथन के विना भी प्रकारान्तर से देखा जाता है, जैसे—आगे के श्लोक में ।

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या,
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो,
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥

अन्वयः—अदयरयदलत्क्ष्माधरस्य, कल्पापायवायोः, अपि, नो, शम्या, अहनि, गाढोद्गीर्णोज्ज्वलश्रीः, तमः कज्जलेन न नो रहिता, पतङ्गात्, प्राप्तोत्पत्तिः, मोषम्, पुनः, न, उपगता, निखिलद्वीपदीपस्य, सा, एव, अन्यरूपा, वर्तिः उष्णत्विषः, दीप्तिः, वः, सुखयतु ।

श्लेषोपमाव्यतिरिक्तस्य व्यतिरेकस्य विषयं दर्शयति—नो कल्पेति । अदयरयदलत्क्ष्माधरस्य = अदयेन कठिनेन रयेण वेगेन दलन्तः—विशीर्णतां गताः क्ष्माधराः पर्वता यस्मात्तस्य, कल्पापायवायोः = प्रलयकालीनवायोः, अपि, नो = नैव, शम्या = शमयितुं योग्या, (तथा या) अहनि = दिवा, गाढोद्गीर्णोज्ज्वलश्रीः = गाढमत्यन्तम् उद्गीर्णा = प्रकाशिता उज्ज्वला श्रीः शोभा यया सा, ( तथा या ) तमःकज्जलेन = तमः अन्धकार एव कज्जलन्तेन, न नो रहिता किन्तु रहितैव, अथवा अहनि न रहिता नराणां हिता कज्जलेन नो युक्ता, पतङ्गात् = सूर्यात् प्राप्ता उत्पत्तिर्यया सा, ( तथा ) मोषम् = निर्वाणम्, पुनः, नोपगता, सा, निखिलद्वीपदीपस्य = निखिलानां द्वीपानां दीपस्य दीपस्वरूपस्य, अन्यरूपा = विलक्षणा, वर्तिः = दशैव, उष्णत्विषः = सूर्य्यस्य, दीप्तिः कान्तिः, वः = युष्मान् सुखयतु = सुखं प्रापयतु त्वित्यर्थः ।

जो निष्ठुर वेग से पर्वतों को भी विदलित करने वाली कल्पान्त वायु से भी बुझ नहीं सकती, जो दिन में भी अत्यन्त उज्वल प्रकाश देती है, जो अन्धकार-रूपकजल से अत्यन्त रहित है अथवा मनुष्यों के हित करने वाली है, जो पतङ्ग (कीट) से भी नहीं बुझती है बल्कि पतङ्ग ( सूर्य्य ) से उत्पन्न होती है, वह संपूर्ण विश्व के प्रकाशक सूर्य्यदेव की दीप्तिरूप लोकोत्तर बत्ती हम सब को सुखी करे ।

अत्र हि साम्यप्रपञ्चं विनैव व्यतिरेको दर्शितः ।

यहाँ व्यतिरेक इस प्रकार है—साधारण दीप की शिखा थोड़ी हवा से भी बुझ जाती है, और दिन में कान्तिरहित रहती है, और काजल देनेवाली होती है, और कीड़े से बुझ जाती है और कीड़े को नाश कर डालती है, अनेक बार बुझती रहती है किन्तु सूर्य्य की दीप्तिरूप वत्ती विलक्षण है। इस प्रकार व्यतिरेक साम्य प्रपञ्च ( अर्थात् ) उपमाके विनाही दिखाया गया है। अतः श्लेष और व्यतिरेक दोनों अलग अलग अलङ्कारों की संसृष्टि ही माननी चाहिये।

नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वम्, न स्वतोऽलङ्कारत्वेनेत्यपि न वाच्यम्, यत एवम्विधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव । यथा—

सङ्करवादिनो मतं प्रदर्श्य संसृष्टिवादी सिद्धान्ती खण्डयति—नात्रेत्यादिना। अत्र = रक्तस्त्वमिति पद्ये, श्लेषमात्रात् = केवलश्लेषोपमयैव, चारुत्वनिष्पत्तिः = सौन्दर्य्यप्रतीतिः, अस्तीति, श्लेषस्य = श्लेषालङ्कारस्य, व्यतिरेकाङ्गत्वेनैव = व्यतिरेकानुग्राहित्वेनैव, विवक्षितत्वम् = वक्तुमिष्टत्वम्, न = नैव, स्वतः = साक्षात् अलङ्कारत्वेन, इत्यपि = एवमपि, न = नैव, वाच्यम्, यतः = यस्माद्धेतोः एवंविधे विषये, साम्यमात्रादपि = केवलौपम्यादपि, सुप्रतिपादितात् = सम्यगुक्तात् चारुत्वम् = सौन्दर्य्यम्, दृश्यत एव = अवलोक्यत एवेत्यर्थः ।

सङ्करवादी पूर्वपक्षी फिर शङ्का करता है कि यद्यपि "नो कल्पापायवायो" इस श्लोक में व्यतिरेकानुग्राहिणी उपमा नहीं है किन्तु "रक्तस्त्वम्" इस श्लोक में तो व्यतिरेक के लिये श्लेषोपमा गृहीत है क्योंकि उसके बिना केवल श्लेष से चारुत्व प्रतीति नहीं होती अतः अकेले श्लेष को स्वतन्त्र अलङ्कार नहीं मान सकते। अतः यहाँ सङ्कर ही है संसृष्टि नहीं। इसके बाद संसृष्टिवादी सिद्धान्ती कहता है कि—यह भी कहना ठीक नहीं क्योंकि ऐसे ऐसे विषयों में ( व्यतिरेक के विषय में ) श्लेष रहित साम्यमात्र ( उपमा गर्भ व्यतिरेक ) के स्पष्ट प्रतिपादन से भी चारुत्व दिखाई देता है, जैसे—

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि—
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।

अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो—
स्तत् किं मामनिशं सखे जलधर ! त्वं दग्धुमेवोद्यतः ॥

इत्यादौ ।

अन्वयः—( हे ) सखे !, ( यतो मे ) आक्रन्दाः, ( ते ), स्तनितैः, (तुल्याः) ( मे ) विलोचनजलानि, ( ते ) अश्रान्तधाराम्बुभिः ( तुल्याः ) ( मे ) तद्विच्छेदभुवः, शोकशिखिनः, ( ते ) तडिद्विभ्रमैः ( तुल्याः ) मे, अन्तः, दयितामुखम्, तव, शशी, आवयोः, वृत्तिः, समा, एव, तत्, किम्, अनिशम्, माम्, दग्धुम्, एव, त्वम्, उद्यतः ।

कश्चिद्विरही पयोधरं प्रति वक्ति । आक्रन्दा इति । हे सखे = मित्र !, जलधर ! = मेघ !, यत इति पदमध्याहार्य्यम्, मे ते, इति पदेऽप्यध्याहार्य्ये, ( यतो मे मम ) आक्रन्दाः = रोदनानि, ( ते तव ) स्तनितैः = गर्जितैः, तुल्याः, ( तथा ) (मे) विलोचनजलानि = नेत्राश्रूणि, ( ते ) अश्रान्तधाराश्रुभिः = अविरतधाराजलैः ( तुल्यानि ) ( तथा मे ) तद्विच्छेदभुवः = तस्याः प्रियायाः यो विच्छेदः विरहः तस्माद् भूरुत्पत्तिर्येषान्ते, प्रियाविरहोत्पन्ना इत्यर्थः, शोकशिखिनः=शोकानलाः, ( ते ) तडिद्विभ्रमैः = विद्युद्विलासैः, तुल्याः, (तथा मे) अन्तः = अन्तःकरणे हृदये, दयितामुखम् = प्रियामुखम्, (ते) शशी=चन्द्रः विद्यते इति शेषः । एवम्, आवयोः = तव मम च, वृत्तिः = व्यवहारः, समा = तुल्या, एव, तत् = तस्मात्, अनिशं = वारम्वारम्, माम् = विरहिणम्, दग्धुम् = भस्मीकर्तुम् एव, उद्यतः = तत्परः असीत्यर्थः ।

मेरे क्रन्दन तुम्हारे गर्जन के समान है । मेरा अश्रुप्रवाह तुम्हारी निरन्तर बहनेवाली जलधारा के समान है, उस प्रिया के वियोग से उत्पन्न शोकाग्नि तुम्हारी विद्युल्लता के समान है, मेरे हृदय में अपनी प्रियतमा का मुख है, और तुम्हारे हृदय में चन्द्रमा है इसलिये तुम्हारी हमारी वृत्ति बराबर ही है, हे मित्र ! मेघ ! फिर तुम रातदिन मुझे जलाने ही को क्यों तैयार रहते हो ?

इत्यादि में ।

सारांश है कि यहाँ श्लोक के चतुर्थचरण में बन्धुजन पीडाकारित्व से जलधर का अपनी अपेक्षा व्यतिरेक दिखाया है और पूर्व के तीनों चरणों में

अपना और मेघ की तुलना की है किन्तु श्लेष नहीं है। "नो कल्पापायवायो" इस श्लोक में विना उपमा के व्यतिरेक है इसलिये "रक्तस्त्वम्" इस श्लोक में श्लेष और व्यतिरेक दोनों अलग-अलग रहने के कारण संसृष्टि ही है सङ्कर नहीं। यह सिद्धान्ती संसृष्टिवादी का कहना है।

रसनिर्वहणैकतानहृदयो यो यो यश्च नात्यन्तं निर्वोढुमिच्छति। यथा—

"नातिनिर्वहणैषिता" इति पञ्चमसमीक्षाया उदाहरणं प्रदर्शयितुं प्रक्रमते—रसेति। रसनिर्वहणैकतानहृदयः = रसनिर्वहणे रसनिबन्धनिर्वाहे एकतानं हृदयं यस्य सः, एतादृशः यः कविः, यम् = अलङ्कारम्। न अत्यन्तं निर्वोढुमिच्छति।

रसनिबन्ध में अत्यन्त तत्पर कवि जिस अलङ्कार का अत्यन्त निर्वाह नहीं करना चाहता है। उसका उदाहरण। जैसे—

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं,
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं,
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन्॥

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढञ्च रसपुष्टये।

अन्वयः—कोमलबाहुलतिकापाशेन, कोपात् दृढं, बद्ध्वा, वासनिकेतनं, नीत्वा, सखीनाम्, पुरः, भूयः, न, एवं, ( करिष्यसि ) इति, स्खलत्कलगिरा, रुदत्या दयितया, दुश्चेष्टितं, संसूच्य, धन्यः, निह्नुतिपरः, हसन् प्रेयन्, हन्यते, एव।

कोपादिति। सायम् = सन्ध्यासमये, कोमलबाहुलतिकापाशेन = कोमला मृद्वी या बाहुलतिका बाहुद्वयं तस्याः पाशेनकोपात् = क्रोधात्, दृढम् = दृढपूर्वकं, बद्ध्वा = बन्धने आनीय ( तथा ) वासनिकेतनम् = केलिगृहम्, नीत्वा = प्राप्य, सखीनाम् = सहचरीणाम्, पुरः = अग्रे, भूयः = बारम्बारम्, नैवम् = अग्रे, एवं न करिष्यसीति, स्खलत्कलगिरा = स्खलन्ती कोपेन त्रुट्यन्ती कला मधुरा गीः वाणी यस्यास्तया, रुदत्या = क्रन्दन्त्या, दयितया = कयाचित् प्रियतमया, दुश्चेष्टितं = नायकस्य दुर्व्यवहारम्, दन्तनखक्षतादिकम्, संसूच्य = सम्यक् सूचयित्वा, धन्यः = सौभाग्यवान्, हसन् = जल्पन्, निह्नुतिपरः = हास्येन स्वापरा-

बाल्लापनतत्परः, प्रेयान् = प्रियतमः, हन्यते एव = बारम्बारं पादेन ताड्यत एवेत्यर्थः ।

अत्र हि = श्लोके बाहुलतिकापाशेत्यनेन रूपकमाक्षिप्तम् प्रारब्धमपि अनिर्व्यूढञ्च = समाप्तिं यावत् नैव निर्व्यूढम् किन्तु परित्यक्तमित्यर्थः ।

सन्ध्यासमय ही, क्रोधसे अपनी कोमल और चञ्चल बाहुलतारूपी पाश से जकड़कर और अपना क्रीडाघर में ले जाकर सखियों के सामने 'अब तो ऐसा नहीं करोगे ?' इस प्रकार उसका नखक्षत आदि दुर्व्यवहार सूचित कर लड़खड़ाती हुई वाणी से रोती हुई प्रिया से हँसता हुआ, अपना अपराध छिपाता हुआ सौभाग्यशाली प्रिय पीटा ही जाता है ।

यहाँ रूपक प्रारम्भ होकर रसपुष्टि के लिये अन्त में छोड़ दिया गया ।

निर्व्योढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते । यथा—

अलङ्कारविनिवेशनस्य षष्ठसमीक्षाया उदाहरणं दर्शयितुं प्रक्रमते निर्व्योढुमिति । निर्व्योढुमिष्टमपि = अलङ्कारनिर्वहणस्येष्टत्वेऽपि, यम् = अलङ्कारम्, यत्नाद् = यत्नपूर्वकम्, अङ्गत्वेन = रसाङ्गत्वेन, प्रत्यवेक्षते = अलङ्कारं कथमपि अङ्गी न भवेदिति सम्यक् पर्यालोचयतीति भावः ।

अन्त तक निर्वाह करना इष्ट रहने पर भी जिसको सावधानी से अङ्गरूप में ही देखता रहता है । जैसे—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं,
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्,
हन्तैकस्थं क्वचिदपि न ते भीरु ! सादृश्यमस्ति ॥

इत्यादौ ।

अन्वयः—(हे) भीरु ! श्यामासु, (ते) अङ्गम्, चकितहरिणीप्रेक्षणे, (ते) दृष्टिपातम्, (ते) वक्त्रच्छायाम्, शशिनि, शिखिनाम्, बर्हभारेषु (ते) केशान् प्रतनुषु, नदीवीचिषु (ते) भ्रूविलासान्, उत्पश्यामि, हन्त, एकस्थम्, ते, सादृश्यं, क्वचिदपि, न, अस्ति ।

विरहिणो यक्षस्य स्वकीयां भार्य्यां विलापे सन्दिशति—श्यामास्विति। हे भीरु ! = भीते !, श्यामासु = प्रियङ्गुलतासु, ते = तव, अङ्गम् = शरीरम्, चकित-हरिणीप्रेक्षणे = चकितायाः चाकचक्यं प्राप्तायाः हरिण्याः प्रेक्षणेऽवलोकने, ते = तव, दृष्टिपातम् = नेत्रव्यापारम्, शशिनि = चन्द्रे, ते = तव, वक्त्रच्छायाम् = मुख-शोभाम्, शिखिनाम् = मयूराणां, बर्हभारेषु = पिच्छकलापेषु, ते, केशान् = कचान्, (तथा) प्रतनुषु = क्षीणासु नदीवीचिषु = मन्दाकिनीतरङ्गेषु, ते, भ्रूविलासान् = भ्रूकटाक्षान्, (यद्यपि) उत्पश्यामि = उत्प्रेक्षे, (तथापि) हन्त ! = विषादः, एकस्थम् = एकस्मिन् वस्तुनि स्थितम्, ते, सादृश्यम् = साम्यम्, क्वचिदपि = कुत्रापि नास्तीत्यर्थः।

हे भीरु! मैं तुम्हारे अङ्गों को प्रियङ्गुलताओं में, तेरा दृष्टिपात चकित-हरिणियों की चञ्चल चितवन में, तेरे कपोल की शोभा चन्द्रमा में, तेरा केशपाश मोरों के पिच्छ में, तेरा भ्रूकटाक्ष नदी की तरङ्गों में देखता हूँ (इधर उधर मारा फिरता हूँ) किन्तु खेद का विषय है कि तेरा सादृश्य कहीं एक जगह नहीं दिखाई देता कि एक ही जगह देखकर सन्तोष कर लेता।

इत्यादि में।

स एवमुपनिबध्यमानोऽलङ्कारो रसाभिव्यक्तिर्भवति। उक्तप्रकारा-तिक्रमे तु नियमेनैव रसभङ्गहेतुः सम्पद्यते। लक्ष्यं च तथाविधं महा-कविप्रबन्धेष्वपि दृश्यते बहुशः। तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम्।

इस प्रकार रूपकादि अलङ्कार षष्ठ समीक्षा का प्रकार ध्यान में रखकर उपनि-बद्ध होने पर कवि के रस के व्यक्त करने का कारण होता है। उक्त नियम के उल्लङ्घन करने पर अवश्य ही रसभङ्ग का कारण हो जाता है। तथाविध (समीक्षा नियमभङ्ग का लक्ष्य) उदाहरण महाकवियों के प्रबन्धों में पाये जाते हैं। वह हजारों सूक्तियों की रचनाओं से लब्धप्रतिष्ठ महात्माओं के दोषों का प्रकाश करना अपने ही दोष होता है अतः विभाग कर नहीं दिखाया है।

किन्तु रूपकादेरलङ्कारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये लक्षण-दिग्दर्शिता, तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रम-

पतितमनन्तरोक्तमेनं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेतास्तदा तस्यात्मलाभो भवति महीयानिति।

परन्तु निष्कृष्ट सारांश यह है कि रूपकादि अलङ्कार समूहों का रसादि विषयक व्यञ्जकत्व में जो यह मार्ग बतलाया गया है। उसका अनुसरन् करता हुआ और स्वयं भी अन्य लक्षणों का अनुसन्धान करता हुआ यदि कोई सुकवि पूर्वोक्त असंलक्ष्यक्रप व्यङ्ग्य के अन्दर बतलाया हुआ ध्वनि के आत्मभूत रसादि को सावधान होकर निबद्ध करता है तो उसे बड़ा महाकवि पद का लाभ होता है।

क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः॥२०॥

अन्वयः—अस्य, अनुस्वानसन्निभः, यः, आत्मा, क्रमेण, प्रतिभाति, सोऽपि, शब्दार्थशक्तिमूलत्वात्, द्वेधा, व्यवस्थितः॥२०॥

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलश्चेति द्विप्रकारः।

विवक्षितान्यपरवाच्य ध्वनि के अनुस्वानसदृश ( घंटा बज बजकर बन्द हो जाने के बाद जो ध्वनि क्रमशः देर तक सुनाई देती रहती है इसी को अनुस्वान अथवा अनुरणन कहते हैं। तत्सदृश ही यह ध्वनि है ) उसके शब्दशक्ति मूलक और अर्थशक्ति मूलक होने से दो प्रकार के होते हैं।

ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्। नापहृत इत्याह—

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥२१॥

अन्वयः—हि, यस्मिन्, शब्देन, अनुक्तः, आक्षिप्तः, अलङ्कारः, एव, शब्दशक्त्या, प्रकाशते, सः, शब्दशक्त्युद्भवः ( ध्वनिः )॥२१॥

शब्दशक्त्युद्भवध्वनेः श्लेषविषयं केषाञ्चिदभिप्रेतं प्रदर्श्य खण्डयति—नन्वित्यादिना। नन्विति प्रश्ने, शब्दशक्त्या = अभिधाशक्त्या, यत्र = काव्ये, अर्थान्तरं = द्वितीयार्थं, प्रकाशते = प्रत्याययति, स यदि = चेत्, ध्वनेः = शब्दशक्तिमूलध्वनेः, प्रकारः = भेदः, उच्यते = कथ्यते, तत् = तदा, इदानीं = अद्यारभ्य, श्लेषस्य

=श्लेषालङ्कारस्य विषय एव, अपह्नुतः=विलुप्तः, स्यात्। इत्याशङ्कायामाह, नापह्नुतः=विलुप्तो न स्यात्, इत्याह इति कारिकामुखेन प्रदर्शयति—आक्षिप्त इत्यादिना। हि=यतः, यस्मिन् काव्ये, शब्देन=साक्षात् शब्दद्वारा, अनुक्तः=अनभिहितः, अत एवाक्षिप्तः=व्यक्तः, अलङ्कार एव=न तु किमपि वस्तु, शब्दशक्त्या=अभिधामूलिकया व्यञ्जनया, प्रकाशते=प्रत्याययति, स शब्दशक्त्युद्भवः ध्वनिरुच्यत इति कारिकार्थः।

यस्मादलङ्कारो न वस्तुमात्रम्, यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं व्यवस्थितः।

कारिकार्थमेव विशदयति—यस्मादित्यादिना। व्याख्या तु स्पष्टैव।

किसी की शङ्का यह है कि—शब्द शक्ति से जहाँ अर्थान्तर प्रकाशित होता है वह यदि पूर्वोक्त ध्वनि का भेद हो तो फिर श्लेष का विषय ही लुप्त हो जायगा। ऐसी शङ्का में उत्तर यह है कि नहीं लुप्त होगा इसी बात को आगे की कारिका से व्यक्त करते हैं—

जिस कारण शब्द से साक्षात् असङ्केतित होने पर भी आक्षिप्त अलङ्कार ही (वस्तु नहीं) शब्दशक्ति से प्रकाशित होता है वही शब्दशक्त्युद्भवध्वनि कहलाता है। यही हम लोगों का विवक्षित है।

वस्तुद्वये च प्रकाश्यमाने श्लेषः। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो,
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः,
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः॥

अन्वयः—कृष्णपक्षे—येन, अनः, ध्वस्तम्, बलिजित्कायः, पुरा, अभवेन, स्त्रीकृतः, यश्च, उद्वृत्तभुजङ्गहारवलयः, यः, अगम्, गङ्गाञ्च, अधारयत्, यस्य, शशिमच्छिरोहरः, इति, स्तुत्यं, नाम, अमराः, आहुः, सः, स्वयम्, अन्धकक्षयकरः, सर्वदः, माधवः, त्वाम्, पायात्।

शिवपक्षीयान्वयस्तु—ध्वस्तमनोभवेन, येन, बलिजित्कायः, पुरा, अस्त्रीकृतः, यश्च, उद्वृत्तभुजङ्गहारवलयः, यश्च, गङ्गाम्, अधारयत्, यस्य, शिरः,

शशिमत्, अमराः ( यस्य ) हरः, इति, स्तुत्यं, नाम, आहुः, सः, स्वयम्, अन्धकक्षयकरः, उमाधवः, सर्वदा, त्वाम्, पायात्।

इदानीं शब्दशक्त्युद्भवध्वनेर्व्यतिरिक्तमेव श्लेषस्य विषयं प्रदर्शयति—वस्तुद्वये चेत्यादिना। द्वयोरयमेव विशेषः—

संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यसन्निधिः॥
सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

इति वाक्यपदीयोक्तैरभिधानियामकैः संयोगादिभिर्बह्वर्थप्रतिपादकस्याशब्दस्य एकस्मिन्नर्थे नियमितायामभिधायामपरस्यार्थस्याभिधयैव प्रत्यायनं सर्वथा दुर्घटमतोऽभिधामूलिकया व्यञ्जनया यत्र द्वितीयोऽर्थो ध्वन्यते स शब्दशक्त्युद्भवो ध्वनिः। यत्र किल संयोगादिभिरनियमिताभ्यामभिधाभ्यामेवार्थद्वयं बोध्यते स श्लेषस्तत्र श्लेषस्योदाहरणं प्रदर्शयति—यथा—

येन ध्वस्तमिति। पद्यमिदं सुभाषितरत्नावल्यां चन्द्रककवेः प्रशस्तदेवयोः विष्णु-शिवयोर्वर्णनपरम्। तत्र प्रथमं विष्णुपक्षे व्याख्यायते। येन = धृतकृष्णावतारेण, अनः = शकटम्, ध्वस्तम्, नाशितम् ( अर्थात् शकटासुरो हतः ) तथा—अभवेन = जन्मरहितेन, पुरा = समुद्रमथनान्निस्सृतेऽमृतरत्नेऽहमहमिकया प्राप्तुमिच्छतोर्देवासुरयोरमृतपरिवेषणसमये, बलिजित्कायः = बलिं जयतीति बलिजित्, कायः स्वशरीरम्, स्त्रीकृतः = मोहिनीरूपतां प्रापितः ( स्त्रीवेषधारिणा विष्णुना स्त्रीवेषेण मोहितान् राक्षसान् वञ्चयित्वा देवा एवामृतं पायिताः तेनामरत्वं देवाः प्राप्ता इति पौराणिकी वार्ता ) तथा यः = विष्णुः उद्वृत्तभुजङ्गहा = उद्वृत्तः उच्छृङ्खलः यः भुजङ्गः अघासुरस्तस्य हन्ता, रवलयः = रवे शब्दे लयो यस्य सः, यद्वा आरबलयः = अरेरिदमारं शात्रवं बलं सैन्यं प्रति यातीति तथोक्तः, तथा यः कृष्णः, अगम् = गोवर्धनं पर्वतम्, गां = पृथ्वीं च, अधारयत्, मस्तके धारितवान्। पुरा किल इन्द्रप्रकोपे मुसलधारावृष्ट्या कम्पितान् गोपालबालान् दृष्ट्वा तद्रक्षणार्थं गोवर्धनं पर्वतं मस्तके धृत्वा रक्षां कृतवान् कृष्णः, तथा राक्षसेनापहृतायां पृथिव्यां व्याकुलैर्देवैः प्रार्थितो विष्णुर्वराहावतारे वराहरूपं

धृत्वा द्रंष्ट्रया पृथ्वीं निस्सारयामासेति पौराणिकी वार्ता। तथा अमराः = देवाः, यस्य = विष्णोः, स्तुत्यम् = स्तोतुमर्हम्, शशिमच्छिरोहरः = शशिनं मथ्नातीति शशिमद्राहुस्तस्य शिरसो मस्तकस्य हः अर्थात् राहुशिरश्छेदक इति नाम = आख्यां, आहुः = कथयामासुः, ( पुरा किलामृतपरिवेषणकाले राक्षसपङ्क्तितो राहुश्छलेन देवपङ्क्तौ चन्द्रपार्श्वे आगत्य स्थितः सोऽप्यमृतं पीतवान् किन्तु सर्वज्ञो विष्णुः सत्वरं ज्ञात्वा तन्मस्तकं चिच्छेदेत्यपि पौराणिकी वार्ताऽनुसन्धेया। सः अन्धक-क्षयकरः = अन्धकानां यादवानां क्षयकरः नाशकरः गृहनिर्मापको वा, सर्वदः = सर्वमनोरथदाता, माधवः = कृष्णः, त्वां, पायात् = अव्यादित्यर्थः।

शिवपक्षीयार्थस्तु—ध्वस्तमनोभवेन = भस्मीकृतकामदेवेन, येन = शम्भुना, पुरा = त्रिपुरासुरदाहकाले, बलिजित्कायः = बलिं जयतीति बलिजित् विष्णुस्तस्य कायः शरीरम्, अस्त्रीकृतः = अस्त्रं प्रापितः, तथा, उद्वृत्तहारवलयः = उद्वृत्ताः वर्तुलावयवा भुजङ्गाः सर्पा एव हारा वलयानि च यस्य सः, तथा यो गङ्गां = जाह्नवीम्, अधारयत् = शिरसा धारितवान्, तथा, यस्य = शम्भोः, शिरः = मस्तकं शशिमत् = विराजमानचन्द्रम्, ( तथा ) यस्य = शम्भोः स्तुत्यम् = स्तोतुमर्हं, हर इति नाम, अमराः = देवाः, आहुः = ऊचुः, सः, अन्धक-क्षयकरः = अन्धकस्य अन्धकासुरस्य क्षयकरः नाशयिता, उमाधवः = पार्वतीशः, सर्वदा = सर्वकाले, त्वां, पायात् = अव्यादित्यर्थः।

पद्येऽस्मिन्नभिधाया नियामकाभावादर्थद्वयस्य केवलं वाच्यत्वकोटौ स्थितत्वम्। श्लेषो ध्वनिर्नेति सारम्।

जहाँ शब्दशक्ति अर्थात् अभिधा से दो वस्तु प्रकाश्यमान हों वहाँ श्लेष होता है। सारांश यह है कि—जहाँ संयोगादि के द्वारा अनेकार्थ शब्द का एक अर्थ नियन्त्रित हो जाने पर शब्दशक्ति के द्वारा अर्थान्तर की प्रतीति हो वहाँ शब्दशक्त्युद्भवध्वनि होती है और जहाँ संयोगादि नियामकाभाव रहने पर दोनों अर्थ शब्दशक्ति ही से प्रकाशित हो वहाँ श्लेष होता है, जैसे—आगे के उदाहरण में—

विष्णुपक्ष में अर्थ इस प्रकार होता है—जिस विष्णु ने कृष्णावतार लेकर बचपन में ही अपने पैरों से शकट ( गाड़ी ) गिराई अर्थात् शकटासुर को

मार डाला, और पहले अमृतहरण के समय बलिराजा को जीतने वाला शरीर को स्त्री बना डाला, और उद्वृत्त ( उच्छृङ्खल भुजङ्ग अघासुर या कालियनाग को मारने वाले हैं ) जिनमें रव ( वेद का लय होता है अथवा रवमाने शब्द का "अकारो विष्णुः" अकार रूप शब्द का लय हो जाता है, जिन्हों ने इन्द्रप्रकोप के समय गोवर्धन पर्वत तथा वराहावतार में पाताल से पृथ्वी को धारण किया। जिस विष्णु ने राहु के शिर को काट डाला था इसलिये प्रशंसनीय नाम देवता लोग शशिमच्छिरोहर ऐसा लेते हैं। वह अन्धक ( यादवों के ) क्षय माने निवासस्थान द्वारका में बनाने वाले अथवा मौसलपर्व में यादवों का नाश करने वाले सभी मनोरथ को देनेवाले विष्णु तुझे रक्षा करें।

शिवपक्ष में—कामदेव का नाश करने वाले जिन शङ्कर भगवान् ने त्रिपुरासुर के दाह के समय विष्णुशरीर को अस्त्र बना डाला था, जिनने वर्तुलाकार सर्पों को हार और वलय बनाया था, और मस्तक पर गङ्गा को धारण किया है, और जिनका मस्तक चन्द्रमा से युक्त है, तथा देवता लोग जिनका प्रशंसनीय नाम हर ऐसा कहते हैं, वे अन्धकासुर को मारने वाले पार्वतीपति तुझे हमेशा रक्षा करें। यहाँ दोनों अर्थ अभिधाशक्ति से ही प्रकाशित है, इसलिये श्लेषालङ्कार है।

नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन, तत् पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्येदमुक्तं "आक्षिप्त" इति। तदयमर्थः, "यत्र शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं सत् प्रकाशते स सर्वः श्लेषविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः।

पूर्वपक्षिणः शङ्कामुद्धृत्य खण्डयति—नन्वित्यादिना। अलङ्कारान्तरप्रतिभायाम् = अन्यालङ्कारप्रतीतौ, अपि, श्लेषव्यपदेशः = श्लेषव्यवहारः, भवति इति भट्टोद्भटमतम्, तदनुसारेण शब्दशक्तिमूलो ध्वनिः, पुनः, निरवकाशः = इत्याशङ्कायां कारिकायाम्, आक्षिप्त इति दत्तम्। तदेदं सारम्—यत्र = यस्मिन् काव्ये, शब्दशक्त्या = अभिधाशक्त्या, साक्षात् वाच्यरूपेणैव = न तु परम्परया, अलङ्कारान्तरं = अन्योऽलङ्कारः, वाच्यं सत्, प्रतिभासते = प्रकाशते, स सर्वः = सम्पूर्णः, श्लेषविषयः।

यत्र तु=यस्मिन् काव्ये, शब्दशक्त्या=अभिधामूलव्यञ्जनया, सामर्थ्याक्षिप्तम् =वाच्यसामर्थ्येनाक्षिप्तम्, वाच्यव्यतिरिक्तम्=वाच्याद्भिन्नम्, व्यङ्ग्यमेव =व्यङ्ग्यस्वरूपमेव, अलङ्कारान्तरं=अन्योऽलङ्कारः, प्रकाशते=प्रतिभासते, स ध्वनेः=शब्दशक्त्युद्भवध्वनेः, विषयः ।

पूर्व पक्षी की शङ्का यह होती है कि भट्टोद्भट ने वस्तुद्वय की केवल प्रतीति में ही नहीं किन्तु अन्य अलङ्कार की प्रतीति में भी श्लेष व्यवहार माना है तब तो शब्दशक्ति मूल ध्वनि का फिर भी सावकाश नहीं है। ऐसी शङ्का में उत्तर यह है कि—इसलिये तो कारिका में "आक्षिप्तः" पद दिया है। इसका तात्पर्य यह है कि जहाँ अभिधाशक्ति से साक्षात् वाच्यरूप में अलङ्कारान्तर की प्रतीति होती है वह सब श्लेष का विषय है। और जहाँ शब्दशक्ति के बल से आक्षिप्त होकर वाच्य से भिन्न व्यङ्ग्यरूप में ही अन्य अलङ्कार की प्रतीति होती है वह ध्वनि का विषय है।

शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

अन्वयः—तस्याः, हारेण, विना, अपि, निसर्गात्, एव, हारिणौ, कस्य, विस्मयं, न, जनयामासतुः ।

शब्दशक्त्या=अभिधाशक्त्या, साक्षात्=वाच्यरूपेणैव अन्यालङ्कारप्रतिभायाः अन्यालङ्कारप्रतीतेरुदाहरणमाह—तस्या इति । तस्याः=नायिकायाः, हारेण =मुक्तावल्या, विनापि=अन्तरेणापि निसर्गादेव=स्वभावादेव, हारिणौ=हारवन्तौ, इति विरोधः, किन्तु हारिणौ=मनोहरौ, इत्यर्थकरणे विरोधपरिहारः। पयोधरौ=स्तनौ, कस्य=पुरुषस्य, विस्मयं=आश्चर्यम्, न=नैव, जनयामासतुः =उत्पादयामासतुरित्यर्थः ।

उस नायिका का हार के बिना भी मनोहर दोनों स्तन किस पुरुष को आश्चर्य नहीं करते !

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः, साक्षाद्विरोधालङ्कारश्च प्रतिभासते, इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः । न त्वनुस्वा-

नोपमव्यङ्ग्यस्य ध्वनेः। अलक्ष्यक्रमव्यङ्ग्यस्य तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव। यथा ममैव—

यहाँ "तस्या विनापि" इस श्लोक में शृङ्गार रस का व्यभिचारी विस्मयनामक भाव और विरोधालङ्कार दोनों साक्षात् (वाच्यरूप में) प्रतीत होते हैं अतः विरोध की छाया से अनुगृहीत श्लेष का विषय है अनुस्वानोपमव्यङ्ग्य अर्थात् संलक्ष्यक्रम व्यङ्ग्य ध्वनि का नहीं किन्तु वाच्य और श्लेष या विरोध से अभिव्यक्त उपसंलक्ष्यक्रमव्यङ्ग्य नामक ध्वनि का तो विषय है ही। इसका उदाहरण जैसे मेरा ही—

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्,
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात्॥

अन्वयः—सुदर्शनकरः, चरणारविन्दललितेन, आक्रान्तलोकः, चन्द्रात्मचक्षुः, दधत्, हरिः, श्लाघ्याशेषतनुम्, सर्वाङ्गलीलाजितत्रैलोक्याम्, इन्दुरूपम्, अखिलं, मुखं, बिभ्राणाम्, याम्, स्वतनोः, अधिकाम्, स्थाने, अपश्यत्।

श्लाघ्येति। सुदर्शनकरः = शोभनं दर्शनं यस्य तादृशः करो यस्य सः, अथवा सुदर्शनं चक्रं करे यस्य सः, चरणारविन्दललितेन = चरणारविन्दस्य ललितेन चेष्टया, आक्रान्तलोकः = जितभुवनः, चन्द्रात्मचक्षुः = चन्द्रात्मं चन्द्ररूपं चक्षुर्नयनं, दधत् = धारयत्, हरिः = कृष्णः, श्लाघ्याशेषतनुम् = प्रशंसनीयाखिलशरीराम्, सर्वाङ्गलीलाजितत्रैलोक्याम् = निखिलावयवचेष्टापराजितत्रिभुवनाम्, इन्दुरूपम् = चन्द्ररूपम्, अखिलं = सकलं, मुखम्, बिभ्राणाम्, धारयन्तीम्, याम् = रुक्मिणीम्, स्वतनोः = स्वशरीरात् अधिकाम् = उत्कृष्टाम्, स्थाने = युक्तम्, अपश्यत् दृष्टवान्, सा = रुक्मिणी, वः = युष्मान्, अवतात् = रक्षतात्।

हाथ में सुदर्शनचक्रवाला, चरणारविन्द की चेष्टा से जिन्होंने तीन लोक को जीत लिया है, चन्द्ररूप नेत्र को धारण करता हुआ, विष्णु ने सर्वाङ्गसौन्दर्य से तीनों लोक को जीतनेवाली, चन्द्रस्वरूप मुखको धारण करनेवाली जिस रुक्मिणी को अपने शरीर से उत्कृष्ट ही देखा यह ठीक ही है, वह रुक्मिणी देवी तुम सबों की रक्षा करें।

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते।

यहाँ व्यतिरेक की छाया को परिपुष्ट करनेवाला श्लेष वाच्यरूप में ही प्रतीत होता है।

यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

अन्वयः—जलदभुजगजं, विषम्, वियोगिनीनाम्, भ्रमिम्, अरतिं, अलसहृदयताम्, प्रलयं, मूर्छां, तमः, शरीरसादं मरणञ्च, प्रसह्य, कुरुते।

जलदेति। पद्यमिदं नायकं नायिकावस्थां बोधयितुं वर्षर्तुवर्णनपरकं सख्या उक्तिपरकम्। जलदभुजगजं = जलदः मेघ एव भुजङ्गः सर्पस्तस्माज्जातम्, विषम् = जलम्, गरलञ्च, वियोगिनीनाम् = विरहिणीनाम्, भ्रमिम् = घूर्णनम्, अरतिम् = रतिविषयकानभिलाषम्, अलसहृदयताम् = हृदयालस्यम्, प्रलयम् = प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिस्तम्, मूर्च्छाम् = मूर्च्छनम्, तमः = अन्धकारम्, शरीरसादम् = देहपीडाम्, मरणम् = निधनम्, प्रसह्य = हठात्, कुरुते = करोतीत्यर्थः। अत्र जलदभुजगेति रूपकम्, विषपदे श्लेषश्च वाच्यतयैव प्रतीयेत इति श्लेषस्यैव विषयो न तु शब्दशक्तिमूलकध्वनेरिति सारम्।

मेघ रूप से उत्पन्न, जल विष के समान विरहिणियों को पहले चक्कर बाद बेचैनी, तब आलस्य, बाद ज्ञान चेष्टा का अभाव, तब मूर्छा, तब अन्धकार, तब शरीर की दुर्बलता, बाद मरण बलात् कर देता है।

यथा वा—

चमहिअमाणसकञ्चणपङ्कअणिम्महिअपरिमला जस्स।
अखण्डिअदाणपसारा बाहुप्पलिहा च्चिअ गइन्दा॥

( छाया ) खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य।
अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्राः॥

अन्वयः—स्पष्ट एव।

चमहिएति। कोऽपि राजानं वर्णयति। खण्डितमानसकाञ्चननिर्मथितपङ्कजपरिमलाः = खण्डितानि त्रोटितानि यानि मानसस्य मानसरोवरस्य काञ्चन-

पङ्कजानि सुवर्णकमलानि तेषां निर्मथितो विध्वंसितः परिमलो गन्धो येषु तथोक्ताः, बाहुपक्षे तु—खण्डितानि निराशीकृतानि शत्रूणां मानसान्येव मनांस्येव काञ्चन-पङ्कजानि तैर्निर्मथितो जालः परिमलः प्रभावो येषां ते तथोक्ताः। अखण्डितदान-प्रसराः=न खण्डिते दानस्य मदजलस्य पक्षे धनवितरणस्य प्रसरः प्रवाहः, पक्षे प्रवृत्तिर्येषान्ते तादृशाः, यस्य=राज्ञः, बाहुपरिघाः=बाहवः परिघा लोहदण्डा इति बाहुपरिघा एव, गजेन्द्राः मत्तदन्तिनः सन्तीत्यर्थः।

निराश शत्रुओं के मन रूप सुवर्ण कमलों के निर्मथन करने के कारण यश रूपी सुगन्ध को बढ़ाने वाले तथा धनदान में सदैव लगे हुए जिस राजा के बाहुदण्ड ही मानसरोवर के सुवर्ण कमलों को तोड़ने के कारण सुगन्ध युक्त तथा निरन्तर मदजल प्रकाशित करने वाले हाथी के समान ही हैं।

अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते।

अत्र=प्रोक्तपद्ये बाहुपरिघा एव गजेन्द्रा इति रूपकम्, तच्छायानुग्राही मानसशब्दे श्लेषोऽपि वाच्यतयैव अवभासेते=प्रतीयेते इत्यनयोरलङ्कारयोः शङ्करो न तु शब्दशक्तिमूलो ध्वनिः।

यहाँ गजेन्द्र शब्द देने के कारण निर्मथित-परिमल-दान-शब्द क्रमशः तोड़ना, सौगन्ध्य, मद रस रूप अर्थ प्रतिपादन के अलावा फैलाने प्रताप सौरभ दान "स्वसत्वनिवृत्तिपूर्वक परस्वत्वोत्पादन" रूपदान अर्थ भी प्रतीत होते हैं, इसलिये रूपकच्छायानुग्राही श्लेष वाच्यतया ही प्रतीत होता है अतः श्लेष है ध्वनि नहीं।

स चाक्षिप्तोऽलङ्कारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपस्तत्र न शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः। तत्र वक्रोक्त्यादि-वाच्यालङ्कारव्यवहार एव। यथा—

चकार यहाँ भिन्न क्रम है और अपि अर्थ में है. अतः आक्षिप्तः के बाद प्रयुक्त है—वह अलङ्कार आक्षिप्त होने पर भी जहाँ दूसरे शब्द से कथित स्वरूप हो जाता है वहाँ संलक्ष्यक्रम ध्वनि का ही व्यवहार नहीं होता है किन्तु गुणी भूतव्यङ्ग्य से वक्रोक्ति आदि वाच्यालङ्कार का ही व्यवहार होता है। जैसे—

दृष्ट्या केशव! गोपरागहृतया किञ्चिन्न दृष्टं मया,
तेनैव स्खलिताऽस्मि नाथ! पतितां किं नाम नालम्बसे।

एकस्त्वं विषयेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

अन्वयः—( हे ) केशव !, गोपरागहृतया, दृष्ट्या, मया, किञ्चित्, न, दृष्टम्, तेन, एव, स्खलिता, अस्मि, ( हे ) नाथ !, पतितां, ( माम् ), किं, नाम, न, अवलम्बसे, एकः, त्वम्, विषयेषु खिन्नमनसां, सर्वाबलानां, गतिः, एवं, गोप्या, सलेशं, गोष्ठे, गदितः, हरिः, वः, चिरम्, अवतात् ।

दृष्ट्येति। कस्याश्चिद् गोप्याः कृष्णं प्रत्युक्तेराशीर्वादात्मकं पद्यमिदम्। हे केशव ! = कृष्ण ! गोपरागहृतया = गवां ये परागा धूलयस्तैर्हृतया छन्नया, दृष्ट्या = नेत्राभ्याम्, किञ्चित् = निम्नमुन्नतं वा स्थलं न दृष्टम् = नावलोकितम् ( अथवा ) गोपे वल्लवे त्वयि यो रागः स्नेहस्तेन हृतया आकृष्टया, दृष्ट्या किञ्चित् किंकर्तव्यमकर्तव्यं वा न दृष्टं = न विचारितम् ( अथवा ) केशवं गच्छतीति केशवगो य उपरागस्तेन हृतया दृष्ट्या इत्यप्यर्थो बोध्यः। तेनैव = कारणेन, अस्मि = अहं, स्खलिता = पथाद्भ्रष्टा, पक्षे सच्चारित्र्याद् भ्रष्टा = रहिता, हे नाथ ! स्वामिन् ! पक्षे ऐश्वर्यशालिन् ! पतितां = स्खलितां मां, किन्नाम = कुतो न, अवलम्बसे = हस्तेन गृह्णासि, पक्षे, पतितां = पत्युर्भावः पतिता ताम्, पतित्वं कुतो नावलम्बसे ( पतिर्भूत्वा कुतो न रक्षसीत्यर्थः ) एकः, त्वम्, विषयेषु खिन्नमनसाम् = विषयेषु = उच्चावचस्थानेषु गमनशक्तेरभावात् खिन्नमनसां = श्रान्तहृदयानाम्, सर्वेषामबलानां दुर्बलजनानाम् गतिः शरणम्, पक्षे—विषयेषोः कामदेवात् खिन्नमनसाम् दूयमानचित्तानाम् सर्वासामबलानां नारीणाम् एकः त्वमेव शरणम्। एवम् = इत्थम् सलेशं = सव्याजम् गोप्या = गोपिकया, गोष्ठे = व्रजे, गदितः = भाषितः, हरिः = कृष्णः, वः = युष्मान्, चिरं = बहुदिनं, अवतात् = पायात् ।

अत्र द्व्यर्थकानां गोपरागादिशब्दानामभिधाशक्त्या गोधूल्यादिष्वर्थेष्वेव नियन्त्रणे द्वितीयार्थस्य ध्वनिद्वारा सम्भावनायामपि सलेशपदोपादानेनाभिधायामेव स्पष्टीकृतायामर्थद्वयस्य वाच्यत्वेन भानात् श्लेष एव न तु शब्दशक्तिमूलो ध्वनिरिति सारम् ।

हे कृष्ण ! गौओं की धूलियों से मूँद जाने के कारण अपनी आँखों से मैं रास्ते की ऊँचाई-निचाई को नहीं देखसकी अथवा गोप तुझमें प्रेमासक्त हो

जाने के कारण कर्तव्याकर्तव्य का विचार नहीं कर सकी इस कारण रास्ते में ठोकर खाकर गिर पड़ी हूँ। हे नाथ! गिरी हुई मुझे क्यों नहीं हाथ से पकड़ लेते? अथवा पतिभाव को क्यों नहीं अवलम्बन कर स्वीकार कर लेते? ऊँच-नीच स्थलों से शक्तिहीन होने के कारण खिन्नचित्त वाले दुर्बल मनुष्यों के एक तूँ ही शरण हो, अथवा कामोद्दीपन से व्यग्र चित्त वाली स्त्रियों के तूँ ही एक सहारा हो, इस प्रकार द्व्यर्थक शब्दों में व्याजपूर्वक गोपी द्वारा गोशाले में कहे गये कृष्ण तुम्हें रक्षा करें।

यहाँ दोनों अर्थ वाच्यरूप में ही परिणत होने से श्लेष ही है ध्वनि नहीं। यदि "सलेशं" यह पद नहीं होता तो अभिशक्ति के द्वारा एक अर्थ के भान हो जाने के बाद द्वितीयार्थ प्रतिपादन में अभिशक्ति के विरत हो जाने पर ध्वनि का ही विषय आ जाता किन्तु "सलेशं" इस पद से फिर भी अभिधाशक्ति का उज्जीवन हो गया इसलिये वाच्यश्लेष ही का विषय है ध्वनि का नहीं।

**एवं जातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषयः। यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः।**

**यथा—**

इस प्रकार के सभी उदाहरण वाच्यश्लेष का विषय भले ही हो किन्तु जहाँ शब्दशक्ति से सामर्थ्याक्षिप्त होकर अन्य अलङ्कार की प्रतीति होती है वे सब ध्वनि के विषय हैं। जैसे:—

**'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।'**

हर्षचरिते द्वितीयोच्छ्वासे गद्यमिदम्। अत्रान्तरे = एतन्मध्ये कुसुमसमययुगम् = कुसुमानां पुष्पाणां समययुगं मासद्वयं चैत्रवैशाखनामकं मासद्वयम्, उपसंहरन् = समापयन्, अथवा कौ पृथिव्यां सुमानां समयो यत्र तथोक्तम्, फुल्लमल्लिकाधवलाट्टहासः = फुल्लमल्लिकानां विकसितमल्लिकानां धवलाट्टवत् स्वच्छहर्म्यवत् हासो विकासो यत्र तादृशः। महाकालपक्षे तु फुल्लमल्लिकावत् धवलः स्वच्छो हासो यस्य सः, ग्रीष्माभिधानः = ग्रीष्मनामा, पक्षे ग्रीष्मेण, उष्मणा उपलक्षितं दुष्टानां राक्षसानां कृतेऽभिधानं नाम यस्य सः, महाकालः = महान् दीर्घतरः कालः ग्रीष्मर्तुः, पक्षे महाकालः = शिवः, अजृम्भत = उल्लसितवान्—इत्यर्थः।

अत्र ऋतुवर्णनप्रस्तावेण नियन्त्रितायामभिधाशक्त्यां द्वितीयार्थस्य शिवपक्षीयार्थस्य बोधनेऽभिधामूलव्यञ्जनाया नितरामावश्यकत्वमिति ध्वनेरेव विषयो न श्लेषस्येति सारम् ।

इसी के बीच फूल खिलने का समय चैत वैशाख मास को समाप्त करता हुआ, (शिवपक्ष में) प्रलय काल में सत्ययुग को समाप्त करता हुआ, (शिवपक्ष में) खिली हुई जूही के समान स्वच्छ हास वाला ( ऋतु पक्ष में ) स्वच्छहर्म्य के समान खिली हुई के विकास वाला महाकाल शिव के समान ग्रीष्मनाम महाकाल प्रकट हुआ ।

यथा च—

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥

अन्वयः—स्पष्ट एव ।

उन्नतः = गमने समुत्थितः ( स्तनपक्षे ) यौवने नोत्थितः, प्रोल्लसद्धारः = प्रकर्षेण उल्लसन्ती धारा जलधारा यस्मात् सः ( स्तनपक्षे ) प्रकर्षेणोल्लसन् विराजमानो हारो यत्र सः; कालागुरुमलीमसः = कालः कृष्णः यः अगुरुः अगरविशेषस्तद्वत् मलीमसः कृष्णवर्णः ( स्तनपक्षे तु ) कालागुरुणा मलीमसः तल्लेपेन मलिनः, पयोधरभरः = मेघोत्कर्षः, स्तनोत्कर्षश्च, तन्व्याः = कृशाङ्गयाः, अभिलाषिणम्, कं = पुरुषं, न, चक्रे = कृतवान् ।

पद्येऽस्मिन्नपि वर्षावर्णनेनाभिधायां विरतायां स्तनपक्षीयोऽर्थः शब्दशक्त्युद्भवध्वनिनैव व्यज्यत इति ध्वनेरेव विषयः ।

आकाश में उठा हुआ ( यौवन से उठा हुआ ) लटकती हुई जल धारा वाला ( विद्यमान हार वाला ) काले अगर के समान कृष्णवर्ण, ( अगर के लेप से मलिन ) मेघ अथवा मेघ किस पुरुष को कामिनी का अभिलाषी नहीं बनाता !

यथा वा—

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः,
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवंभवभयोदन्वदुत्तारनावो,
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

अन्वयः—समुचितसमयाक्लिष्टसृष्टैः, पयोभिः, दत्तानन्दाः, पूर्वाह्णे, दिशि, दिशि, विप्रकीर्णाः, दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः, दीप्तांशोः, गावः, पावनानां, वः, परमपरिमितां, प्रीतिम् , उत्पादयन्तु ।

शब्दशक्तिमूलध्वनिमुदाहरति—दत्तानन्दा इति । सूर्य्यशतके मयूरकवेः पद्यमेतत् । समुचितसमयाक्लिष्टसृष्टैः = ( किरणपक्षे ) समुचिते वर्षाकाले पक्षे प्रातरेव, अक्लिष्टक्लेशं विनैव सृष्टैर्मुक्तैः, पयोभिः = जलैः, दुग्धैश्च, प्रजानां जनानाम् , पक्षे बालादीनाम् , दत्तानन्दाः = दत्त आनन्दो यैस्ते तथोक्ताः, ( तथा ) पूर्वाह्णे = दिवसस्य प्रथमभागे, दिशि दिशि = प्रतिदिशं, विप्रकीर्णाः = ( किरणपक्षे ) प्रकाशार्थं विस्तृताः, ( गोपक्षे ) शष्पचरणार्थं प्रसृताः, अह्नि = दिवसे, विरमति = अन्तं गच्छति, संहारभाजः = (किरणपक्षे) नष्टाः, ( गोपक्षे ) एकस्मिन् स्थाने आगत्य स्थिताः, दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः = पक्षद्वये तुल्योऽर्थः दीर्घं यद् दुःखं तस्य प्रभवः कारणं यो भवः संसारस्तस्माद् यद्भयं तदेव उदन्वान् सागरस्तस्य उत्तारः उत्तरणं पारे गमनम् तत्र नावः नौकास्वरूपाः, एवंभूताः, दीप्तांशोः = रवेः, गावः = किरणाः, धेनवश्च, पावनानां = पूतानां, वः = युष्माकम् , अपरिमिताम् = असंख्याम् , प्रीतिम् = प्रमोदं, परम् = अत्यन्तम् , उत्पादयन्तु = प्रादुर्भावयन्तु !

अत्र गाव इत्यस्य किरणपक्षीयं वाच्यमर्थं बोधयित्वा विरतायामभिधायां धेनुपक्षीयार्थस्य तथा गाव इव नाव इत्यौपम्यस्य च व्यञ्जनाय ध्वनेरावश्यकताऽतो ध्वनेरेव विषयो न श्लेषस्येति ज्ञेयम् ।

किरण पक्ष में—उचित समय ( वर्षाकाल ) पर विना क्लेश के छोड़े हुए जलों से ( गोपक्ष में ) उचित समय ( भोर ) में अनायास दिये हुए दुग्धों से, प्रजाओं को तथा बालकों को आनन्द देने वाली, ( किरण पक्ष में ) पूर्वाह्न में प्रकाशार्थ चारो दिशाओं में ( गोपक्ष में ) घास चरने के लिये, फैल जाने वाली, ( किरणपक्ष में ) दिन समाप्त हो जाने पर एक जगह हो जाने वाली, दीर्घकाल-व्यापी दुःख के कारण भवसागर को पार करने के लिये नौकारूप, सूर्य्य की किरणें, गौओं के समान पवित्र तुम्हें अत्यन्त आनन्द करें ।

एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे, वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकार्थ-

योरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः।

एषु उदाहरणेषु = "अत्रान्तरे" "उन्नतः" "दत्तानन्दाः" इति त्रिषूदाहरणेष्वित्यर्थः, शब्दशक्त्या अभिधाशक्त्या = संयोगादिना प्राकरणिकेऽर्थे, प्रकाशमाने = प्रतीते, सति, अप्राकरणिके = अप्रस्तुते, अर्थान्तरे = द्वितीयार्थे, वाक्यस्य, असम्बद्धार्थाभिधायित्वम् = अनन्वितार्थबोधकत्वम्, मा प्रसाङ्क्षीत् = न प्रसज्येत, इति अप्राकरणिकप्राकरणिकार्थयोः = अप्रस्तुतप्रस्तुतार्थयोः, उपमानोपमेयभावः सम्बन्धः, सामर्थ्यात् = शब्दसामर्थ्यात्, कल्पयितव्यः = व्यञ्जनया कल्पयितुं शक्यः, तत्र प्रस्तुतत्वात् वाच्य उपमेयः, अप्रस्तुतत्वादव्यङ्ग्य उपमानम् इति बोध्यम्, इति = एवं, अयं श्लेषः, अर्थाक्षिप्तः = अर्थादाक्षिप्तः, न, शब्दोपारूढः = शब्दनिष्ठ इति, श्लेषालङ्कारात्, अनुस्वानोपमव्यङ्ग्यस्य ध्वनेः, विभिन्न एव = विविक्त एव विषयो नैकविषय इत्यर्थः।

इन पूर्वोक्त तीनों उदाहरणों में शब्दशक्ति से ( अभिधाशक्ति से ) प्राकरणिक अर्थ प्रकाशित हो जाने पर अप्राकरणिकार्थ के बोध में वाक्य के असम्बद्ध अर्थ बोधकत्वरूप दोष न हो जाय इसलिये अप्राकरणिकप्राकरणिकार्थ में उपमानोपमेय भाव सम्बन्ध की व्यञ्जना द्वारा कल्पना अवश्य करनी चाहिये। इस प्रकार श्लेष अर्थ से आक्षिप्त है शब्द से नहीं, अतः अनुस्वानोपमव्यङ्ग्य ध्वनि से श्लेष का पृथक् ही विषय है यह निश्चित हुआ।

अन्येऽपि चालङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव। तथा हि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते। यथा स्थाण्वीश्वराख्यजनपदवर्णने भट्टबाणस्य—

"यत्र च मत्तमातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च, चन्द्रकान्तवपुषः, शिरीषकोमलाङ्ग्यश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च, लावण्यवत्यो मधुरभाषिण्यश्च, अप्रमत्ता प्रसन्नोज्ज्वलरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः।"

शब्दशक्तिमूलानुस्वानव्यङ्ग्यविरोधस्याप्युदाहरणं भट्टबाणस्य स्थाण्वीश्वराख्यजनपदवर्णने = कुरुदेशस्थश्रीकण्ठदेशोपदेशवर्णने दर्शयति—यत्र चेत्यादिना। यत्र = स्थाण्वीश्वराख्यजनपदे, प्रमदाः = नार्य्यः, एतादृश्यः सन्तीति सम्बन्धः। मत्तमातङ्गगामिन्यः = मदमत्तचाण्डालोपरमणशीलाः, शीलवत्यः सदाचारवत्यश्चेति विरोधः, मत्तगजेन्द्रवद्गामिन्य इति विरोधपरिहारः। गौर्य्यः = पार्वत्यः, विभवरताः = भवभिन्ने शिवभिन्ने देवे रता इति विरोधः, गौर्य्यः = गौरवर्णा धने रताश्चेति परिहारः। श्यामाः = कृष्णवर्णाः, पद्मरागिण्यश्च = कमलवद्लोहितवर्णा इति विरोधः, श्यामाः = षोडशवार्षिक्य इति परिहारः। धवलद्विजशुचिवदनाः = शुद्धब्राह्मणवत् शुद्धवदनाः, मदिरामोदिश्वसनाः=मदिरासुगन्धिमुखमारुताः, इति विरोधः, श्वेतदन्तैः स्वच्छवदना इति विरोधपरिहारः। चन्द्रकान्तवपुषः = चन्द्रकान्तप्रस्तवत्कठिनशरीराः, शिरीषकोमलाङ्ग्यश्च = शिरीषपुष्पवत् कोमलावयवाः, इति विरोधः, चन्द्रवत् कमनीयशरीरा इति विरोधपरिहारः। अभुजङ्गगम्याः = सर्पभिन्नगम्याः, कञ्चुकिन्यः = सर्पिण्य इति विरोधः, भुजङ्गे विटेन गम्याः, चोलवत्यश्चेति परिहारः। पृथुकलत्रश्रियः = पृथोः राज्ञः कलत्रवत् श्रीशालिन्यः, दरिद्रमध्यकलिताश्चेति विरोधः। पृथ्वी गुरुः कलत्रस्य श्रोणेः श्रीः शोभा यासां ताः, दरिद्रेण क्षीणेन मध्यभागेन युक्ता इति परिहारः। लावण्यवत्यः = लवणस्य भावः लावण्यं तद्वत्यः, मधुरभाषिण्यः = मिष्टभाषिण्य इति विरोधः (अर्थात् येन मुखेन लवणभक्षणं तेन मुखेन मिष्टभाषणं कथमिति विरोधग्रहम्, सौन्दर्यवत्यः मधुरभाषिण्य इति परिहारः। अप्रमत्ताः = प्रकर्षेण न मत्ताः, प्रसन्नोज्ज्वलरागाश्च = प्रसन्नः स्फीतः, उज्ज्वलः दीप्यमानः रागः मदो यासां ता इति विरोधः, सावधानाः प्रसन्नोज्ज्वलप्रेमवत्य इति परिहारः। अकौतुकाः = न कौतुकं विवाहसूत्रं यासां ता अजातविवाहा इत्यर्थः।

कौतुकं त्वभिलाषे स्यादुत्सवे नर्म-हर्षयोः।
तथा परम्परायातं मङ्गले च कुतूहले॥

'विवाहसूत्र-गीतादिभोगयोरपि न द्वयोरि'ति मेदिनी। प्रौढपूर्णाः प्रकर्षेण ऊढा विवाहिता इति विरोधः, नास्ति कौतुकमभिलाषः कामाभिलाषो यासां ताः, प्रौढाः प्रगल्भाः, पतिमात्रविषयककेलिकलापकोविदा इति परिहारः।

जिस स्थाण्वीश्वर नामक जनपद में स्त्रियाँ पिअक्कड़े चाण्डालों के साथ उपभोग करनेवाली रहती हैं और सदाचार वाली रहती हैं यह कैसे ? यह तो विरोध मालूम पड़ता है किन्तु गजेन्द्रगामिनी हैं और सदाचारवाली हैं ऐसा अर्थ करने से विरोध का परिहार हो जाता है। गौरी पार्वती हैं और भव महादेव से अन्य में रत हैं यह विरोध है किन्तु गौरवर्ण वाली हैं और धनवती हैं इस प्रकार परिहार होता है। श्यामवर्ण वाली हैं और कमल के समान लाल वर्णवाली हैं यह विरोध है किन्तु "श्यामा षोडशवार्षिकी" के अनुसार सोलह वर्ष वाली है और कमल के समान लालवर्ण वाली है इस प्रकार परिहार हो जाता है। शुद्ध ब्राह्मण के समान शुद्ध मुखवाली हैं और मदिरे से खुशबूदार सांसवाली है यह विरोध है किन्तु श्वेत दन्तों से स्वच्छमुखवाली हैं इस प्रकार परिहार हो जाता है। चन्द्रकान्त पत्थर के समान कठिन शरीरवाली हैं और शिरीष के फूल के सरीखे कोमल अङ्गवाली हैं यह विरोध है किन्तु चन्द्रमा के समान सुन्दर शरीरवाली हैं और कोमलाङ्गी हैं इस प्रकार परिहार हो जाता है। सर्पों में गमन करनेवाली नहीं हैं और सर्पिणी हैं यह विरोध है किन्तु विटनायक में गमन करनेवाली नहीं है और कञ्चुक ( चोली ) के धारण करनेवाली हैं इस प्रकार परिहार हो जाता है। पृथुराजा की स्त्री के समान धनवती है और दरिद्रों के बीच पड़ी हुई हैं यह विरोध है किन्तु स्थूल नितम्बों से शोभायमान हैं और पतली कमर वाली हैं इस प्रकार परिहार हो जाता है। नमकदार मुखवाली हैं और बोलने में मिठास आती है यह विरोध है किन्तु सौन्दर्य्यवती है और मधुर बोलने वाली है इस प्रकार परिहार हो जाता है। प्रमत्त नहीं है और साफ साफ मद प्रकाशित होता है यह विरोध है किन्तु सावधान रहती है और प्रसन्न और उज्वल प्रेम करनेवाली हैं इस प्रकार परिहार हो जाता है। कौतुक याने विवाह सूत्र से रहित है अर्थात् विवाहित नहीं है फिर प्रौढ माने प्रकर्षेण विवाहित है यह विरोध है किन्तु विशेषकर अन्य पुरुषों में कामाभिलाषी नहीं हैं और अपने स्वामी के साथ रमण करने में प्रौढ़ हैं इस प्रकार परिहार हो जाता है। इस प्रकार की औरतें रहती हैं।

यहाँ भी विरोधालङ्कार में अर्थद्वय का भान शब्दशक्त्युद्भवानुरणनरूप व्यङ्ग्य के बिना नहीं हो सकता।

अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम्, साक्षाच्छब्देन विरोधालङ्कारस्याप्रकाशितत्वात्। यत्र हि साक्षाच्छब्दावेदितो विरोधालङ्कार, स्तत्र हि श्लिष्टोक्तौ वाच्यालङ्कारस्य विरोधस्य श्लेषस्य वा विषयत्वम्।

व्याख्यातप्रायमेतत्।

यहाँ विरोधालङ्कार और विरोधछायानुग्राही श्लेष वाच्य है यह नहीं कह सकते क्योंकि साक्षात् शब्द से विरोधालङ्कार प्रकाशित नहीं है। जहाँ पर साक्षात् शब्द से विरोधालङ्कार कहा गया है वहाँ श्लिष्ट उक्ति में वाच्यालङ्कार विरोध या श्लेष का विषय होता है। जैसे :—

यथा हर्षचरिते—'समवाय इव विरोधिनां पदार्थानाम्। तथा हि सन्निहितबालान्धकारा भास्वन्मूर्तिश्च।

हर्षचरिते प्रथमोच्छ्वासे दधीचसेवकस्य विकुक्षेः सावित्रीं पत्युक्तिर्गायत्रीवर्णनप्रस्तावे। विरोधिनाम् = परस्परविरुद्धानां, पदार्थानाम् = वस्तूनाम्, समवाय इव = समूह इव, इयम्। तथा हि—सन्निहितः निकटस्थः बालः नूतनः अन्धकारो यस्याः सा, एवंभूता भास्वतः=सूर्य्यस्य मूर्तिरिति विरोधः किन्तु सन्निहिता समीपस्था बाला केशा एव कृष्णत्वादन्धकारा इव यस्याः सा, भास्वन्ती देदीप्यमाना मूर्तिर्यस्याः सेति विरोधपरिहारः।

परस्पर विरुद्धपदार्थों के समूह की तरह यह समीप में नवीन अन्धकार वाली सूर्य्य की मूर्ति है यह कैसे ? क्योंकि सूर्य्य के सामने अन्धकार नहीं रह सकता, इसलिये विरोध है किन्तु समीप में केशों की कालिमा से अन्धकार वाली है और चमकती हुई कान्ति वाली है इस प्रकार विरोध का परिहार हो जाता है।

यथा वा ममैव—

सर्वैकशरणमक्षयमधीशमीशं धियां कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्॥

अन्वयः—सर्वैकशरणम्, अक्षयम्, अधीशम्, धियाम्, ईशम्, चतुरात्मानम्, निष्क्रियम्, अरिमथनम्, चक्रधरं, नमत।

सर्वैकेति। सर्वैकशरणम् = सर्वेषां जनानामेकं शरणं गृहम्, अक्षयम् = गृहरहितमिति विरोधः, सर्वेषामेकं शरणं रक्षकम् नाशरहितमिति विरोधपरिहारः। 'शरणं गृहरक्षित्रो'रिति विश्वः। 'क्षयो निलयकल्पान्तौ क्षयोऽपचयरोगयोरि'ति शाश्वतः। अधीशम् = धियां बुद्धीनामीशः धीशः, न धीशोऽधीशस्तम् बुद्धिरहितमित्यर्थः, धियाम् = बुद्धीनाम्, ईशम् = बुद्धिमन्तमिति विरोधः, किन्तु अधीशम् = अधिपतिम्, धियामीशमिति परिहारः। हरिम् = हरिद्वर्णम्, कृष्णम् = श्याममिति विरोधः, किन्तु कृष्णम् कृष्णनामकं हरिमिति परिहारः। चतुरात्मानम् = चतुरः कार्यदक्ष आत्मा यस्य तम्, निष्क्रियम् = क्रियाशून्यमिति विरोधः, किन्तु चत्वारः कृष्ण-बलभद्र-प्रद्युम्ना-ऽनिरुद्धाख्या आत्मानो यस्य तम्, इति परिहारः। अरिमथनम् = अराणि रथाङ्गावयवाः सन्त्यस्मिन्निति अरिचक्रं तस्य मथनम् नाशकम्, चक्रधरं = चक्रस्य धरं धारकमिति विरोधः, अरीणां शत्रूणां मथनं नाशकमिति परिहारः। एवंभूतं कृष्णं (यूयं) नमत = प्रणमतेत्यर्थः।

सबों का मुख्य घर है और स्वयं गृहविहीन हैं यह कैसे विरोध है, किन्तु सबों का मुख्य रक्षक हैं और अविनाशी हैं इस प्रकार विरोध का परिहार हो जाता है। धी बुद्धि के ईश नहीं हैं अर्थात् बुद्धिहीन हैं और धी के ईश अर्थात् बुद्धिमान् हैं यह विरोध है किन्तु और धीश प्रभु हैं और बुद्धि के ईश हैं इस प्रकार परिहार है। हरे हैं और काले हैं यह विरोध है किन्तु कृष्ण नामक हरि विष्णु इस अर्थ से परिहार है। कार्य्य में चतुर हैं क्रियारहित हैं यह विरोध है किन्तु जिनके कृष्ण-बलभद्र प्रद्युम्न-अनिरुद्ध चार स्वरूप हैं और स्वयं क्रियाशून्य हैं इस प्रकार परिहार है। एवंभूत कृष्ण को तुम लोग प्रणाम करो।

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते।

यहाँ शब्द शक्ति मूलानुस्वानरूप विरोध स्पष्ट ही प्रतीत होता है।

एवंविधो व्यतिरेकोऽपि दृश्यते—

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो,
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-,
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः।

अन्वयः—ये, लूनतमसः, पादाः, खम्, अत्युज्ज्वलयन्ति, ये, वा, नखोद्भासिनः, ये, सरोरुहश्रियम्, अपि, पुष्णन्ति, ये, च, क्षिप्ताब्जभासः, ये, क्षितिभृतां, मूर्धसु, अवभासिनः, ये, च, अमराणां, शिरांसि, आक्रामन्ति, ते, उभये, अपि, दिनपतेः, पादाः, वः, श्रिये, सन्तु।

खं य इति। ते दिनपतेः = सूर्य्यस्य, उभये, पादाः = किरणाः, चरणाश्च, वः = युष्माकम् श्रिये=लक्ष्म्यै, सन्तु = भवन्त्वित्यर्थः। ते के ? ये=पादाः किरणाः, लूनतमसः = नाशितान्धकाराः, खम् = आकाशम् अत्युज्ज्वलयन्ति = अत्यन्तं दीपयन्ति ये, वा = ये च पादाः = चरणाः, नखोद्भासिनः = नखैरुद्भासनशीलाः, ये = किरणाः, सरोरुहश्रियम् = कमलशोभां, पुष्णन्ति = वर्धयन्ति। ये = पादाः चरणाः, क्षिप्ताब्जभासः = निर्जितकमलकान्तयः। ये = पादाः किरणाः क्षितिभृताम् = पर्वतानां नृपाणां वा मूर्धसु = शिखरेषु मस्तकेषु वा, अवभासिनः = उद्दीपनशीलाः। ये च पादाश्चरणाः, अमराणां = देवानाम्, शिरांसि = शीर्षाणि आक्रामन्ति = आरोहन्ति।

अत्र तमोनाशनधर्माः खोद्भासनधर्माश्च किरणेष्वेव न चरणेषु तथा कमले शोभापरिणेष्वेकत्वधर्माः किरणेष्वेव चरणेषु तु कमलशोभाहरणधर्मा तथा पर्वतशिखरेषूद्भासनधर्मा किरणेष्वेव न चरणेषु चरणानां तु केवलं मम शिरस्स्वेवारोहणमित्युपमानभूतसूर्य्यचरणापेक्षयोपमेयभूतसूर्य्यकिरणानामाधिक्यं शब्दशक्तिमूलव्यतिरेकध्वनिनैव प्रतीयत इति व्यतिरेकध्वनेरुदाहरणं स्पष्टमेवेति सारम्।

जो सूर्य्य के किरणरूप पाद अन्धकार को नाश करते हैं और आकाश को प्रकाशित करते हैं, और जो चरणरूप पाद केवल नखों से सुशोभित हैं किन्तु खमाने आकाशको प्रकाशित करने वाले नहीं हैं और अन्धकार भी हटाने वाले नहीं हैं, जो किरणरूप पाद कमलों की शोभा बढ़ाते हैं और जो ( चरणरूप ) पाद कमलों की शोभा को तिरस्कृत करने वाले हैं, जो ( किरणरूप ) पाद पर्वतों और राजाओं के शिखर और मस्तक पर शोभने वाले हैं और ( चरणरूप ) पाद देवताओं के मस्तक पर आक्रमण करने वाले हैं वे सूर्य्य देव के दोनों पाद ( किरणरूप चरणरूप ) तुम लोगों के लक्ष्मी या कल्याण के लिए हों।

यहाँ उपमान भूत सूर्य्य चरण की अपेक्षा उपमेय भूत सूर्य्य किरण का आधिक्य वर्णन शब्दशक्ति मूल व्यतिरेक ध्वनि के द्वारा ही है।

एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सम्भवन्ति, ते सहृदयैः स्वयमनुसर्तव्याः। इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः।

इस प्रकार और भी शब्दशक्तिमूलानुस्वान ( संलक्ष्यक्रमव्यङ्ग्य ) रूप व्यङ्ग्य ध्वनि के प्रकार सम्भव हो सकते हैं, वे स्वयं ऊहनीय हैं। यहाँ ग्रन्थविस्तार के भय से उसका विस्तार नहीं किया गया है।

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः सम्प्रकाशते।
यस्तात्पर्य्येण वस्त्वन्यद्व्यनक्त्युक्तिं विनाऽस्वतः॥ २२॥

अन्वयः—यत्र, ( स्वसामर्थ्यात् ) अन्यः, अर्थः सम्प्रकाशते, यः, स्वतः, उक्तिं, विना, तात्पर्य्येण, अन्यद्, वस्तु, व्यनक्ति (सः) अर्थशक्त्युद्भवः, ध्वनिः।

यत्रार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः।

जहाँ अर्थ वाच्यार्थ शब्दव्यापार के विना ही अपना ध्वनय न सामर्थ्य से अर्थान्तर को अभिव्यक्त करता है वह अर्थ शक्त्युद्भव नाम अनुस्वानोपमव्यङ्ग्य ध्वनि है।

यथा—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥

अन्वयः—देवर्षौ, एवंवादिनि ( सति ) पितुः, पार्श्वे, अधोमुखी, पार्वती, लीलाकमलपत्राणि, गणयामास।

एवमिति। षष्ठसर्गस्य कुमारसम्भवस्य काव्यस्य पद्यमेतत्। देवर्षौ नारदे, एवं वादिनि = एवमुक्ते, पितुः = हिमालयस्य, पार्श्वे, निकटे, अधोमुखी = वैवाहिकसमाचारश्रवणेन जातलज्जतया नतमुखी, पार्वती, लीलाकमलपत्राणि = लीलाकमलस्य पत्राणि दलानि, गणयामास = संख्यातवतीत्यर्थः।

इस प्रकार नारद के कहने पर पिता हिमालय के पास बैठी हुई विवाह वृत्तान्त सुनकर लज्जा से नीचे मुख की हुई पार्वती अपने हाथ में लिये लीलाकमल के पत्तों को गिनने लगी।

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैव अर्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति।

यहाँ लीलाकमल के पत्तों की गणना स्वयं गुणीभूत रूप होकर शब्द व्यापार के विनाही व्यभिचारिभाव लज्जा रूप अर्थान्तर को अभिव्यक्त करता है।

न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः। यतो यत्र साक्षाच्छब्द-निवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स तस्य केवलस्य मार्गः। यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसन्धानपर्य्यन्तं, शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि, साक्षाच्छब्दनिवेदितम्। इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः। तस्मादन्यो ध्वनेः प्रकारः।

व्याख्यातप्रायमेतत्।

यह उदाहरण ( एवंवादिनि ) तो अलक्ष्यक्रमव्यङ्ग्य ध्वनि का ही हो सकता है यह नहीं कह सकते हैं। क्योंकि जहाँ साक्षात् शब्द से वर्णन किये गये विभाव-अनुभाव-व्यभिचारि भाव से रसादि की प्रतीति होती है वही केवल उस अलक्ष्यक्रमव्यङ्ग्य ध्वनि का मार्ग है, जैसे—कुमारसम्भव के तृतीय सर्ग में वसन्त वर्णनप्रसंग में वसन्तकालीन पुष्पों के भूषणों को धारण करती हुई पार्वती देवी के आगमन से लेकर ( आलम्बन विभाव ) कामदेव के शरसन्धान-पर्य्यन्त ( अनुभाव वर्णन ) धैर्यच्युत महादेव के चेष्टाविशेष वर्ण वगैरह ( व्यभिचार भाव ) साक्षात् शब्द निवेदित है। यहाँ ( एवंवादिनि ) पर तो लीलाकमल के पत्तों की गणना द्वारा सामर्थ्य से आक्षिप्त लज्जारूप व्यभिचारि भाव द्वारा रसकी प्रतीति होती है, अतः अलक्ष्यक्रमव्यङ्ग्य रसध्वनि से अर्थशक्त्युद्भव ( संलक्ष्यक्रमव्यङ्ग्य ) ध्वनि का भिन्न ही प्रकार है।

यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषयः।

यथा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अन्वयस्तु—स्पष्ट एव ।

सङ्केतकालमनसमिति । विदग्धया = चतुरया कयाचिन्नायिकया, संकेतकालमनसम् = संकेतकालं ज्ञातुमिच्छुम्, विटम् = उपपतिम्, ज्ञात्वा = विदित्वा, विटलक्षणं तु साहित्यदर्पणे प्रोक्तम्—संभोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः वेशोपचारकुशलो मधुरोऽथ बहुमतो गोष्ठ्याम्, हसन्नेत्रार्पिताकूतम् = विकसदक्षिव्यापारसूचितस्वाभिप्रायं यथास्यात् तथा लीलापद्मं = क्रीडाकमलम्, निमीलितम् = सङ्कोचितमिति यावत् ।

किसी चतुरा नायिका ने विटनायक को सङ्केतकाल जानने की जिज्ञासा समझ कर विकसितनामों से अपना अभिप्राय व्यक्त करती हुई लीलाकमल को बन्द कर दिया ।

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम् ।

यहाँ लीलाकमल के निमीलन के द्वारा संकेत काल "सूर्य्यास्त के समय में मिलूँगी" इस अर्थ का व्यञ्जकत्व शब्द द्वारा ही सूचित कर दिया है इसलिये अर्थशक्त्युद्भव ध्वनि का उदाहरण नहीं है ।

तथा च—

शब्दार्थशक्त्या वाऽऽक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालङ्कृतिर्ध्वनेः ॥ २३ ॥

अन्वयः—यत्र, शब्दार्थशक्त्या, वा, आक्षिप्तः, व्यङ्ग्यः, अर्थः, पुनः, कविना, स्वोक्त्या, आविष्क्रियते, सा, ध्वनेः, अन्या, एव अलङ्क्रियते ।

शब्दशक्त्यार्थशक्त्या शब्दार्थशक्त्या वाऽऽक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते, सोऽस्मादनुस्वानोपमव्यङ्ग्याद्ध्वनेरन्य एवालङ्कारः । अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः सति सम्भवे, स तादृगन्योऽलङ्कारः ।

वैसा कहा भी है—

शब्दशक्ति अर्थशक्ति शब्दार्थोभय शक्ति से व्यङ्ग्य अर्थ को आक्षिप्त होने पर भी कवि फिर जहाँ अपनी उक्ति से प्रकाशित कर देता है वह इस अनुस्वानोपमव्यङ्ग्य ध्वनि से अन्य हो अलङ्कार है।

तत्र शब्दशक्त्या यथा—

वत्से मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं,
कम्पः को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा,
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः॥

अन्वयः—( हे ) वत्से !, विषादं मा, गाः, ( पक्षद्वये ) उरुजवं, श्वसनम्, ऊर्ध्वप्रवृत्तं, सन्त्यज, ते, गुरुः, कम्पः, को वा, ( पक्षे ) कम्पः, को, वा, ते गुरुः, बलभिदा, जृम्भितेन, इह, किम्, ( पक्षद्वये ) अत्र, याहि, इति, भयशमनच्छद्मना, सुराणां, प्रत्याख्यानं, कारयित्वा, पयोधिः, मन्थमूढां, लक्ष्मीं, यस्मै, अदात्, सः, वः, दुरितम्, दहतु।

वत्स इति। समुद्रमथनसमये निस्सृतां स्वां पुत्रीं सर्वान् सुरान् हित्वा समुद्रो विष्णवेऽदादित्येव पौराणिकीं वार्तामवलम्ब्य कस्यचित् कवेराशीर्वादात्मकं पद्यमिदम्। ( हे ) वत्से ! = पुत्रि ! विषादं = दैन्यं, मा गाः = न प्राप्नुहि ( पक्षे ) विषादं = विषमत्तीति विषादः शिवस्तं मागाः = हलाहलभक्षिणं शिवं नैव वृणु इत्यर्थः, उरुजवं = बृहद्वेगं, ऊर्ध्वप्रवृत्तं, श्वसनम् = ऊर्ध्वश्वासं, सन्त्यज = सम्यक् त्यज, ( प्रत्याख्यानपक्षे ) ऊरुजवं श्वसनं = वायुम्, ऊर्ध्वप्रवृत्तम् = ऊर्ध्वज्वलनं वह्निम्, वेगासहिष्णुत्वेन, उष्णत्वासहिष्णुत्वेन च तावपि सन्त्यजेत्यर्थः, गुरुः = महान्, ते = तव, कम्पः = कम्पनम् कः = कुतः ( प्रत्याख्यानपक्षे तु ) कंजलं पातीति कम्पः = वरुणः, वा = अथवा कः = ब्रह्मा ते तव गुरुः = पूज्यः, अतस्तावपि पूज्यत्वात् त्यज, नैव वृणु इत्यर्थः, बलभिदा = बलहानिकृदा, जृम्भितेन = जृम्भया, इह किम् = न किमपि प्रयोजनम्, ( प्रत्याख्यानपक्षे तु ) जृम्भितेन = परमैश्वर्य्यशालिना बलभिदा = इन्द्रेण किम् ! धनवता इन्द्रेण किम् अर्थात् धनवन्तमिन्द्रमपि अस्थायित्वेन न वृणु। क्षीरो

पुण्ये मर्त्यलोकं विशन्तीति प्रसिद्धेः सोऽप्यस्थायीति तात्पर्य्यम्। अत्र = विष्णौ, याहि, विष्णुपार्श्वे गच्छ, इति = एवं, भयशमनच्छद्मना = भयशान्तिकरणव्याजेन, सुराणाम् = इर्य्यतिरिक्तदेवानाम, प्रत्याख्यानं = खण्डनं कारयित्वा = अन्येन कारयित्वा न तु स्वम्, पयोधिः = समुद्रः, यस्मै = विष्णवे, मन्थमूढाम् = मन्थेन मन्दराचलान्दोलनजन्यखेदेन मूढां मोहमापन्नां, लक्ष्मीं = स्वतनयां, अदात् = ददौ, सः = विष्णुः, वः = युष्माकं, दुरितं = पापं, दहतु = नाशयत्वित्यर्थः।

समुद्र मथन के समय मन्दराचल से मन्थन होने से समुद्र के भयङ्कर तरङ्गों को देखकर घबड़ाती हुई अपनी पुत्री को जब सभी देवता लोग आपा-आपी ग्रहण करने के लिये तैयार हुए तब भय दूर करने के बहाने यह कहकर अन्य देवताओं के साथ विवाह खण्डन कर विष्णु देव ही को समर्पण किया कि बेटी! घबड़ाओ नहीं विष हलाहल भक्षण करने वाले शिव के पास मत जाओ, तीव्रगति से ऊर्ध्वश्वास जो ले रही है उसे भी बन्द करो ( खण्डनपक्ष में ) तीव्रगति वाले वायु देव और अग्निदेव को भी वरण नहीं करो, इतना काँप क्यों रही हो! शक्ति नष्ट करनेवाली जँभाइयों को बन्द करो ( खण्डन पक्ष में ) कंप ( वरुण ) ( क ) ब्रह्मा तो तुम्हारे पूज्य पिता के सदृश हैं, अतः इन दोनों को भी वरण नहीं करो, ( जृम्भित ) ऐश्वर्य्यशाली इन्द्र को होने से क्या इन्द्र अस्थायी हैं अर्थात् पुण्य क्षय हो जाने पर उन्हें भी मर्त्यलोक जाना ही होगा इसलिये इन्द्र को भी वरणं नहीं करो, विष्णु के पास जावो इस प्रकार भय शान्ति करने के बहाने सभी देवताओं का खण्डन कर जिस विष्णु को मन्थन से डरी हुई लक्ष्मी को समुद्र ने प्रदान किया वह विष्णु तुम लोगों के पाप नष्ट करें।

अर्थशक्त्या यथा—

अम्बा शेतेऽत्र वृद्धा, परिणतवयसामग्रणीरत्र तातो,
निश्शेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा,
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम्॥

अन्वयः—अत्र, वृद्धा, अम्बा, शेते, अत्र, परिणतवयसाम्, अग्रणीः, तातः ( शेते ) तथा, अत्र निश्शेषागारकर्मश्रमशिथिलतनुः, कुम्भदासी ( शेते )

कतिपयदिवसप्रोषितप्राणनाथा, पापा, अहम्, अस्मिन् (स्थाने) (शये) इत्थम्, तरुण्या, अवसरव्याहृतिव्याजपूर्वं, पान्थाय, कथितम् ।

अर्थशक्त्युद्भवध्वनिमुदाहरति—अम्वेति । अत्र = गृहे, वृद्धा = जरती, अम्बा = माता, शेते = शयनं करोति, अत्र = अस्मिन् गृहे, परिणतवयसाम् = परिणतानि वयांसि येषां ते तेषाम् वृद्धानामित्यर्थः, अग्रणीः = अग्रगण्यः, तातः = पिता, शेते, अत्र = गृहे, निश्शेषागारकर्मश्रमशिथिलतनुः = निश्शेषाणि सर्वाणि यानि अगारस्य कर्माणि वस्त्वाहरणानि तैर्यः श्रमः खेदस्तेन शिथिला तनुर्यस्याः सा तादृशी, कुम्भदासी = जलभरणी दासी (शेते) अस्मिन् = गृहे, कतिपयदिवसप्रोषितप्राणनाथा = कतिपयैरेव दिवसैः प्रोषितः परदेशं गता प्राणनाथो यस्याः सा तादृशी, पापा = पापशीला, अहम् (शये) इत्थम् = अमुना प्रकारेण, तरुण्या = कयाचित् युवत्या, अवसरव्याहृतिव्याजपूर्वम् = समागमसमयकथनच्छलपूर्वकम्, पान्थाय कस्मैचित् पथिकाय, कथितम् = अभिहितम् ।

अत्र पित्रोर्वार्धक्यप्रदर्शनेन, दास्या श्रमशिथिलतनुवर्णनेन, नायिकायाश्च प्रोषितभर्तृकत्ववर्णनेन च तथा पृथक् पृथक् गृहशयनवर्णनेन च समागमसौन्दर्यं नायिकाया विहारशीलत्वं पथिकस्य भयानवसरत्वं, दास्याश्च कुम्भविशेषणदानेन परपुरुषविहारानभिज्ञत्वं च यद्यपि व्यज्यते किन्तु कविना व्याजशब्दोक्त्या व्यङ्ग्याविष्कारः कृत इति नैवार्थशक्त्युद्भवव्यङ्ग्यध्वनेरवसरः ।

अर्थ शक्ति का उदाहरण, जैसे—

इस घर में बूढ़ी माता सोती है, और इस घर में बूढ़ों के अग्रणी पिता जी सोते हैं, सारे घर का काम करने से अत्यन्त थकी हुई जल भरनेवाली दासी इस घर में सोती है, कुछ दिनों से जिसके पति परदेश चले गये हैं ऐसी अभागिनी अकेली मैं इस घर में रहती हूँ । इस प्रकार किसी युवती नायिका ने समागम के अवसर बताने के बहाने किसी राही को सोने का स्थान वर्णन किया ॥ २३ ॥

उभयशक्त्या यथा—"दृष्ट्या केशवगोपरागहृतया" इत्यादौ ।

शब्दार्थ शक्ति के उदाहरण, जैसे—'दृष्ट्या केशव' इस श्लोक में ।

प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥ २४ ॥

अन्वयः—अन्यस्य, वस्तुनः, दीपकः, अर्थः, अपि, प्रौढोक्तिमात्रनिष्पन्न-शरीरः, स्वतः सम्भवी, च, द्विविधः, व्यङ्ग्यस्य ।

व्यङ्ग्यार्थ के प्रकाशक अर्थ भी प्रौढोक्तिमात्रनिष्पन्नशरीर और स्वतः सम्भवी के भेद से दो प्रकार के होते हैं ॥ २४ ॥

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तः, तस्यापि द्वौ प्रकारौ । कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्न-शरीर एकः, स्वतः सम्भवी च द्वितीयः ।

कारिका का अर्थ वृत्तिकार स्वयं दिखाते हैं। अर्थशक्त्युद्भवरूप संलक्ष्य-क्रमव्यङ्ग्य ध्वनि में जो व्यञ्जक अर्थ कहा गया है उसके भी दो भेद हैं कवि या कविनिबद्धवक्ता की प्रौढोक्तिमात्र से सिद्ध और दूसरा स्वतः सम्भवी ।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

"सज्जेहि सुरहिमासो ण दाव अप्पेहि जुअहिजणलक्खमुहे ।
अभिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स शरे ॥"

(छाया) सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान् ॥

अन्वयः—सुरभिमासः, युवतिजनलक्ष्यमुखान्, अभिनवसहकारमुखान्, नवपल्लवपत्रलान्, अनङ्गस्य, शरान्, सज्जयति, न, तावत् ( केवलं ) अर्पयति ।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरमुदाहरति—सज्जयतीति । सुरभिमासः = चैत्र-मासः, युवतिजनलक्ष्यमुखान् = स्त्रीजनदर्शनीयाग्रभागान्, अभिनवसहकारमुखान् = नूतनाम्रवृक्षादीन्, नवपल्लवपत्रलान् = नवपल्लवाः किसलया एव पत्राणि पक्षाः तानि लान्ति गृह्णन्ति ये तान्, अनङ्गस्य = कामस्य शरान् = वाणान् सज्जयति = निर्माति, न, केवलं, तावत् अर्पयति = कामाय ददातीत्यर्थः ।

अत्र निश्चेतनो वसन्तो वाणविधाता कामदेवश्च धन्वी, आम्रमञ्जर्यादयो वाणाः युवतयो लक्ष्यानि, इत्यादिवस्तुरूपोऽर्थः कविप्रौढोक्तिमात्रसिद्धः । लोके न कामदेवस्य धानुष्कत्वं दृश्यते तदीयो वाणो दृश्यतेऽतः कविप्रौढोक्तिमात्रसिद्ध-वस्तुना मदनोन्मथनस्य प्रारम्भस्तथोत्तरोत्तरं तदीयोज्जृम्भणरूपं वस्तुव्यङ्ग्यं प्रति-भाति । अतः संलक्ष्यक्रमव्यङ्ग्यरूपार्थशक्त्युद्भवकविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तु-ध्वनेरुदाहरणमेतत् । स्कन्धकवृत्तमिदम् ।

कामदेव का मित्र वसन्त मास स्त्रीजनों के लक्ष्य बनाने वाले मुखों से युक्त, नवीन पल्लवरूपी पंखों से युक्त, आम्र वगैरह कामदेव के बाणों को बनाने वाला है केवल कामदेव को देता है नहीं।

यहाँ कामदेव को स्त्रियों पर वाण चलाते नहीं देखा है केवल कवि की प्रौढोक्ति से यह वस्तु सिद्ध है इसलिये कवि प्रौढोक्ति मात्र सिद्ध का उदाहरण है।

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथोदाहृतमेव—'शिखरिणि' इत्यादि।

यथा वा –

साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिम्।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुइ थणेहिम्॥

(छाया) सादरवितीर्णयौवनहस्तालम्बं समुन्नमद्भ्याम्।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम्॥

अन्वयः—सादरवितीर्णयौवनहस्तावलम्बं, समुन्नमद्भ्याम्, तव, स्तनाभ्याम्, मन्मथस्य, अभ्युत्थानम्, इव, दत्तम्।

सादरेति। काञ्चिन्नवयुवतीं प्रति विटस्योक्तिः। अयि! प्रिये! सादरवितीर्णयौवनहस्तावलम्बम् = सादरं सत्कारपूर्वकं वितीर्णः दत्तः हस्तयोरवलम्बो यत्र तद्यथा स्यात्तथा, समुन्नमद्भ्याम् = समुत्थानं प्राप्ताभ्याम्, तव = ते, स्तनाभ्याम् (कर्तृभ्याम्) मन्मथस्य = कामस्य, अभ्युत्थानमिव = उत्थाय सत्काररीतिम्, दत्तम् = कृतमिति भावः।

लोके नितरां स्वयमुत्थातुमसमर्थः कस्यचिद्धस्तावलम्बनं कृत्वा समागताय गुरवे समुत्थाय सदाचारं करोतीति तथैव स्वयमुत्थातुमसमर्थाभ्यां तव स्तनाभ्यां यौवनस्य हस्तावलम्बनं विधाय देवाय कामाय अभ्युत्थानं दत्तमिति समासोत्प्रेक्षयोः सङ्करः।

आदरपूर्वक सहारा देते हुए यौवन के सहारे उठने वाले तेरे दोनों स्तन उठकर कामदेव को अभ्युत्थान सत्कार प्रदान किया।

यहाँ स्तन पदार्थ को उठकर सत्कार करना तो असम्भव है किन्तु कवि निबद्धवक्ता की प्रौढ़ोक्ति से यह सिद्ध है इसलिये कवि निबद्धवक्तृ प्रौढोक्ति निष्पन्न शरीर का यह उदाहरण है।

स्वतः सम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः। यथोदाहृतम्—"एवंवादिनि" इत्यादि।

स्वतःसम्भवी उसको कहते हैं जो केवल कवि या कवि निबद्धवक्ता की प्रौढोक्ति ही से सिद्ध हो किन्तु बाहर उचितरूप से जिनका अस्तित्त्व की सम्भावना हो वह स्वतः सम्भवी कहलाता है। जिसका उदाहरण—"एवंवादिनि देवर्षौ" इस श्लोक में बता चुके हैं।

यथा वा—

'सिहिपिच्छकण्णपूरा जाआ वाहस्स गब्विरी भमइ।
मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणम्॥'

(छाया) शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम्॥

अन्वयः—शिखिपिच्छकर्णपूरा, व्याधस्य, जाया, मुक्ताफलरचितप्रसाधनानां सपत्नीनां, मध्ये, गर्विणी, भ्रमति।

शिखिपिच्छेति। शिखिपिच्छकर्णपूरा = शिखिनां मयूराणां पिच्छस्य कर्णपूरः कर्णभूषणं यस्याः सा तथोक्ता, व्याधस्य = सूतस्य, जाया = पत्नी, मुक्ताफलरचितप्रसाधनानाम् = मुक्ताफलैः रचितं प्रसाधनं भूषणं याभिस्तास्तासां, सपत्नीनाम् मध्ये गर्विणी = साभिमाना, भ्रमति = सञ्चरतीत्यर्थः।

अत्र सपत्नीनां मुक्ताफलप्राप्तिमन्तरा कर्णभूषणरचनाया असम्भवः, मुक्ताफलप्राप्तिस्तु दिवसे पत्युर्वनगमनं यत्ने हस्तिहननञ्चान्तराऽसम्भव अस्यास्तु दिवसेऽपि वनगमनमन्तरैवानायासेन भूषणप्राप्तिरिति स्वतःसम्भविसाभिमानव्याधवधूसपत्नीजनमध्यभ्रमणं वस्तुदिवसे सपत्नीनां प्रबलकामनया सम्भोगेच्छासत्वेऽपि पत्युर्विरहाद् दौर्भाग्यातिशयं व्याधवध्वास्तु दिवसेऽपि यत्नमन्तरैव भूषणप्राप्तौ प्रियेण साकं दिवसेऽपि रमणकार्य्ये सिद्धिरूपं वस्तुव्यनक्तीति स्वतःसम्भविवस्तुव्यङ्ग्यस्योदाहरणम्।

मोर पंख का केवल कर्णभूषण पहिनी हुई व्याध की पत्नी मुक्ताफल के भूषणों से सुशोभित सपत्नियों के अभिमान से भ्रमण कर रही है। तुम्हें दिन में पति के साथ विहार करने का अवसर नहीं है इसलिये तुम सबों का दौर्भाग्य है

मुझे तो घर ही में भूषण प्राप्त है और दिन में पतिविरह नहीं है यही अभिमान का कारण है।

इदानीं कवि-कविनिबद्धप्रौढोक्तिसिद्धस्वतःसम्भविभेदैस्त्रिविधत्वेऽपि वस्त्व-लङ्कारभेदैर्द्वादशधाऽर्थशक्त्युद्भवो ध्वनिरिति स्पष्टीक्रियते। तथा हि—

[१] कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिः
[२] कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यालङ्कारध्वनिः
[३] कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यवस्तुध्वनिः
[४] कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यालङ्कारध्वनिः
[५] कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिः
[६] कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यालङ्कारध्वनिः
[७] कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यवस्तुध्वनिः
[८] कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यालङ्कारध्वनिः
[९] स्वतःसम्भविवस्तुव्यङ्ग्यवस्तुध्वनिः
[१०] स्वतःसम्भविवस्तुव्यङ्ग्यालङ्कारध्वनिः
[११] स्वतःसम्भव्यलङ्कारव्यङ्ग्य वस्तुध्वनिः
[१२] स्वतःसम्भव्यलङ्कारव्यङ्ग्यालङ्कारध्वनिः

अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥२५॥

अन्वयः—यत्र, अन्यः, अलङ्कारः, अपि, अर्थशक्तेः, प्रतीयते, सः, अनु-स्वानोपमव्यङ्ग्यः, ध्वनेः, अपरः, प्रकारः ॥२५॥

वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारोऽर्थसामर्थ्यात् प्रतीयमानो-ऽवभासते, सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्योऽपरो ध्वनिः।

कारिकार्थं स्वयमेव वृत्तिकारो विवृणुते वाच्यालङ्कारेति।

वाच्यालङ्कार से भिन्न जहाँ अन्य अलङ्कार अर्थ सामर्थ्य से प्रतीत होता है वह संलक्ष्यक्रम व्यङ्ग्य ध्वनि का अलङ्कार से अलङ्कार व्यङ्ग्यरूप दूसरा ध्वनि का भेद है ॥२५॥

तस्य प्रविरलविषयमाशङ्क्येदमुच्यते—

रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः ।
स सर्वो गम्यमानत्वं बिभ्रद्भूम्ना प्रदर्शितः ॥२६॥

अन्वयः—यः, रूपकादिः, अलङ्कारवर्गः, वाच्यतां, श्रितः, सः, सर्वः गम्यमानत्वं, बिभ्रद्, भूम्ना, प्रदर्शितः ।

अर्थ शक्ति मूल अलङ्कार से अलङ्कारव्यङ्ग्य ध्वनि का प्रविरल विषय की आशङ्का में यहाँ कहा जाता है—

जो रूपकादि अलङ्कार समूह वाच्यरूप से प्रतीत होते हैं वे सब व्यञ्जकत्व को बतलाने वाले हैं उन्हें भट्टोद्भटादि ने बहुत दिखाये हैं ॥२६॥

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः । तथा च सन्देहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम् ।

अन्य उदाहरणों में वाच्यरूपेण जो प्रसिद्ध रूपकादि अलङ्कार समूह है वे अन्य जगहों में प्रतीयमान रूप से भट्टोद्भटादिने बहुत दिखाये हैं । अतः सन्देहादि अलङ्कारों में उपमा-रूपक-अतिशयोक्ति अलङ्कारों का प्रकाशमानत्व ( प्रतीयमानत्व ) दिखाया गया है इसलिये अलङ्कारान्तर का अलङ्कारान्तर में व्यङ्ग्यत्व यत्न साध्य नहीं है अर्थात् विना यत्न ही के सिद्ध हैं ।

इयत्पुनरुच्यत एव—

अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥ २७ ॥

अन्वयः—यत्र, अलङ्कारान्तरस्य, अपि, प्रतीतौ, वाच्यस्य, तत्परत्वं, न, भासते, असौ, ध्वनेः, मार्गः, न, मतः ।

यत्र = काव्ये, अलङ्कारान्तरस्यापि = वाच्यव्यतिरिक्तालङ्कारस्यापि, प्रतीतौ = प्रतीयमानत्वे, वाच्यस्य = वाच्यार्थस्य, तत्परत्वं = व्यङ्ग्यपरत्वम् न, भासते = प्रकाशते, असौ, ध्वनेः = अनुरणनव्यङ्ग्यस्य, मार्गः = विषयः, न, मतः = सम्मतः, किन्तु गुणीभूतव्यङ्ग्यस्यैव विषय इत्यर्थः ।

जिस काव्य में वाच्य से भिन्न अलङ्कार की प्रतीति होनेपर भी वाच्यार्थ

व्यङ्ग्य प्रकाशक नहीं हो वह अनुस्वानोपमव्यङ्ग्य ध्वनि का विषय नहीं है। वह गुणीभूत व्यङ्ग्य का विषय है ॥ २७ ॥

कारिकार्थं स्वयमेव वृत्तिकारो विशदीकरोति—

अलङ्कारान्तरस्यापि रूपकादेरलङ्कारस्य प्रतीतौ सत्यामपि, यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते, नासौ ध्वने-र्मार्गः । तथा च—दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि, तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः ।

रूपकादि अलङ्कार के अन्य अलङ्कार की प्रतीति होने पर भी जहाँ वाच्यार्थ के व्यङ्ग्य प्रकाशन द्वारा चारुत्व ( शोभा ) प्रतीत नहीं हो वह ध्वनि का मार्ग ( विषय ) नहीं है। अतः दीपक तुल्ययोगिता अपह्नुति-रूपक स्मरण प्रभृति अलङ्कारों में उपमा के प्रतीयमान होने पर भी व्यङ्ग्यपरत्वेन चारुत्व की व्यवस्था नहीं रहने से ध्वनि व्यवहार नहीं होता।

यथा—

चन्दमऊएहि णिसा णलिनी कमलेहि कुसुमगुच्छेहि लआ।
हंसेहि सरअसोहा कव्वकहा सज्जनेहि करइ गरुई ॥

( छाया ) चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता।
हंसैश्शारदशोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥

अन्वयः—स्पष्ट एव।

चन्द्रमयूखैः = इन्दुकिरणैः, निशा = रात्रिः, कमलैः = पद्मैः, नलिनी = कमलिनी, कुसुमगुच्छैः = पुष्पस्तवकैः, लता = वल्ली, हंसैः = तदाख्यैः पक्षिभिः, शारदशोभा = शरत्कालीनकान्तिः, सज्जनैः = सहृदयैः, काव्यकथा = काव्यस्य कथनं, गुर्वी = श्रेष्ठा, क्रियते = विधीयते, इत्यर्थः ।

चन्द्रमा की किरणों से रात्रि का गौरव, कमलों से कमलिनी का गौरव, फूलों के गुच्छों से लता का गौरव, हंसों से शरदृतु की शोभा का गौरव, सज्जनों से काव्य कथा का गौरव बढ़ता है।

यहाँ चन्द्रकिरणादि अप्रस्तुत कर्ता है और सज्जन प्रस्तुत कर्ता है, तथा निशादि अप्रस्तुत कर्म है काव्यकथा प्रस्तुत कर्म है किन्तु गरुकरण रूप एक धर्म

के सम्बन्ध से रूपक की प्रतीति होती है किन्तु चन्द्रकिरणादि के सज्जनों के साथ निशादि के काव्यकथा के साथ किसी सम्बन्ध के बिना वाच्य की प्रतीति असम्बद्ध सी मालूम पड़ती है इसलिये जिस प्रकार चन्द्रमा की किरणों से रात्रि का गौरव है उसी प्रकार सज्जनों से काव्यकथा का गौरव है इस प्रकार उपमानोपमेयभाव की कल्पना अवश्य करनी होगी। अतः व्यङ्ग्योपमा के वाच्य के ही चमत्कारित्व होने से अङ्गत्वेन प्रतीयमान है, इसलिये ध्वनि नहीं कहा जा सकता।

तस्मात्तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः।

इसलिये वहाँ वाच्यालङ्कार मुख ही से काव्यव्यपदेश युक्त है।

यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानम्, तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः।

यथा—

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्याते वितर्कानिति दधत इवाभाति कम्पः पयोधेः॥

अन्वयः—एषः, प्राप्तश्रीः, मयि, तं, मन्थखेदं, पुनरपि, कस्मात्, विदध्यात्, अनलसमनसः, अस्य, पूर्वां, निद्राम्, अपि, नैव, सम्भावयामि, सकलद्वीपनाथानुयातः, भूयः, किमिति, सेतुं, बध्नाति, इति, त्वयि, आयाते, वितर्कान्, दधतः, इव, पयोधेः, कम्पः, आभाति।

प्राप्तश्रीरिति। कस्यचिच्चाटुकारस्य राजानं प्रत्युक्तिः। एषः = राजा, प्राप्तश्रीः = संप्राप्तलक्ष्मीकः, मयि = समुद्रे, तम् = अनुभूतपूर्वं, मन्थखेदम् = मन्दराचलपरिपीडनम्, पुनरपि, कस्मात् = कस्मै प्रयोजनाय, विदध्यात् = कुर्य्यात्, अनलसमनसः = आलस्यरहितहृदयस्य, अस्य = राज्ञः, पूर्वां निद्रामपि, समुद्रशयनेच्छाम्, नैव, सम्भावयामि = अनुमिनोमि, सकलद्वीपनाथानुयातः = निखिलद्वीपाधिपतिसहितः, (अयम्) भूयः = पुनः, किमिति = किमर्थं, सेतुं बध्नाति, इति = एवं, आयाते = आगते, सति, वितर्कान् = सन्देहान्, दधतः = धारयतः इव, पयोधेः = समुद्रस्य, कम्पः = कम्पनम्, आभाति = लक्ष्यत इत्यर्थः।

अत्र सन्देहोत्प्रेक्षयोः सङ्करः, राज्ञश्च भगवत्साम्यं प्रतीयत इति रूपकध्वनिश्च कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यः।

यह राजा तो धनवान् है ही फिर यह पहला मन्थन दुःख मुझे किस कारण देगा ? इस समय आलस्यरहित राजा की पहली नींद भी मैं नहीं समझता हूँ। सारे द्वीपों के राजाओं के साथ फिर भी दुबारा यह क्यों करेगा ? हे राजन्! तुम्हारे आने पर इस प्रकार सन्देह करता हुआ की तरह समुद्र का कम्पन मालूम पड़ रहा है।

यहाँ समुद्र में स्वाभाविक अथवा चन्द्रोदय निमित्त जलचाञ्चल्यरूप कम्प में राजा को देखकर मथन-सेतुबन्ध का संदेह होता है तन्निमित्तक उत्प्रेक्षा है। अतः संदेह और उत्प्रेक्षा का संकर है। तथा राजा में वासुदेवत्व आरोप होने से रूपकालङ्कार व्यङ्ग्य है। इसलिये कवि प्रौढोक्तिसिद्धव्यङ्ग्यालङ्कार से अलङ्कार ध्वनि का उदाहरण है।

यथा वा ममैव—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि !।
क्षोभं यदेति न मनागपि तेन मन्ये,
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

अन्वयः—हे तरलायताक्षि !, अधुना, लावण्यकान्तिपरिपूरितदिङ्मुखे, अस्मिन्, तव, मुखे, स्मेरे, यत्, मनाक्, अपि, क्षोभं, न, एति, तेन, मन्ये, अयं, पयोधिः, जलराशि, ( इति ) सुव्यक्तम्, एव।

हे तरलायताक्षि ! = चञ्चलनयने !, अधुना = साम्प्रतं, लावण्यकान्तिपरिपूरित-दिङ्मुखे = सौन्दर्य्यदीप्तिधवलितदिङ्मुखे, अस्मिन् = दृश्यमाने, तव, मुखे = वदने, स्मेरे = ईषद्विहसिते ( सति ) यत् = यस्माद्धेतोः, मनाक् अपि = ईषदपि, क्षोभं = चाञ्चल्यं, न, एति = प्राप्नोति, तेन = हेतुना, अयं, पयोधिः = समुद्रः, सुव्यक्तमेव = सुस्पष्टमेव, जलराशिः = जलसमूहः, डलयो रलयोश्चैकत्वस्मरणात्, जडराशिश्चेनि मन्ये।

अत्र श्लेषोज्जीवित उत्प्रेक्षालङ्कारो वाच्यः। शोभाप्राप्त्या च त्वन्मुखं चन्द्र इवेति रूपकालङ्कारध्वनिश्च।

हे चञ्चल नेत्र वाली प्रिये! सौन्दर्य्य और कान्ति से दिशाओं को पूर्ण कर देने वाले तुम्हारे मुख के मन्दमुसकान युक्त होने पर भी इस समुद्र में तनिक भी चञ्चलता नहीं दिखाई देती है। इस से स्पष्ट प्रतीत होता है कि यह समुद्र नित जल राशि है और जाड्य का समूह मात्र है।

इत्येवंविधे विषयेऽनुरणनरूपरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद् रूपकध्वनिरिति व्यपदेशो न्याय्यः।

ऐसे ऐसे विषयों में अनुरणनरूप रूपक के आश्रयण से काव्य का चारुत्व व्यवस्थित होने से रूपक ध्वनि का व्यवहार युक्त है।

उपमाध्वनिर्यथा—

वीराणं रमइ घुसिणरुणम्मि ण तदा पिआथणुच्छङ्गे।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दुरे॥

(छाया) वीराणां रमते घुस्टणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा वहलसिन्दुरे॥

अन्वयः—विराणां, दृष्टिः, घुसृणारुणे, प्रियास्तनोत्सङ्गे न, तथा, रमते, यथा, वहलसिन्दुरे, रिपुगजकुम्भस्थले, रमते।

वीराणामिति! वीराणां = शूराणां, दृष्टिः, घुसृणारुणे = कुंकुमरक्ते, प्रियास्तनोत्सङ्गे = प्रियाकुचतटे, तथा, न, रमते = नैवानन्दं प्राप्नोति, यथा बहलसिन्दुरे = सिन्दूरप्रचुरे, रिपुगजकुम्भस्थले = शत्रुगजकुम्भस्थले, रमते। वीराणामेष एव स्वभाव इति तात्पर्य्यम्। अत्र वाच्यो व्यतिरेका उपमा च व्यङ्ग्यम्।

वीरों की दृष्टि प्रियतमा के कुंकुम से रक्तस्तनों में उतनी नहीं रमती जितनी सिन्दूर से पुते हुए शत्रुओं के हाथियों के मस्तक में रमती है।

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

तं ताण सिरिसहोअररअणाहरणम्मि हिअमेक्करसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन॥

(छाया) तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

अन्वयः—तेषाम्, श्रीसहोदररत्नाहरणे, एकरसम्, यत्, हृदयं, (तत्) प्रियाणां, बिम्बाधरे, कुसुमबाणेन, निवेशितम् ।

तत्तेषामिति । तेषाम् = असुराणाम्, श्रीसहोदररत्नाहरणे = श्रिया लक्ष्म्याः सहोदरस्य रत्नस्य कौस्तुभमणेः आहरणे ग्रहणे, एकरसं = तत्परम्, यत्, हृदयम् = चित्तम्, तत्, कुसुमबाणेन = कामेन प्रियाणां = प्रियतमानाम्, बिम्बाधरे = बिम्बतुल्येऽधरे, निवेशितम् = आसञ्जितमित्यर्थः ।

अत्र वाच्यातिशयोक्त्यलङ्कारेण कौस्तुभमणिप्रियाबिम्बाधरयोरौपम्यं ध्वन्यते ।

लक्ष्मी के सहोदर कौस्तुभमणि के ग्रहण में तत्पर उन राक्षसों का हृदय जो है वह तो मानो प्रियतमा के अधरपान के आस्वादन में कामदेव ने तत्पर बना दिया ।

आक्षेपध्वनिर्यथा—

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

अन्वयः—सः, हयग्रीवाश्रितान्, अखिलान्, गुणान्, वक्तुम्, शक्तः, यः, अम्बुकुम्भैः, महोदधेः, परिच्छेदं, ज्ञातुं, शक्तः ।

स वक्तुमिति । सः = स एव, हयग्रीवाश्रितान् = हयग्रीवासुरनिष्ठान्, अखिलान् = सम्पूर्णान्, गुणान् = गुणसमूहम्, वक्तुं = वर्णयितुं, शक्तः = समर्थो भवेत्, यः, अम्बुकुम्भैः = पयोघटैः, महोदधेः = समुद्रस्य, परिच्छेदं = परिमाणं, ज्ञातुं = वेत्तुम्, शक्तः = समर्थो भवेदित्यर्थः ।

अत्र समुद्रस्य परिमाणं यथा जलकुम्भैः कर्तुमशक्यं तथैव हयग्रीवगुणा अपि वर्णयितुमशक्या इति वाच्यातिशयोक्त्या निदर्शनया वा हयग्रीवगुणानां वर्णननिषेधादाक्षेपालङ्कारो व्यज्यते ।

वही हयग्रीव के सम्पूर्ण गुणों का वर्णन कर सकता है जो घड़े से समुद्र का परिमाण कर सकता है ।

यहाँ घड़े से समुद्र का परिमाण होना जैसे असम्भव है वैसा ही हयग्रीव के

सम्पूर्ण गुणों का वर्णन होना असम्भव है। इस अतिशयोक्तिद्वारा आक्षेपालङ्कार की ध्वनि है।

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्यासाधारण-तद्विशेषप्रतिपादनपरस्याक्षेपस्य प्रकाशनम्।

यहाँ अतिशयोक्ति अलङ्कार से हयग्रीव के सम्पूर्ण गुणों की अवर्णनीयता-प्रतिपादनरूप असाधारण विशेषता प्रकाशनपरक आक्षेप का प्रकाशन है इसलिये कवि प्रौढोक्तिसिद्धव्यङ्ग्य अलङ्कार से अलङ्कार आक्षेपध्वनि का उदाहरण स्पष्ट है।

अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च सम्भवति।

तत्राद्यस्योदाहरणम्—

'देव्वाएत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो।
कङ्किल्लपल्लवाः पल्लवाणं अण्णाणं ण सरिच्छा॥

(छाया) दैवायत्ते फले किं क्रियतामेतावत्पुनर्भणामः।
रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृशाः॥

अन्वयः—स्पष्ट एव।

दैवायत्त इति। फले = कर्तव्यफले, दैवायत्ते = दैवाधीने, किं क्रियताम् = किमस्माभिर्विधेयमित्यर्थः, एतावत् = इयन्मात्रम्, पुनः, भणामः = कथयामः, रक्ताशोकपल्लवाः = वकुलपल्लवाः, अन्येषाम् = आम्रादिवृक्षाणां न, सदृशाः = तुल्या इत्यर्थः।

फल भाग्याधीन है इसमें हम क्या करें फिर भी इतना तो कहते हैं कि रक्ताशोक वृक्ष के पल्लव अन्य पल्लवों के समान नहीं होते किन्तु सबों से विशिष्ट हैं।

यहाँ सब होते हुए भी धन होना भाग्याधीन है यह सामान्यार्थ अभिधामूल व्यञ्जना द्वारा प्रतीत होता है इसलिये अभिधामूल अर्थान्तर न्यास ध्वनि है।

पदप्रकाशश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्य्येऽपि सति न विरोधः।

यह ध्वनि पदप्रकाश्य भी हो सकता है। इसलिये वाक्य के अर्थान्तर में अर्थात् अप्रस्तुत प्रशंसा में तात्पर्य होनेपर भी कोई विरोध नहीं होता।

द्वितीयस्योदाहरणं यथा—

हिअअट्ठाविअमण्णुं अवरुण्णमुहं हि मं पसाअन्त ।
अवरद्धस्स वि ण हु दे पहुजाणअ रोसिउं सक्कम्म ॥

( छाया ) हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन् ।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम् ॥

अन्वयः—हे, बहुज्ञ ! हृदयस्थापितमन्युम्, अपरोषमुखीम्, अपि, माम्, प्रसादयन् ( असि ) ( अतः ) अपराद्धस्य, अपि, ते, रोषितुं, न, शक्यम् ।

हृदयेति । हे बहुज्ञ ! पराभिप्रायविद्, हृदयस्थापितमन्युम् = हृदये चित्ते स्थापितो मन्युः क्रोधो यया सा ताम्, अपरोषमुखीम् = क्रोधविरहितमुखीम्, अपि, माम्, प्रसादयन् = प्रसन्नां कुर्वन्नसि यतः, अतः, अपराद्धस्यापि = कृतापराधस्यापि, ते = तवोपरि, रोषितुं = क्रोद्धुम् न, शक्यम् ।

अत्रापराद्धस्यापि बहुज्ञस्योपरि क्रोधो न कर्तव्य इति व्यञ्जनागम्यमर्थसामान्यं समर्थयतीत्यर्थशक्तिमूलोऽर्थान्तरन्यासध्वनिः । शब्दानां परिवर्तनसहत्वेनार्थशक्तिमूलत्वम् ।

द्वितीय अर्थ शक्ति मूल संलक्ष्य क्रम का उदाहरण, जैसे—हृदय में क्रोध रहने पर भी मुख पर क्रोध नहीं प्रकट करने वाली मुझे तुम प्रसन्न कर रहे हो, इसलिये हे सर्वज्ञ ! तुम्हारे अपराधी होने पर भी क्रोध करना ठीक नहीं ।

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य कोपः कर्तुमशक्य इति समर्थकमर्थसामान्यमन्वितमन्यत्तात्पर्येण प्रकाशते ।

यहाँ वाच्यार्थविशेष से बहुत जानने वाले के ऊपर सापराध होने पर भी क्रोध करना ठीक नहीं यह समर्थक अर्थ सामान्य तात्पर्य्य से सम्बद्ध अन्य तात्पर्य्य को अभिव्यक्त करता है ।

व्यतिरेकध्वनिरप्युभयरूपः सम्भवति । तत्राद्यस्योदाहरणं प्राक् प्रदर्शितमेव । द्वितीयस्योदाहरणं यथा—

जाएज्ज वणुद्देसे खुज्ज च्चिअ पाअवो घाडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥

( छाया ) जायेय वनोद्देशे कुब्ज एव पादपोऽघटितपत्रः ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥

अन्वयः—वनोद्देशे, कुब्जः, इव ( एव ) गलितपत्रः, पादपः, जायेय, ( किन्तु ) मानुषे, लोके, अघटितपत्रः, दरिद्रश्च, मा जायेय।

जायेयेति। वनोद्देशे = सघनकानने, कुब्जः = स्तम्भाद्ययोग्यः, अघटितपत्रः = अजातपत्रत्वेन फलपुष्पाशारहितः, पादपः = वृक्षः ( उत्पन्नो ) जायेय = भवेयम् ( इति वरम् ) ( किन्तु ) मानुषे लोके = मर्त्यलोके, त्यागैकरसः = दानशीलः, दरिद्रः = निर्धनः, मा भूवन्नित्यर्थः।

घनघोरजङ्गल में ( जिससे कोई देख न सके ) खङ्खोर कुबड़ा ( जिसका कोइ खंडा नहीं हो सके ) जिसमें पत्ते तक नहीं लग सका है ( फलफूल की आशा तो दूर रहीं ) वैसा वृक्ष होकर रह जाऊँ तो रहूँ किन्तु मनुष्यलोक में दानशील होकर दरिद्र रहना ठीक नहीं।

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनम्। अघटितपत्रकुब्जपादपजन्माभिनन्दनञ्च साक्षाच्छब्दवाच्यम्। तथाविधादपि पादपात्तादृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति।

यहाँ दानशील दरिद्र पुरुष की निन्दा और पत्रहीन कुबड़ा वृक्ष के जन्म की प्रशंसा साक्षात् शब्दवाच्य है। और उस प्रकार के वृक्ष से उस प्रकार के पुरुष की शोचनीयता में आधिक्य उपमानोपमेयभाव की प्रतीति पूर्वक तात्पर्य रूप से प्रकाशित करता है। इसलिये अर्थशक्ति मूलक व्यतिरेक ध्वनि है।

उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिश्श्वासानलमूर्च्छितः।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः॥

अन्वयः—चन्दनासक्तभुजगनिश्श्वासानलमूर्च्छितः, एषः, मलयमारुतः, मधौ, पथिकान्, मूर्च्छयति।

चन्दनेति—चन्दने = श्रीखण्डचन्दने आसक्ता ये भुजगाः सर्पास्तेषां निश्वासानिलैः श्वासमारुतैर्मूर्च्छितो वर्धितः, एषः, मलयमारुतः = प्रलयपवनः, मधौ = वसन्ते, पथिकान् = पान्थान्, मूर्च्छयति = मोहं प्रापयतीत्यर्थः।

चन्दनवृक्ष में लिपटे हुए सर्पों के निश्वासवायु से बढाहुआ मलयाचल की हवा बसन्त काल में पथिकों को मूर्च्छित कर देती है।

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारित्वं मन्मथोन्माथदायित्वेनैव। तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते।

यहाँ वन्तकाल में कामोद्दीपन द्वारा ही मलयाचल की हवा पथिकों को मूर्च्छा करने वाली है। किन्तु चन्दनों में लिपटे हुए सर्पों की निश्श्वासवायु से बढ़ जाने के कारण उत्प्रेक्षित है इस लिये उत्प्रेक्षालङ्कार साक्षात् नहीं कहेजाने पर भी वाक्यार्थ सामर्थ्य से अनुरणनरूप व्यङ्ग्य प्रतीत होता है।

न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासम्बद्धतैवेति शक्यते वक्तुम्। गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात्। यथा--

ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ॥

( छाया ) ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति॥

अन्वयस्तु—स्पष्ट एव।

प्रियां प्रसादयतः कस्यचिन्नायकस्योक्तिः। ईर्ष्येति। अयि! प्रिये, एषः = दृश्यमान् पूर्णिमाचन्द्रः, ईर्ष्याकलुषस्य = सपत्नीविषयकेर्ष्यया कलुषस्य रक्तस्य तव मुखस्य = त्वदाननस्य, सदृशत्वं = समानत्वं, अद्य = इदानीम्, प्राप्य = आसाद्य, अङ्गे = निजाङ्गे, एव, न, माति = न स्थानत्वं प्राप्नोति।

हे प्रिये! यह पूर्णिमा के चाँद सौतिन की ईर्ष्या से मलिन तुम्हारे मुख की भी समानता को पाकर आज मानो अपने शरीर में फूले नहीं समाता।

यथा वा—

त्रासाकुलः परिपतन् परितो निकेतान्,
पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथापि न मृगः क्वचिदङ्गनाना-
माकर्णपूर्णनयनेषुहतेक्षणश्रीः॥

अन्वयः—त्रासाकुलः, निकेतान्, परितः, परिपतन्, मृगः, कैश्चित्,

अपि, धन्विभिः, पुम्भिः, न, अन्वबन्धि, तथापि, अङ्गनानाम्, आकर्णपूर्णनयनेषुहृतेक्षणश्रीः, मृगः, क्वचित्, अपि, न, तस्थौ ।

त्रासाकुल इति । शिशुपालवधस्य पञ्चमसर्गस्थं पद्यमेतत् । त्रासाकुलः = भयाकुलः, निकेतान् = सेनानिवेशान् परितः = अभितः, परिपतन् = धावन् मृगः = हरिणः कैश्चित्, धन्विभिः = धानुष्कैः, पुम्भिः = मनुष्यैः, न, अन्वबन्धि = अनुबद्धः, तथापि, अङ्गनानाम् = नारीणाम्, आकर्णपूर्णनयनेषुहृतेक्षणश्रीः = आकर्णपूर्णा कर्णपर्य्यन्तमाकृष्टा नयनान्येव इषवः बाणास्तैर्हृता ईक्षणानां नेत्राणां श्रीः शोभा यस्य सः, क्वचित् = कुत्रापि, न, तस्थौ = स्थितवानित्यर्थः ।

अत्रेवशब्दमन्तरापि किलोत्प्रेक्षा व्यज्यते ।

भय से व्याकुल, सेनाओं के निवेशस्थलों के चारो ओर घूमते हुए इस हिरण को किसी धनुर्धारी ने नहीं पीछा किया तो भी स्त्रियों के कानों तक फैले हुए नेत्रों के बाणों से नेत्रों की शोभा जीत लेने के कारण ही नहीं ठहर सका ।

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम् ।

शब्द और अर्थ के व्यवहार में प्रसिद्धि ही प्रतीति का कारण होता है ।

श्लेषध्वनिर्यथा—

रम्या इति प्राप्तवतीः पताकाः रागं विविक्ता इव वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥

अन्वयः—स्पष्ट एव ।

रम्या इति । माघकवेर्द्वारकावर्णनपरं पद्यमेतत् । यस्यां = द्वारकायां, रम्याः = मनोहराः, इति = हेतोः, पताकाः = ध्वजान् ( पक्षे ) प्रसिद्धीः, प्राप्तवतीः = प्राप्ताः, विविक्ताः = विजनाः, ( पक्षे ) विमलाः, इति हेतोः, रागं = रमणाभिलाषं, वर्धयन्तीः, नमद्वलीकाः = नमन्ति नम्राणि वलीकानि नीध्राणि यासु ताः, ( पक्षे ) नमन्त्यः वल्ल्यस्त्रिवलयो यासां ताः, वलभीः = गोपानसीः ( गोपानसी तु वलभी इत्यमरः ) वधूभिः = स्त्रीभिः, समं = साकं, युवानः = कामुकाः, असेवन्त = आश्रयन्त ।

जिस द्वारका पुरी में नवयुवक लोग रमणीयता के कारण प्रसिद्ध, एकान्त तथा शुद्ध वेष होने से अनुराग बढ़ाने वाली, त्रिवली युक्त अपनी वधुओं के

साथ रमणीय होने के कारण पताकाओं से अलङ्कृत, एकान्त होने से कामोद्दीपक, और झुके हुए छज्जों से युक्त अपने कूटागारों का सेवन किया।

अत्र बधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं बध्व इव बलभ्य इति श्लेषप्रतीतिरशब्दाऽप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्तते।

यहाँ बधुओं के साथ कूटागारों का सेवन करते थे इस वाक्यार्थ प्रतीति के बाद बधुओं के समान कूटागार इस श्लेष की प्रतीति शब्द से आक्षिप्त नहीं होने पर अर्थ सामर्थ्य से मुख्यरूप से है इसलिये स्वतः सम्भवी वस्तु से अलङ्कार व्यङ्ग्यरूप श्लेष ध्वनि है।

यथासङ्ख्यध्वनिर्यथा—

अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः।
अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः॥

अन्वयः—स्पष्ट एव।

अङ्कुरित इति। वसन्तवर्णनपरमिदं पद्यम्। यथा सहकारः=आम्रवृक्षः, अङ्कुरितः=समुत्पन्नाङ्कुरः, पल्लवितः=जातपल्लवः, कोरकितः=जातकुड्मलः, पुष्पितश्च=प्राप्तमञ्जरीकश्च अभूत् तथा युवकानां हृदि=हृदये, मदनः=कामः, प्रथमम्, अङ्कुरितः=ईषदुद्भूतः, पल्लवितः=लब्धकिञ्चिदुच्छ्रयः, कोरकितः=मनोरथाविष्टः, पुष्पितः=सम्पन्नविकासश्चाभूदित्यर्थः।

अत्र वसन्तवर्णने प्रस्तुतयोः कामसहकारयोरङ्कुरणाद्येकधर्मयोगितया तुल्ययोगितालङ्कारः, उभयोर्युगपदेवाङ्कुरणादिना समुच्चयालङ्कारश्च वाच्यमुखेनैव प्रतीयते। पश्चात्क्रमस्योपलक्षितत्वेन यथासंख्यालङ्कारश्च ध्वन्यते।

जिसप्रकार पहले आम्रवृक्ष में अङ्कुर निकलते हैं बाद पल्लव हो आते हैं फिर कली निकल आती है तब मञ्जरियाँ हो आती हैं उसी प्रकार युवकों के हृदय में कामदेव पहले अङ्कुरसा बाद पल्लवसा बाद मनोरथपूर्ण बाद विकसित हो आता है।

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्याद्‌तिरिच्यमानमालक्ष्यते। एवमन्येऽप्यलङ्कारा यथायोगं योजनीयाः।

यहाँ यथोद्देश ( पूर्वक्रमानुसार ). अङ्कुरितादि शब्दों का अन्यद्देश ( उसी क्रम से दुबारा कहे जाने पर कामदेव का विशेषणभूत अङ्कुरितादिशब्दगत जो अनुरणनरूप चारुत्वप्रतीत है वह कामदेव और सहकार के तुल्ययोगिता या समुच्चय लक्षण वाच्यसे उत्कृष्ट मालूम पड़ता है इसलिये स्वतः सम्भवी अलङ्कार से अलङ्कार व्यङ्ग्य यथासंख्य अलङ्कार ध्वनि स्पष्ट ही है। इसी प्रकार और भी अलङ्कार स्वयं ऊहनीय है।

एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते—

शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम्।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥ २८ ॥

अन्वयः—येषाम्, वाच्यत्वे, शरीरीकरणं, न, व्यवस्थितम्, ते, अलङ्काराः, ध्वन्यङ्गतां, गता, परां, छायां, यान्ति।

शरीरीकरणमिति। येषाम् = अलङ्काराणाम्, वाच्यत्वे = वाच्यदशायाम्, शरीरीकरणम् = अङ्गीकरणम्, न, व्यवस्थितम् = निश्चितम्, ते, अलङ्काराः, ध्वन्यङ्गतां = ध्वनेर्व्यङ्ग्यतां, गताः, पराम् = उत्कृष्टां छायाम् = शोभां, यान्ति = प्राप्नुवन्तीत्यर्थः।

जिन अलङ्कारों की वाच्यावस्था में शरीर शरीरत्व निश्चित नहीं है वे ध्वनि के व्यङ्ग्यरूपता को प्राप्तकर अत्यन्त शोभा की प्राप्ति करते हैं ॥ २८ ॥

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां, व्यञ्जकत्वेन व्यङ्ग्यत्वेन च। तत्रेह प्रकरणाद् व्यङ्ग्यत्वेनेत्यवगन्तव्यम्। व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः। इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते। अङ्गित्वेन व्यङ्ग्यतायामपि अलङ्काराणां द्वयी गतिः। कदाचिद्वस्तुमात्रेण व्यज्यन्ते कदाचिदलङ्कारेण। तत्र—

ध्वन्यङ्गता भी दो प्रकार से होती है। व्यञ्जकरूप से और व्यङ्ग्यरूप से। उन में से यहाँ प्रकरणवश व्यङ्ग्यतया ही ध्वन्यङ्गता समझनी चाहिये। व्यङ्ग्यत्व में भी अलङ्कारों की प्राधान्य विवक्षा रहने पर ध्वनि में अन्तर्भाव हो सकता है। अन्यथा प्राधान्यविवक्षा नहीं होने पर गुणीभूतव्यङ्ग्यत्व होता है यह आगे कहेंगे।

अलङ्कारों के प्रधानतया व्यङ्ग्य होने में भी दो प्रकार हैं। कभी वस्तुमात्र से कभी अलङ्कार से। उनमें से—

व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा।

ध्रुवं ध्वन्यङ्गता तासां,

अत्र हेतुः—

काव्यवृत्तेस्तदाश्रयात् ॥ २९ ॥

यस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेन काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्।

तासामेवालङ्कृतीनाम्—

अलङ्कारान्तरव्यङ्ग्यभावे,

पुनः—

ध्वन्यङ्गता भवेत्।

चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ ३० ॥

अन्वयः—यदा, वस्तुमात्रेण, अलङ्कृतयः, व्यज्यन्ते, तदा तासां काव्यवृत्ते-स्तदाश्रयात् ध्रुवं, ध्वन्यङ्गता, भवेत्, तासामेवालङ्कृतीनाम्, अलङ्कारान्तर-व्यङ्ग्यभावे, पुनः, चारुत्वोत्कर्षतः, यदि, व्यङ्ग्यप्राधान्यं, लक्ष्यते, (तदा) ध्वन्यङ्गता, भवेत् ॥२९ ३०॥

कारिकयोरेतयोर्व्याख्या तु स्पष्टैव।

अलङ्कार जब वस्तुमात्र से व्यङ्ग्य होते हैं तब उसकी ध्वन्यङ्गता निश्चित ही है। इसका कारण यह है कि काव्य का व्यापार ही उस अलङ्कार के आश्रित है ॥२९॥

क्योंकि वहाँ उस प्रकार के व्यङ्ग्यालङ्कार के बोधन ही के लिये काव्यप्रवृत्त हुआ है। अन्यथा तो वह केवल वाक्यमात्र रह जायगा।

उन्हीं अलङ्कारों की—

दूसरे अलङ्कारों से व्यङ्ग्य होने पर,

फिर—

यदि चारुत्व के उत्कर्ष से व्यङ्ग्य की प्रधानता प्रतीत होती है तो ध्वन्यङ्गता होती है ॥३०॥

उक्तं ह्येतत्–'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति । वस्तुमात्रव्यङ्ग्यत्वे चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः। तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वाऽर्थेन, अर्थान्तरस्यालङ्कारस्य वा प्रकाशने, चारुत्वोत्कर्षनिबन्धने सति प्राधान्ये, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः ।

यह कहा भी गया है कि वाच्य और व्यङ्ग्य के प्राधान्य की विवक्षा चारुत्व के उत्कर्ष के कारण ही होती है। वस्तुमात्र के व्यङ्ग्य रहने पर अलङ्कारों के बीच में दिखाये हुए ही उदाहरणों में से ही विषय समझ लेना चाहिये। सो इस प्रकार वस्तुमात्र से अथवा अलङ्कार विशेष रूप अर्थ से वस्तु या अलङ्कार के प्रकाशन में चारुत्वोत्कर्ष के कारण प्राधानता रहने ही पर अर्थशक्त्युद्भव अनुरणनरूप संलक्ष्यक्रमव्यङ्ग्य ध्वनि जानना चाहिये ।

अत्र ध्वनि के भेद अठारह इस प्रकार होते हैं—

[१] वस्तु से वस्तुव्यङ्ग्य
[२] वस्तु से अलङ्कारव्यङ्ग्य
[३] अलङ्कार से वस्तुव्यङ्ग्य
[४] अलङ्कार से अलङ्कारव्यङ्ग्य
[५] कविप्रौढोक्तिसिद्ध वस्तु से वस्तुव्यङ्ग्य
[६] कविप्रौढोक्तिसिद्ध वस्तु से अलङ्कारव्यङ्ग्य
[७] कविप्रौढोक्तिसिद्ध अलङ्कार से वस्तुव्यङ्ग्य
[८] कविप्रौढोक्तिसिद्ध अलङ्कार से अलङ्कारव्यङ्ग्य
[९] स्वतःसम्भवी वस्तु से वस्तुव्यङ्ग्य
[१०] स्वतःसम्भवी वस्तु से अलङ्कारव्यङ्ग्य
[११] स्वतःसम्भवी अलङ्कार से वस्तुव्यङ्ग्य
[१२] स्वतःसम्भवी अलङ्कार से अलङ्कारव्यङ्ग्य

} ये बारह भेद अर्थशक्त्युद्भव ध्वनि के हैं। ३×४=१२

| | |
|---|---|
| [ १ ] शब्दशक्त्युद्भव वस्तुध्वनि | |
| [ २ ] शब्दशक्त्युद्भवालङ्कार ध्वनि | १२ + २ + १ + १ |
| [ ३ ] शब्दार्थशक्त्युद्भव वस्तुध्वनि | = १६ + २ = १८ |
| [ ४ ] असंलक्ष्यक्रमव्यङ्ग्य का एक | कुल अठारहभेद ध्वनि |
| [ ५ ] अविवक्षितवाच्यके अर्थान्तरसंक्रमितवाच्यं | के संक्षेपतः होते हैं। |
| [ ६ ] ,, अत्यन्ततिरस्कृतवाच्य | |

**एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—**

इस तरह ध्वनि के भेदों को कहकर उस ध्वनि के आभास (अर्थात्) गुणीभूतव्यङ्ग्य को विचार करने के लिये कहते हैं—

**यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते।**
**वाच्यस्याङ्गतया वाऽपि नास्यासौ गोचरो ध्वनेः॥ ३१ ॥**

अन्वयस्तु—स्फुट एव ॥३१॥

यत्र = यस्मिन् काव्ये, प्रतीयमानः = व्यङ्ग्यः, अर्थः, प्रक्लिष्टत्वेन = गूढत्वेन भासते = प्रतीयते, वा = अथवा, वाच्यस्य ( अर्थस्य ) अङ्गतया = उपकारिकतया भासते, असौ = काव्यविशेषः, ध्वनेः न = नहि, गोचरः = विषयः, अपितु गुणीभूतव्यङ्ग्यस्यैव विषय इत्यर्थः।

जिस काव्य में प्रतीयमान ( व्यङ्ग्य ) अर्थ प्रक्लिष्ट ( गूढ ) रूप से प्रतीत होते हैं या वाच्य के अङ्ग होकर प्रतीत होते हैं वे ध्वनि के विषय नहीं हैं किन्तु गुणीभूतव्यङ्ग्य के विषय हैं।

**द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च। तत्र य एव स्फुटशब्द-शक्त्याऽर्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः। स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः।**

दोनों प्रकार के चाहे अविवक्षितवाच्य या विवक्षितान्यपरवाच्य व्यङ्ग्य स्फुट और अस्फुट के भेद से दो प्रकार के होते हैं। उनमें से शब्दशक्ति या अर्थशक्ति से स्फुट रूप से ही प्रतीत होता है वही ध्वनि का विषय है दूसरा नहीं। स्फुट में भी वाच्य के अङ्गरूप में जो प्रतीत होता है वह इस संलक्ष्यक्रमव्यङ्ग्य ध्वनि का विषय नहीं है।

यथा—

कमलाअरा णं मलिआ हंसा उड्डाविआ ण अ पिउच्छा ।
केण वि गामतडाए अब्भं उत्ताणअं फलिहम् ॥

( छाया ) कमलाकरा न मलिता हंसा उड्डायिता न च पितृष्वसः ।
केनापि ग्रामतडागे, अभ्रमुत्तानितं क्षिप्तम् ॥

कमलाकरा इति । गाथाशप्तशत्याः पद्यमिदम् । अयि पितृष्वसः ! कमलाकराः = कमलसमूहाः, न, मलिताः = खण्डिताः, हंसाः = राजहंसाः, न, उड्डुयिताः = उत्पातिताः, केनापि दक्षेण जनेन, ग्रामतडागे = ग्रामसरसि, उत्तानितम् = उद्वर्तितम् , अभ्रं = मेघः, क्षिप्तम् = समावेशितमित्यर्थः ।

अत्रेद तत्वम्—ग्रामसरोवरजले मेघप्रतिविम्बच्छायामवलोक्य केनापि तत्र प्रवेशितं मेघमेव मन्यमानाया कस्याश्चित् मुग्धायाः पितृष्वसारं प्रत्युक्तिरिति मेघप्रतिविम्बदर्शनं व्यङ्ग्यमपि वाच्यस्याङ्गमिति नैव ध्वनेर्विषयः ।

जैसे—अरी फुआ जी ! देखो तो न तालाब ही मलिन है और न हंस ही उड़ाये गये हैं ( फिर भी ) इस गाँव के तालाब में किसी ने बादल को उल्टा करके ( कितनी सफाई से ) रख दिया है ।

अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिविम्बदर्शनस्य वाच्याङ्गत्वमेव ।

यहाँ भोली-भाली वधू का मेघ प्रतिविम्बदर्शन रूप व्यङ्ग्य वाच्य का अङ्ग ही है इसलिये गुणीभूत है ।

एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम् । यथा—

ऐसे ऐसे विषयों में अन्यत्र भी जहाँ व्यङ्ग्य की अपेक्षा चारुत्वोत्कर्ष की प्रतीति होने से वाच्य की प्रधानता रहती है वहाँ व्यङ्ग्य के अङ्गरूप में रहने से ध्वनि का विषय नहीं होता है । जैसे—

वाणीरकुडङ्गोड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं ॥

( छाया ) वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

वानीरेति । वानीरकुञ्जोड्डीनशकुनिकोलाहलं = वानीरकुञ्जात् वेतसलतामण्डपात् उड्डीना उत्पतिताः ये शकुनयस्तेषां कोलाहलं कलकलशब्दं, शृण्वन्त्याः = आकर्णयन्त्याः, गृहकर्मव्यापृतायाः = गैहिककार्य्यसंलग्नायाः, वध्वाः = नूतननायिकायाः, अङ्गानि = सर्वाङ्गाणि, सीदन्ति = कम्पन्ते इत्यर्थः, जघनविपुलावृत्तमिदम् ॥

पद्येऽस्मिन् "कान्तो दत्तसङ्केतो वेतसगृहं प्रविष्टः" इति व्यङ्ग्यापेक्षया शकुनिशब्दश्रवणकालमेव सर्वाङ्गकम्पनात् अस्तव्यस्ततारूपवाच्यस्यैव चारुत्वमिति न ध्वनिः किन्तु गुणीभूतव्यङ्ग्यमेवेति तत्वम् ।

वेतसलता कुञ्ज से उड़ते हुए पक्षियों के कोलाहल को सुनती हुई घर के काम में लगी हुई वहू के अङ्ग काँपने लगे ।

एवंविधो हि विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्देक्ष्यते ।

ऐसे ऐसे विषय प्रायः गुणीभूतव्यङ्ग्य के उदाहरण में आगे दिये जाँयगे ।

यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः ।

यथा—

जहाँ प्रकरणादि की प्रतीति से विशेष अर्थ का निश्चय करके वाच्य अर्थ फिर व्यङ्ग्य अर्थ के अङ्ग ही होकर प्रतीत होता है वह इसी संलक्ष्यक्रम व्यङ्ग्य ध्वनि का विषय होता है । जैसे—

उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हालिअसुह्वे ।
अह दे विसमविरावो ससुरेण सुओ वलअसद्दो ॥

( छाया ) उच्चिनु पतितं कुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।
एष ते विषमविरावः श्वसुरेण श्रुतो वलयशब्दः ॥

अन्वयः—हे हालिकस्नुषे ! पतितं, कुसुमं, उच्चिनु, शेफालिकां, मा, धुनीहि, विषमविरावः, एषः, ते, वलयशब्दः, श्वसुरेण, श्रुतः ।

उच्चिन्विति। केनचित् कामुकेन सह रममाणा काचिन्नायिका बहिश्श्रुतवलयशब्दया तत्सख्या प्रतिबोध्यते। हे हालिकस्नुषे! = कृषकपुत्रवधु! पतितं = वृक्षात्पतितम्, पुष्पं = कुसुमं, उच्चिनु = गृहाण, शेफालिकां = निर्गुण्डीम्, मा धुनीः = न कम्पय, विषमविरावः = उत्कटशब्दः, एषः = श्रूयमाणः, ते = तव, वलयशब्दः = कङ्कणशब्दः, श्वशुरेण, श्रुतः = आकर्णित इत्यर्थः।

पद्येऽस्मिन् केनापि धृष्टकामुकेन रहसि गृहाभ्यन्तरे क्रीडन्त्या नायिकायाः वलयशब्दं बहिरेव श्रुता तत्सखी रहस्यगोपनाय तथा सङ्केतयति यथा तत्सखी रतिकार्य्याद्विरमेत् रहस्यभेदोऽपि न जायेतेति व्यङ्ग्योऽर्थः "श्वसुरस्य तव शेफालिकायां महती प्रीतिस्तत्पुष्पत्रोटने महान् क्रोधसम्भवोऽतस्तत्कार्य्यं त्यज" इत्यपि प्रतीयमानं वाच्यार्थमुपकरोतीति व्यङ्ग्यस्य प्राक् वाच्याङ्गत्वेऽपि अप्रस्तुतशेफालिकानिर्धूननोक्तेस्तद्रहस्यगोपनतात्पर्यबोधनतात्पर्य्यकत्वे निषेधात्मनो वाच्यार्थस्यापि व्यङ्ग्यपरिपोषकत्वमेति संलक्ष्यक्रमव्यङ्ग्यध्वनेरेव विषय इत्यवगन्तव्यम्।

हे हलवाहे की पुत्रवधू! नीचे गिरे हुए फूलों को ही बीन, शेफालिका (हरसिंगार की डाल) को मत हिला। अत्यन्त शब्द करने वाले तेरे कङ्कण की आवाज़ श्वसुरजी ने सुनली है।

अत्र ह्यविनयपतिना स रममाणा सखी बहिश्श्रुतवलयकलकलया सख्या प्रतिबोध्यते। एतदपेक्षणीयं वाच्यार्थप्रतिपत्तये। प्रतिपन्ने च वाच्यार्थे, तस्याविनयप्रच्छादनतात्पर्य्येणाभिधीयमानत्वात् पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः।

यहाँ किसी जारपति के साथ निर्दयता पूर्वक रमण करती हुई सखी को बाहर से उसके कङ्कण की आवाज सुनकर उसकी सखी सावधान करती है। यह व्यङ्ग्यार्थ वाच्यार्थ प्रतीति के लिये अपेक्षित है। वाच्यार्थ की प्रतीति हो जाने पर उस सखी के परपुरुषोपभोग रूप अविनय को छिपाने के अभिप्राय से कहे जाने से फिर व्यङ्ग्य का अङ्ग ही हो जाता है इसलिये इसका संलक्ष्य क्रम व्यङ्ग्य ध्वनि में ही अन्तर्भाव होता है।

एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं कर्तुमाह—

इस तरह विवक्षितवाच्य ध्वनि के ध्वन्याभास ( गुणीभूतव्यङ्ग्य ) का विचार प्रसङ्ग होजाने पर अविवक्षितवाच्य ध्वनि का भी गुणीभूतव्यङ्ग्य विचार करने के लिए कहते हैं—

अव्युत्पत्तेरसक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सुरिभिर्विषयो ध्वनेः ॥ ३२ ॥

अन्वयः—अव्युत्पत्तेः, अशक्तेः, वा, स्खलद्गतेः, शब्दस्य, निबन्धः, स च, सूरिभिः, ध्वनेः, विषयः, न, ज्ञेयः ॥ ३२ ॥

अव्युत्पत्तेः = नैपुण्याभावात्, वा = अथवा, अशक्तेः = सामर्थ्याभावात् कवित्वशक्तेरभावादित्यर्थः, स्खलद्गतेः = बाधितार्थस्य, शब्दस्य, यः, निबन्धः = रचना, स च, सूरिभिः = विद्वद्भिः, ध्वनेः = अविवक्षितवाच्यस्य, विषयः = प्रदेशः, न = नहि, ज्ञेयः = ज्ञातव्य इत्यर्थः ।

स्खलद्गतेरुपचरितस्य शब्दस्य अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स च न ध्वनेर्विषयः ।

व्युत्पत्ति या शक्ति के अभाव से जो लाक्षणिक शब्द की रचना हो उसे विद्वानों को ध्वनि का विषय नहीं समझना चाहिये ।

यतश्च—

"सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ ३३ ॥

तच्चोदाहृतविषयमेव ।

राजानकपदभाजाऽऽनन्दवर्धनाचार्य्यकविना ।
रचिते ध्वन्यालोके, पूर्तिं नीतो द्वितीय उद्योतः ॥

अन्वयः—अङ्गिभूतस्य, व्यङ्ग्यस्य, सर्व्वेषु, एव, प्रभेदेषु, यत्, स्फुटत्वेन, अवभासनम्, तत्, पूर्णं, ध्वनिलक्षणम् ।

अङ्गिभूतस्य = प्रधानीभूतस्य, व्यङ्ग्यस्य = प्रतीयमानार्थस्य, सर्व्वेष्वेव = निखिलेष्वेव, प्रभेदेषु = विवक्षितान्यपरवाच्याविवक्षितवाच्यप्रभेदेषु, यत्, स्फुटत्वेन = अक्लिष्टतया अगूढत्वेनेति यावत्, अवभासनम् = प्रतीतिः, तत् पूर्णं = समस्तं, ध्वनिलक्षणम् = ध्वनेर्लक्षणम्, सूरिभिर्ज्ञेयमित्यर्थः ।

तच्च = सर्वम्, उदाहृतविषयमेव = यानि पूर्वोक्तानि उदाहरणानि तान्येव एतद्ध्वनेर्विषय इति तात्पर्य्यम्।

सरथापुरी यथार्था, पाटलिपुत्रे सुमण्डलेऽस्त्येका।
तत्र वरे ह्युपमन्योर्वंशे जातः पुनीतशर्म्मैकः ॥ १ ॥
स श्रोत्रिय इह विप्रो, वीरो धीरश्च पूतात्मा।
निजकर्मणि किल निष्ठो, वेत्ता सङ्गीतशास्त्रस्य ॥ २ ॥
यत्पूर्वजगण आसीत्, श्रोत्रियविप्रः कमक्षायाम्।
वेदचतुष्टयवेत्ता, द्वात्रिंशद्ग्रामवास्तव्यः ॥ ३ ॥
कुण्डिनपुरे विहारे, नालन्दे प्राक् स रुक्मिणीयज्ञे।
ऋत्विक्कर्म हि कर्तुं, राज्ञा कृष्णेन चाहूतः ॥ ४ ॥
तदनु पुनः शतकुण्डे, विस्तृतयज्ञे च राजगृहे धाम्नि।
सम्पादयितुं यज्ञं, जरया सन्धेन चानीतः ॥ ५ ॥
यस्मिन् यज्ञे हि शूरेण जरासन्धेन धर्मिणा।
सर्वतीर्थानि चानीय स्वशूरत्वं प्रदर्शितम् ॥ ६ ॥
तस्मिन्नेव सुयज्ञे, प्रथमं कलशेषु दानार्थम्।
तीर्थजलप्राहरणं, कर्मसम्पादनार्थञ्च ॥ ७ ॥
तदनु पुनर्धाराभि. रवभृथकर्मप्रसाधने दक्षैः।
साकं श्रोत्रियविप्रै, र्देवाः सस्नुः स्वकुण्डे च ॥ ८ ॥
चक्रे स्थापनमेतैः, शैवानां चतुरशीतिलिङ्गानाम्।
स्कन्दपुराणे चैतद्, वृत्तं सर्वं बुधैर्ज्ञेयम् ॥ ९ ॥
तत्तनयौ गुणवन्तौ, पोषणशर्मा कविस्तु वै ज्येष्ठः।
सर्वजनप्रिय आसीत्, प्रेमन् शर्मा कनिष्ठश्च ॥१०॥
तत्र ज्येष्ठतनूजा, श्चत्वारस्तेऽपि शास्त्रवेत्तारः।
ज्येष्ठोऽयोध्यानाथ, स्तत्सूनुर्विष्णुदत्तशर्माऽस्ति ॥११॥
साहित्यव्याकरण-न्यायाचार्यो यतश्च काशीतः।
कालेजे फतुहास्थे, "प्राध्यापक" वरपदे नियुक्तोऽतः ॥१२॥

मध्यो विद्वद्वर्य्यो, धीमान् श्रीब्रह्मदेवशर्माऽऽसीत् ।
तुर्य्यस्तत्र कनिष्ठः, स च सूरिर्हंसराजशर्माऽऽसीत् ॥१३॥
एतद्व्याख्याकर्ता, तत्र ज्ञेयस्तृतीयोऽयम् ।
वैदिककर्मधुरीणो याजनकार्य्येऽद्वितीयोऽयम् ॥१४॥
कालेजे सुरवाण्याः, "प्राध्यापक" वरपदे नियुक्तोऽयम् ।
साहित्य-व्याकरणाऽऽचार्य्यो वर्य्यो विहारेऽयम् ॥१५॥
महामहोपाध्यायं हरिहरकृपालुद्विवेदिनं नौमि ।
गुरुमेनं पुनरन्ते, यत्कृपयैतत्प्रकाशिकापूर्तिः ॥१६॥
अभ्रचन्द्रवियदक्षिसम्मिते, वत्सरे शुभशुचि मासि शुक्लके ।
भास्करेऽह्नि वरपूर्णिमातिथौ, पूर्तिमाप विवृतिः प्रकाशिका ॥१७॥
छात्रेभ्य हिताय, विहितेयञ्चेत मे विनतिः ।
विबुधा मुदा क्षमेरन्, स्खलनञ्चेत् प्रमादतो भूयः ॥१८॥
पोषणशर्म्मतनूज,श्रीमदलखदेवशर्म्मणा विदुषा ।
रचितप्रकाशिकायां, पूर्तिं नीतो द्वितीय उद्योतः ॥

क्योंकि —

ध्वनि के सभी भेदों में प्रधानरूप में स्फुटरूप से जिस ध्वनि की प्रतीति होती है वही ध्वनि का पूर्ण लक्षण है ।

और उनके पूर्वोक्त ही उदाहरण हैं ।

पोषणशर्म्मतनूजश्रीमदलखदेवशर्म्मणा विदुषा ।
रचिताऽर्थदीपिकायां भाषायां च द्वितीय उद्योतः ॥ ॥

इति श्रीवैदिककर्मानुष्ठाननिष्ठश्रोत्रियवंशावतंसपोषणशर्म्मतनूज-पाण्डेयोपाह्व-
व्याकरणसाहित्याचार्य्यश्रीमदलखदेवशर्मणा विरचितायां
प्रकाशिकाख्यव्याख्यायाम्, अर्थदीपिकायाञ्च
हिन्दीभाषायां द्वितीय उद्योतः ।



# विहारसंस्कृतसमितेः प्रश्नाः ।

## सन् १९२९ ई० वर्षस्य

१ निम्नलिखितयोः श्लोकयोर्भावार्थं निर्दिश्य सलक्षणं ध्वनिभेदो निरूप्यताम् । २०

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव ॥

२ रसवदलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेः सलक्षणं भेदः प्रदर्श्यताम् । १०

३ अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥
कारिकेयं सोदाहरणं विशदीक्रियताम् । १०

४ सावतरणं स्फुटीकृताभिप्रायं च व्याख्यायतामयं ग्रन्थः ।
"ननु ध्वनिः काव्यविशेषः" इत्युक्तं तत्कथं तस्य पदप्रकाशता । काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः शब्दसन्दर्भविशेषः तदभावश्च पदप्रकाशकत्वे नोपपद्यते पदानां स्मारकत्वेनावाचकत्वात् ।

## सन् १९३१ ई० वर्षस्य

१ अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥
अत्र प्रतीयमानार्थ इव वाच्यार्थोऽपि सहृदयश्लाघ्यतया काव्यस्यात्मभूत इति प्रतिपादितम् । काव्यस्यात्मा ध्वनिरिति प्रथमकारिकया प्राक् च कथितम् । तत्कथमेतद्विरोधपरिहारः ? विशदमुपपाद्योत्तरं लिख्यताम् । १०

२ चन्दमऊएहिं णिसा णलिनी कमलेहि कुसुमगुच्छेहि लआ ।
हंसेहिं सरअसोहा कव्वकहा सज्जनेहिं करइ गरुई ॥

अत्र प्रतीयमानोपमावाच्यं दीपकालङ्कारं पुष्णातीति ग्रन्थकृता समाधाय प्रतीयमानोपमाया वाच्याङ्गतया ध्वनित्वं निराकारि । प्रतीयमानोपमां दीपकालङ्कारः कथं न पुष्णातीत्युत्तरस्य हेतुयुक्तिर्विलिख्यताम् । १५

अथवा

भक्तिस्वरूपं निरूप्य ध्वनेर्भाक्तत्वं निराकुरुत । १५

३ पदार्थप्रतीतिर्वाक्यार्थप्रतीतेरिव वाच्यत्वरूपवाक्यार्थप्रतीतिर्व्यङ्ग्यार्थ-प्रतीतेर्व्यापारोऽस्त्विति शङ्कायाः समाधानं वृत्तिकृद्दिशा लिख्यताम् । २०

४ अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥
कारिकामिमामुदाहरणमुखेन विवृणुत । १५

## सन् १९३२ वर्षस्य

१ "क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः" अत्र कथङ्कारं क्रौञ्चवर्तिनः शोकस्य श्लोकात्मना परिणामः ? २०

२ कथङ्कारमलङ्काराणां रसाङ्गत्वम् ? २०

३ "स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि ।
यथा पदार्थनिष्पत्तौ वाक्यार्थो न विभाव्यते ॥"
"तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्वार्थदर्शिन्यां झटित्येवावभासते ॥"
प्रकरणनिर्देशपुरस्सरं व्याख्यायतां श्लोकद्वयमिदम् । २०

४ वाचकत्वाद् व्यञ्जकत्वस्य भेदे का युक्तिः ? २०

५ ध्वन्यभावमुपपाद्य निराकुरुत । २०

६ "वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्ज वितीअ विणा दक्खिणहअस्स जाअन्तु ॥

७ देआ पसिअ णिवत्तसु मुहससिजोह्नाविलुत्ततमनिवहे ।
अहिसारिआणं विग्घं करोषि अण्णाणं विहआसे ॥
पद्यद्वये प्रतीयमानार्थौ प्रतिपाद्येताम् । २०

## सन् १९४६ वर्षस्य

१ यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते।
वाच्यस्याङ्गतया वाऽपि नास्यासौ गोचरो ध्वनेः॥
अस्याः कारिकायाः अंशद्वयोदाहरणप्रदर्शनपूर्वकं व्याख्यानं विधीयताम्। १५

अथवा

अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः॥
एषा कारिका सोदाहरणप्रदर्शनं व्याख्यायताम्।

२ भक्तिर्ध्वनिरिति मतमुपवर्ण्य "भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः" इति ग्रन्थाशयविशदीकरणेन निराकुरुत। १५

अथवा

अर्थान्तरन्यासध्वनिं व्यतिरेकध्वनिं च द्विविधमप्युदाहरत।

## सन् १९४७ वर्षस्य

१ ध्वन्यभाववादिनां विकल्पानुपन्यस्य तान् निरस्य व्यङ्गसङ्गिषु समासोक्त्याद्यलङ्कारेषु ध्वन्यन्तर्भावाभावं वा प्रविभावयत। १५

अथवा

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥
इति कारिका सुविशदं व्याकुरुत।

## सन् १९४८ वर्षस्य

१ सविशेषणव्यावृत्ति–ध्वनिलक्षणमभिधाय तत्सामान्यप्रभेदयोरुदाहरणे प्रदर्शयन्तु। १५

अथवा

ध्वनेरनिर्वचनीयतां खण्डयन्तु।

२ रसभावतदाभास तत्प्रशान्त्यादिरक्रमः॥

ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः।
इति कारिका सुव्यक्तं व्याख्यायंताम्॥ १५

सन् १९४९ वर्षस्य

१ ध्वनेः समासोक्त्यादिष्वन्तर्भावाभावमानन्दवर्धनाभिमतान् प्रभेदान् वोपपादयत। १०

२ "अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ यस्य भेदावुभौ स्मृतौ॥"
"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥"
अनयोरन्यतरकारिकां विवृणुत। १५

३ अर्थान्तरन्यासध्वनिमुदाहरत। ५

सन् १९५० वर्षस्य

१ व्यङ्ग्ये वाच्यत्वं न भवति इत्यत्र का वाचो युक्तयस्ता सुव्यक्तमुपपाद्यताम्। १५

२ रसस्य क्व ध्वनित्वं क्व चालङ्कारत्वमित्युपपाद्य तयोरुदाहरणे केचन सोपपादनं प्रकाशयन्तु। १५

अथवा

शब्दार्थशक्त्या वाक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः॥

इति कारिका व्याख्यायताम्।

सन् १९५१ वर्षस्य

१ गुणालङ्कारेषु ध्वन्यन्तर्भावप्रक्रियां ध्वनिस्वरूपप्रदर्शनपूर्वकं तत्तत्प्रभेदान् वा संक्षिप्य दर्शयतु। २०

२ "रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनेर्मतः॥"
सप्रघट्टं कारिकामिमां विवृणुत। १०

३ कदा कस्मिन् प्रदेशेऽभूदयमानन्दवर्धनः ।
एतद्विनिर्मिताः के के ग्रन्थाः सन्तीति घोष्यताम् ॥ १५

## सन् १९५२ वर्षस्य

१ भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ इति कारिका सोपक्रमं व्याख्यायताम् । १५

२ अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥
कारिकामिमां व्याख्याय कश्च ध्वनेर्मार्ग इत्युपपाद्यताम् । १५

## सन् १९५३ वर्षस्य

१ "अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥"
"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥"
उल्लिखितकारिकयोरेकैव स्फुटं विवरणीया । १०

२ लिखितपूर्वकारिकयोः प्रथमायां वाच्यस्य काव्यात्मत्वं खण्डनीयम् । १५

अथवा

द्वितीयस्यां "मे मति" रित्युक्तेराकूतं प्रकाशनीयम् ।

३ अर्थान्तरन्यासध्वनिरुदाहरणीयः । ५

———

# अथ प्रश्नोत्तराणि

## १९२९ वर्षस्य

१ एवंवादिनीति, हिमालयेन साकं नारदस्य विवाहप्रासङ्गिकवृत्तश्रवणलज्जया नम्रमुखी पार्वती स्वकीयकरस्थकमलदलानि स्वभावगोपनेच्छया गणयामासेति भावार्थः । अत्र लज्जारूपव्यभिचारिभावव्यञ्जकत्वेन अनुरणनप्रख्यस्य संलक्ष्यक्रमव्यङ्गयस्य द्वितीयभेदोऽर्थशक्त्युद्भवो नाम ध्वनिः । तल्लक्षणञ्च—

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः सम्प्रकाशते ।
यस्तात्पर्य्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः ॥

स्निग्धश्यामलेति । वर्षाकाले विरहसंतप्तां सीतां मनसिकृत्य श्रीरामचन्द्रो व्याहरति यत्—वर्षाकालीनघनानामतिश्यामलकान्तिभिराकाशस्य लिप्तप्रायत्वेन दर्शनात्, वर्षाकाले वकपंक्तीनां विशेषतो दर्शनात्, वातानामतीह शैत्यावहत्वेन मयूराणां वाणीश्रवणेन च विरहिणो मम कठोरहृदयत्वेन सर्वसहनसम्भवः किन्तु मत्पत्नी वैदेही एतानि दुःखानि कथं सोढुं शक्ष्यति ? नूनं मरणोन्मुखी भवेदिति विरहे भावनया प्रत्यक्षीक्रियमाणां सीतामाश्वासयति राम इति भावार्थः । अत्राविवक्षितवाच्यस्य भेदोऽर्थान्तरसंक्रमितवाच्यो नाम ध्वनिः । यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपेऽर्थान्तरे संक्रमितत्वादर्थान्तरसंक्रमितवाच्यो नाम ध्वनिर्जायते । अत्र वाच्यो दाशरथिरूपोऽर्थः । राज्यपरित्याग-घनवनगमन-जटावल्कलधारण तातमरण-प्रियाहरणजन्यदुःखातिशयसहनत्वाद्यसंख्यो व्यङ्गयः ।

२ रसवदलङ्कारादलक्ष्यक्रमव्यङ्गयस्य ध्वनेरित्थं भेदः—

वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥
प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥

रसभावतदाभास—तत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया विभिन्नरूपास्तत्रैव काव्ये ध्वनिः । यत्र किल रसादयोऽङ्गं तस्मिन् काव्ये रसवदलङ्कार इति तयोर्भेद इति सारांशः ।

३ अनुस्वानोपमस्यापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥

कारिकेयं तृतीयोद्योतस्यात एव प्रश्नस्यैतस्योत्तरं न लिख्यते ।

४ चतुर्थप्रश्नस्थं गद्यमपि तृतीयोद्योतस्यातो नोत्तरं लिखितम् ।

## १९३१ वर्षस्य-

१ अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥

अत्र प्रतीयमानार्थ इव वाच्यार्थोऽपि सहृदयश्लाघ्यतया काव्यस्यात्मभूत इति प्रतिपादितम् । काव्यस्यात्मा ध्वनिरिति प्रथमकारिकया प्राक् च कथितम् । तत्कथमेतद्विरोधपरिहारः । विशदमुपपाद्योत्तरं लिख्यताम् ।

२ चन्दमऊएहिं णिसा णलिनी कमलेहिं कुसुमगुच्छेंहि लआ ।
हंसेहिं सरअसोहा कव्वकहा सज्जनेहिं करइ गरुई ॥

अत्र प्रतीयमानोपमावाच्यं दीपकालङ्कारं पुष्णातीतिग्रन्थकृता समाधाय प्रतीयमानोपमाया वाच्याङ्गतया ध्वनित्वं निराकारि । प्रतीयमानोपमां दीपकालङ्कारः कथं न पुष्णातीत्युत्तरस्य हेतुयुक्तिर्विलिख्यताम् ।

अथवा

भक्तिस्वरूपं निरूप्य ध्वनेर्भाक्तत्वं निराकुरुत ।

३ पदार्थप्रतीतिर्वाक्यार्थप्रतीतेरिव वाच्यस्वरूपवाक्यार्थप्रतीतिर्व्यङ्ग्यार्थप्रतीतेर्व्यापारोऽस्त्विवति शङ्कायाः समाधानं वृत्तिकृद्दिशा लिख्यताम् ।

## १९३१ वर्षस्योत्तराणि-

१ यद्यप्येतस्योत्तरं मया स्वकीयध्वन्यालोकस्य १३ पृष्ठे, १३ पंक्तौ प्रतिपादितं किन्तु तदीयाशयोऽत्र विशदीक्रियते ।

"अर्थः सहृदयश्लाघ्यः" इति कारिकया प्रतीयमानार्थस्य द्वैविध्यप्रतिपादनेन यद्यपि वाच्यार्थस्यापि काव्यात्मत्वं प्रतीयते किन्तु "काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः" इति कारिकया प्रतीयमानार्थस्यैव काव्यात्मत्वप्रतीतौ विरोधः । तद्विरोधपरिहारश्चेत्थम्—"अर्थः सहृदयश्लाघ्यः" इति कारिकायां "सहृदयश्लाघ्य" इति विशेषणदानस्येदमेव तात्पर्यं यत् सहृदयश्लाघ्यस्यैवार्थ-

स्यैव काव्यात्मत्वम् सहृदयश्लाघ्यश्चार्थस्तु प्रतीयमान एव न वाच्यः । किन्तु यथा वाक्यार्थप्रतीतौ पदार्थप्रतीतिरावश्यकी तथैव प्रतीयमानार्थप्रतीतौ वाच्यार्थप्रतीतिरावश्यकीति कारिकयाऽनया व्यङ्ग्यार्थस्य द्वैविध्यप्रतिपादने वाच्यार्थस्यापि भेदगणनायां गणनं किन्तु सहृदयश्लाघ्य इति विशेषणदानेन तद्विरोधपरिहारोऽप स्वयमेव कृत इति ध्वनेरेव काव्यात्मत्वं न वाच्यार्थस्य, अस्य तु केवलं भेदमुखेन प्रतिपादनम् । अत एवाग्रे "स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते । यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते । वाच्यार्थपूर्विका तद्वत्प्रतिपत्तकवस्तुनः ॥" इति कारिकाद्वयेनैतद्विषयस्यैव प्रतिपादनम् ।

अग्रेऽपि "व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते" इति कारिकयापि प्रतीयमानार्थस्यैव काव्यात्मत्वप्रतीतेर्विरोधपरिहारः ।

२ "चन्दमऊएहिं णिसा" इति पद्येऽप्रस्तुतानां चन्द्रमयूखादीनां प्रस्तुतानां सज्जनाञ्च कर्तृत्वेन अप्रस्तुतानां निशादीनां प्रस्तुतकाव्यकथायाश्च कर्मत्वेन गुरुकरणैकधर्माभिसम्बन्धाद्वाच्ये दीपकालङ्कारे यथा चन्द्रमयूखादिभिर्निशादीनां गुरूकरणं तथा सज्जनैः काव्यकथाया गुरूकरणमित्युपमानोपमेयभावस्य कल्पनया प्रतीयमानोपमाया वाच्योपस्कारकत्वेनाङ्गत्वान्नैव दीपकालङ्कारः प्रतीयमानोपमां पुष्णाति. यतश्च अलङ्कारान्तरस्य प्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गसम्भवः । अत एवात्र पद्ये उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्नैव ध्वनिव्यपदेशः । तदुक्तं ध्वनिकृता—"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते । तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ।" इत्युक्तं मूले ।

अथवा

"भक्तिस्वरूपं निरूप्य ध्वनेर्भाक्तत्वं निराकुरुत" इत्यस्योत्तरम् । "भक्तिरेव ध्वनिः" इति भाक्तत्ववादिनां मतम् । तत्र किल भज्यते सेव्यते प्रसिद्धतया उद्घोष्यते इति भक्तिर्गुणवृत्ति रित्युच्यते अर्थात् उपचारमात्रं भक्तिरित्युच्यते । उपचारो हि नामात्यन्तं विशकलितयोर्विभिन्नयोः शब्दयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रमेव । सा च गुणवृत्तिस्वरूपा भक्तिर्यदि

कस्यचिद् ध्वनिभेदस्य लक्षणं स्याच्चदा सा उपलक्षणं स्यात् तदुपलक्षणं हि स्वबोधकत्वे सति स्वेतरबोधकत्वम्--यथा काकवन्तो देवदत्तस्य गृहाः। तत्र "परिम्लानं पीतस्तनजघनसङ्गादुभयतः" इत्यादौ ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सत्वेनातिव्याप्तिदोषसम्भवात्, तथा ध्वनिस्थले भक्तेरसत्वेनाव्याप्ति-दोषसम्भवाच्च भक्तिर्ध्वनेर्लक्षणं नैव स्यात्। तथा या गुणवृत्तिर्भक्तिर्वाचक-त्वाश्रयेण व्यवस्थिता दृश्यते सा व्यञ्जकत्वैकमूलस्य ध्वनेर्लक्षणं कथं स्यात्। तदेवं ध्वनिरन्यः, भक्तिश्चान्येति सारम्। एवंरीत्या भाक्तवादिनां मतखण्डनम्।

३ तृतीयप्रश्नस्तु तृतीयोद्योतस्येति तदुत्तरं नैव लिख्यते।

## अथ १९३२ वर्षीयप्रश्नस्योत्तरम्–

१ विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य प्रतीयमान एवार्थः सार-भूतोऽत एवादिकवेः क्रौञ्चद्वन्द्ववियोगोत्थः शोकः करुणरसस्थायिभावरूपेण श्लोकतया परिणतः। "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः" इति पद्ये निषादपक्षीयोऽर्थः शोकपक्षीयो वाच्यः। श्रीरामपक्षीयः कुबेरपक्षीय-श्चार्थश्च व्यङ्ग्यः। निहतसहचरविरहकातरक्रौञ्चकर्तृकाक्रन्दजनितः शोको ह्यादिकवेर्वाल्मीकेर्हृदि करुणरसस्थायिभावतया प्रविष्टश्चिन्ताग्रस्तत्वेनोद्विग्नस्य सम्यग् विचिन्तयतः रससमाहितचेतसः प्रतिभानवतः कवेः श्लोकरूपे परिणतः। गाढशोकाविष्टस्य प्रोक्तकवेः प्रथमं शोक एव हृदि करुणरसस्था-यितामापन्नो विचारयतः प्रतीयमानार्थस्य वैशद्येन तन्मनसि स्फुरणात् श्लोकात्मना परिणत इति तात्पर्य्यम्।

३ एतस्य श्लोकद्वयस्य व्याख्या ३६ पृष्ठे १२ पंक्तौ द्रष्टव्या।

४ चतुर्थप्रश्नस्तु तृतीयोद्योतस्यातस्तदुत्तरं न लिखितम्।

५ पञ्चमप्रश्नस्योत्तरं १९४७ वर्षीयप्रथमप्रश्नस्योत्तरे द्रष्टव्यम्।

६ "वच्चमहब्विअ" इति पद्ये प्रतीयमानार्थः २० पृष्ठे ७ पंक्तौ द्रष्टव्यः।
"देआपसिअ" " " २१ पृष्ठे ७ पंक्तौ द्रष्टव्यः

## अथ १९४६ वर्षीयप्रश्नस्योत्तराणि—

१ "यत्र प्रतीयमानोऽर्थः" इति कारिकाया व्याख्यानं १६५ पृष्ठे द्रष्टव्यम्
"अलङ्कारान्तरस्यापि" " " १८० पृष्ठे द्रष्टव्यम्

२ द्वितीयप्रश्नस्योत्तरं १९३१ वर्षीयद्वितीयप्रश्नस्योत्तरे द्रष्टव्यम्।

अर्थान्तरन्यासध्वनेरुदाहरणं प्रथमस्य "दैवायत्ते फले" इति।

" द्वितीयस्योदाहरणं "हृदयस्थापितमन्युम्" इति।

व्यतिरेकध्वनेः प्रथमस्योदाहरणम्--"त्वं येस्युज्ज्वलयन्ति" इति।

" द्वितीयस्योदाहरणम्--"जायेय वनोद्देशे" इति।

## अथ १९४७ वर्षस्योत्तराणि-

### ( ध्वन्यभाववादिमतखण्डनम् )

१ ध्वन्यभाववादिनां बहुषु विकल्पेषु प्रथमविकल्पस्यायं सारांश शब्दार्थशरीरस्यैव काव्यत्वे सत्सु शब्दालङ्कारेष्वनुप्रासादिषूपमादिष्वर्थालङ्कारेषु च, माधुर्य्यादिषु गुणेषु सत्सु विद्यमानासु वैदर्भीप्रभृतिषु रीतिषु चारुत्वहेतुषु तद्व्यतिरिक्तो नास्ति कश्चिदन्यो ध्वनिरिति।

द्वितीयविकल्पश्च--सहृदयहृदयाह्लादिशब्दार्थमयत्वस्यैव काव्यत्वे प्रसिद्धालङ्काराद्यतिरिक्तो नास्त्येव ध्वनिः। तत्कालीनविद्वदभिप्रेतो ध्वनिर्नैव निखिल-विद्वन्मनोग्राही भवेदित्यपूर्वं न किमपि ध्वनिकाव्यमिति।

ध्वन्यभाववादिनां तृतीयविकल्पश्च--कामनीयकमनतिवर्तमानस्य ध्वनेरुक्तालङ्कारादिष्वेवान्तर्भावात् तद्व्यतिरिक्तमपूर्वध्वनिनामकरणं वागाडम्बरमात्रं अलीक-सहृदयत्वभावनामुकुलितलोचनैर्नर्तनं निरर्थकञ्चेति।

भाक्तत्ववादिनां भट्टोद्भटादीनामभाववादिनां चतुर्थविकल्पश्च--ध्वनिरयं भाक्तः अर्थात् भक्तिरेव ध्वनिर्गुणवृत्तिर्यश्चोच्यते इति। अपरो ध्वनिर्नास्ति कश्चित्।

केचन सहृदयहृदयसंवेद्यत्वेन ध्वनेरनिर्वचनीयत्वमेव प्रतिपादयन्ति। तदेवं-विधबहुविधवैमत्ये सहृदयमनःसन्तुष्ट्यै ध्वनिस्वरूपं प्रदर्श्य वादिमतखण्डनं क्रियते।

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥"

अर्थात् "व्यङ्ग्यविशिष्टशब्दार्थोभयत्वमेव ध्वनेर्लक्षणम् वैशिष्ट्यञ्च स्वविषयकप्र-तीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयकत्व-स्वव्यञ्जकघटितत्वसमन्धाभ्याम्।

एतत्सम्बन्धद्वयघटितवैशिष्ट्यप्रतिपादनपुरस्सरं ध्वनेर्लक्षणेन वाच्यवाचकचारुत्वहेतुषूपमाद्यनुप्रासाद्यलङ्कारेषु ध्वनेरन्तर्भावं कुर्वतामभाववादिनां मतं खण्डितम् ।

"प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति" इति ध्वन्यभाववादिनां यो द्वितीयविकल्पः सोऽपि नैव समीचीनः । लक्षणविधानं हि लक्ष्यानुसारमेव भवतीति लक्ष्याप्रसिद्धिरेव ध्वनिसिद्धौ पूर्णं बाधिका न तु लक्षणाप्रसिद्धिः । काव्यजीवितभूतं ध्वनिलक्ष्यं हि बहुशो महाभारतादौ प्रसिद्धम् इति लक्षणविधायिनामेव दोषः । अन्धस्य दृष्टिदोषे स्थाणोः कोऽपराधः ? लक्षणकारिणां हि लक्षणकरणे न तादृशी बुद्धिमत्ता यादृशी लक्ष्यपरीक्षणकारिणामिति लक्ष्यस्य परीक्षण एव महद्विवेकस्यावश्यकता इति ध्वन्यभाववादिनां द्वितीयविकल्पोऽपि नैव वास्तविकः ।

"कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भावः ॥" इति ध्वन्यभाववादिनां यस्तृतीयविकल्पः सोऽपि नैव समीचीनः । वाच्यवाचकमात्राश्रयिषूपमाद्यलङ्कारेषु व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितध्वनेरन्तर्भावस्यासम्भवात् । अत एवोक्तं—"व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः । वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः" इति । ये खलु वाच्यमात्रानुयायिनः समासोक्त्याद्यलङ्कारास्ते च व्यङ्ग्यस्याप्राधान्याद् वाच्यालङ्कारा एव नैव तेषु ध्वनेरन्तर्भावो भवितुमर्हति । तदुक्तं ध्वनिकृता—

"तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥" इति ।

गुणालङ्कारवृत्तीनान्तु ध्वनेरङ्गभूतत्वान्नैव तत्र ध्वनेरन्तर्भावसम्भव इति तात्पर्य्यम् । एवं प्रथम-द्वितीय-तृतीयविकल्पानां खण्डनं जातम् । चतुर्थविकल्पस्य मण्डनं खण्डनञ्च १९३१ वर्षीयवैकल्पिकद्वितीयप्रश्नस्योत्तरे द्रष्टव्ये ।

ध्वन्यभाववादिनां यश्च ध्वनेरनिर्वचनीयत्वरूपः पञ्चमविकल्पपक्षः सोऽपि रामायणमहाभारतादौ बहुशो ह्येतद्विषयदर्शनात् सर्वथाऽसमीचीनवादिनां पक्षः । एतत्प्रसिद्धविषयाणामपलापे तु सर्व्वेषामेव वस्तूनामपलापसम्भव इति तात्पर्य्यम् ।

अथवा

"प्रधानेऽन्यत्र वाक्यार्थे" इति कारिकाया व्याख्यानं हि ९५ पृष्ठे पञ्चमकारिकायां द्रष्टव्यम्।

अथ १९४८ वर्षस्योत्तराणि-

( ध्वनेर्लक्षणविचारः )

१ यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

इति कारिकानुसारं "स्वविषयकप्रतीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयत्व-स्वव्यञ्जकघटितत्वसम्बन्धाभ्याम् व्यङ्ग्यविशिष्टशब्दार्थोभयत्वम्" इत्येव ध्वनेर्निष्कृष्टं लक्षणम्। तत्र समासोक्त्याद्यलङ्कारेषु ध्वनेरन्तर्भावो मा भूदित्येतदर्थमेव उपसर्जनीकृतस्वार्थाविति विशेषणदानस्य सार्थक्यम्। स च ध्वनिः द्विविधः, अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्च। तत्र प्रथमस्योदाहरणम्— "सुवर्णपुष्पां पृथिवीम् इत्यादि। द्वितीयस्योदाहरणम् "शिखरिणि क्व नु नाम कियच्चिरम्" इत्यादि च।

अथवा

( ध्वनेरनिर्वचनीयत्वखण्डनम् )

ये च केचन सहृदयहृदयसंवेद्यमेनं ध्वनिमनाख्येयमेवाहुस्ते सर्वथाऽसमीक्ष्यवादिन एव। रामायणमहाभारतादौ प्रसिद्धे लक्ष्येऽस्य विद्यमानत्वेनापलापासम्भवात्। यद्येवम्विधस्य प्रसिद्धविषयस्यानाख्येयत्वं स्यात् तदा सर्वेषामेव वस्तूनामनाख्येयत्वमेव स्यात्। यत्स्वरूपं हि निखिलसत्कविकाव्योपनिषद्भूतं चिरन्तनकाव्यलक्षणविधायिनामतिसुबुद्धिभिरनुन्मीलितपूर्वं ह्यङ्गनासु निखिलावयवव्यतिरिक्तं पृथङ्निर्वर्ण्यमानं लावण्यमिव सहृदयलोचनामृतं स्वपूर्वमेव वस्तु तस्य वस्तुनोऽनिर्वचनीयत्वप्रतिपादनं हि स्वस्यानभिज्ञत्वसूचकम्। यश्च विना चारुत्वहेतुषु अलङ्कारेषु, प्रबन्धे सत्स्वपि महाकवीनां नैव महाकवित्वलाभः। यस्मिंश्च सति कविपरम्परावाहिनि संसारे कालिदासादयः द्वित्राः पञ्चषा वा कवयो गण्यन्ते तस्य ध्वनेः कथमनिर्वचनीयत्वम् इत्यनिर्वचनीयत्ववादपक्षोऽपि सर्वथाऽसमीचीन एव।

२ "रसभावतदाभास" इति कारिकाया व्याख्या हि ६० पृष्ठे २५ पंक्तौ द्रष्टव्या।

## अथ १९४९ वर्षीयप्रश्नानामुत्तरम्-

### "समासोक्त्यादिषु ध्वनेरन्तर्भावाभावविचारः"

१ "उपोढरागेण विलोलतारकम्" इति हि समासोक्त्युदाहरणे समारोपित-नायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वे व्यङ्ग्येनानुगतस्य वाच्यस्यैव प्राधान्यात् कथं तत्र ध्वनेरन्तर्भावः।

आक्षेपेऽपि—

"विरहे तव तन्वङ्गी" इत्यादौ व्यङ्ग्यविशेषाक्षेपिणो वाच्यस्यैव चारुत्वेन व्यवस्थानात् कथं तत्र ध्वनिसम्भवः। "बलावलेपादधुनापि पूर्ववत्" इति दीपको-दाहरणे, "नेदं नभोमण्डलमम्बुराशिः" इति चापह्नुत्यलङ्कारोदाहरणे व्यङ्ग्यत्वेनो-पमायाः प्रतीतावपि प्राधान्येन तस्या अविवक्षितत्वात् कथं तत्र ध्वनेरन्तर्भावः।

"आहूतोऽपि सहायैरित्यनुक्तनिमित्तविशेषोक्त्युदाहरणे व्यङ्ग्यस्य प्रकरणसाम-र्थ्यात् प्रतीतिमात्रसम्भवे तस्याप्राधान्यात् तत्र कथं ध्वन्यन्तर्भावः।

पर्यायोक्तेऽपि "स्पृष्टास्ता नन्दने शच्याः" इत्युदाहरणेऽपि यदि व्यङ्ग्यस्य प्राधान्यं तदा तस्य ध्वनावेवान्तःपातो न तु तत्र ध्वनेरन्तर्भाव इति तत्रापि कथमन्तर्भावचर्चा ?

सङ्करालङ्कारेऽपि कथमप्यलङ्कारेऽलङ्कारान्तरच्छायामनुसरति व्यङ्ग्यस्य प्राधा-न्येनाविवक्षितत्वात् कथं ध्वनिसम्भवः। अलङ्कारद्वयसम्भावनायान्तु वाच्यव्यङ्ग्य-योस्तुल्यप्रधानतया ध्वनेर्नितरामसम्भवः।

अप्रस्तुतप्रशंसायामपि सामान्यविशेषभावान्निमित्तिनिमित्तभावाच्च वाच्य-व्यङ्ग्ययोस्समप्राधान्येनैव तत्रापि ध्वनेर्नैवान्तर्भावसम्भावना।

इतोऽपि हेतोरलङ्कारादिषु नास्यान्तर्भावसम्भावना यतश्च किल काव्यविशेषो ध्वनिरङ्गी। गुणालङ्कारवृत्तयस्तु तस्य ध्वनेरङ्गानि। एवञ्चाङ्गिनोऽङ्गे कथमन्त-र्भावः ? इत्थञ्च समासोक्त्यादिषु कथमपि ध्वनेरन्तर्भावो भवितुं नार्हतीति सारम्।

आनन्दवर्धनाचार्याभिमताः प्रभेदास्तु पृष्ठे पंक्तौ द्रष्टव्याः।

## अथ १९५० वर्षीयप्रश्नानामुत्तराणि

१ प्रथमप्रश्नस्तु तृतीयोद्योतस्थेति तदुत्तरं न लिख्यते।

२ वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः॥

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥

इति "रसस्य क्व ध्वनित्वम्? क्व चाऽलङ्कारत्वमि"ति प्रश्नस्योत्तरम्। अर्थात् यत्र रसादयो वाक्यार्थीभूताः स सर्वो रसादेरलङ्कारस्य न विषयः किन्तु स ध्वनेः प्रभेदः। उपमादयस्तस्यालङ्काराः। यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलङ्कारताया विषय इति तत्त्वम्।

तत्र रसादिध्वनेरुदाहरणानि—उत्तररामचरिते—
"किमपि किमपि मन्दं मन्दमासत्तियोगा"दित्यादि। (९१पृष्ठे १८पंक्तौ द्रष्टव्यानि)।

रसादिरलङ्कारस्तु द्विविधः—शुद्धः सङ्कीर्णश्च। तत्र शुद्धस्योदाहरणम्—
"किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनम् इति ( ९९ पृष्ठे ७ पंक्तौ )।

सङ्कीर्णस्योदाहरणन्तु—"क्षिप्तो हस्तावलग्नः प्रसभमभिहितोऽप्याददानोंशुकान्तम्" इत्यादि। ( १०० पृष्ठे २५ पंक्तौ )

अथवा

"शब्दार्थशक्त्या वाऽक्षिप्तः" इति कारिकाया व्याख्यानं तु १७२पृष्ठे २२ पंक्तौ द्रष्टव्यम्।

अथ १९५१ वर्षीयप्रश्नानामुत्तराणि—

१ प्रथमप्रश्ने ध्वन्यन्तर्भावप्रक्रिया ( तत्खण्डनञ्च ) १९४७वर्षीयप्रथमप्रश्नस्योत्तरे तथा १९४९वर्षीयप्रथमप्रश्नस्योत्तरे च द्रष्टव्ये।

ध्वनिस्वरूपन्तु—१९४८ वर्षीयप्रथमप्रश्नोत्तरे द्रष्टव्यम्।

ध्वनिप्रभेदास्तु—१७९ पृष्ठे ३ पंक्तौ द्रष्टव्याः।

२ "रसाक्षिप्ततया यस्य बन्धः" इति कारिकाया व्याख्यानं १३१ पृष्ठे १ पंक्तौ द्रष्टव्यम्।

राजानकपदभागयमानन्दवर्धनाचार्यः काश्मीरदेशोद्भवो ब्राह्मणो भट्टनोणस्य पुत्रः काश्मीरावन्तिवर्मनृपतेः परिषत्पण्डित आसीदत एव ख्रिष्टनवमशताब्दीकालोऽस्य प्रतीयते इति राजतरङ्गिण्यां जैकोबी निर्धारितवान्। अयञ्च सर्वदर्शनेषु प्रौढ आलङ्कारिकवर्य्य आसीत्। अयञ्च पूर्णवैयाकरणोऽप्यासीत् "प्रथमे हि विद्वांसो वैयाकरणाः। व्याकरणमूलत्वात् सर्वविद्याना"मिति लेखात् प्रतीयते।

एतद्विरचितग्रन्थास्तु पञ्च—
[ १ ] ध्वन्यालोकः [ २ ] देवीशतकम् [ ३ ] विषमबाणलीला [ ४ ] अर्जुनचरितम् [ ५ ] विनिश्चयाख्या धर्मोत्तमविवृतिः।

एतत्सर्वं भूमिकायां पद्यैस्सुस्पष्टं वर्णितं तत्त्वाभ्यासे परीक्षार्थिनां महत्सौकर्य्यं भवेदित्याशासे ।

अथ १९५२ वर्षीयप्रश्नानामुत्तराणि-

१ "भक्त्या बिभर्ति नैकत्वम्" इति कारिकाया व्याख्यानं ६७ पृष्ठे १७ पंक्तौ तथा ६८ पृष्ठे १७ पंक्तौ सुस्पष्टं विद्यते तत्रैवावलोक्याभ्यस्तव्यम् ।

२ "अलङ्कारान्तस्यापि" इति कारिकाया व्याख्यानम्—यत्र = काव्ये, अलङ्कारान्तरस्य वाच्यव्यतिरिक्तालङ्कारस्य, प्रतीतौ, सत्यामपि, वाच्यस्य = वाच्यार्थस्य, तत्परत्वं व्यङ्ग्यपरत्वम्, न = नहि, भासते, असौ, ध्वनेः = अनुस्वानोपमव्यङ्ग्यस्य, मार्गः = पन्थाः, न, मतः किन्तु स गुणीभूतव्यङ्ग्यस्यैव मार्गो ज्ञेयः ।

किन्तु "वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् । रसादिपरता यत्र स ध्वनेर्मार्ग ईर्य्यते ।" अर्थात् रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थितास्तत्रैव काव्ये ध्वनिरिति बोध्यम् ।

अथ १९५३ वर्षीयप्रश्नानामुत्तराणि-

१ "अर्थः सहृदयश्लाघ्यः" इति कारिकाया व्याख्यानम्—१२ पृष्ठे २५ पंक्तौ द्रष्टव्यम् ।
"प्रधानेऽन्यत्र वाक्यार्थे" इति कारिकाया व्याख्यानम्—९५ पृष्ठे ६ पंक्तौ द्रष्टव्यम् ।

२ प्रथमकारिकायां वाच्यस्य काव्यात्मत्वखण्डनम् १९३१ वर्षीयप्रथमप्रश्नस्योत्तरे द्रष्टव्यम् ।

द्वितीयकारिकायाम् "मे मति"रित्युक्तिर्हि "खण्डनीयाः पक्षा अन्येऽपि सन्ती"ति सूचयति तथा हि—"रसादीनामलङ्कार्य्यत्व-शब्दार्थवृत्त्यभावाभ्यां नालङ्कारत्वम्" "रसादीनामङ्गिनायामेव रसवदाद्यलङ्काराः, अङ्गतायान्तु प्रसिद्धस्योदात्तालङ्कारस्य द्वितीयो भेदः" "रसादिषु रूपकादिसाम्यादलङ्कारव्यवहारो भाक्तः" इत्यादय उद्भटादीनां पक्षा अवश्यं मया खण्डनीया इत्याकूतं ध्वनिकर्तुरत एवोक्तं "मे मतिरिति" ।

३ अर्थान्तरध्वनिर्हि द्विविधः—शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च ।

तत्राद्यस्योदाहरणम्—"दे्व्वा एत्तम्मि फले" इति ( १८६ पृष्ठे ११ पंक्तौ )
द्वितीयस्योदाहरणं—"हिअअट्ठाविअमण्णुं" इति ( १८७ पृष्ठे २ पंक्तौ )

❀ श्रीः ❀

# प्रकाशिकासहितध्वन्यालोकस्य

# श्लोकानुक्रमणिका ।


| | | पृ० |
|---|---|---|
| **अ** | | |
| अवृत्तिरल्पवृत्तिर्वा | (प्र) | ५ |
| अर्थः सहृदयश्लाघ्यः | (का) | १२ |
| अत्ता एत्थ णिमज्जइ | (वृ) | १८ |
| अनुरागवती सन्ध्या | (वृ) | ४६ |
| अप्रस्तुतप्रस्तुतयोर्दीपः | (प्र) | ४७ |
| अङ्गाङ्गित्वेऽलङ्कृतीनां | (प्र) | ५१ |
| अल्पीयसापि यत्नेन | (प्र) | ६२ |
| अज्जाए पहारो नवलत | (वृ) | ७२ |
| असंलक्ष्यक्रमोद्योतः | (का) | ८९ |
| अयं स रशनोत्कर्षी | (प्र) | ९५ |
| अविरलकरवाल | (प्र) | ९६ |
| अर्थशक्त्युद्भवस्त्वन्यो | (का) | १७० |
| अम्बा शेतेऽत्र वृद्धा | (वृ) | १७४ |
| अर्थान्तरे संक्रमित | (का) | ८२ |
| अङ्कुरितः पल्लवितः | (वृ) | १६१ |
| अर्थशक्तेरलङ्कारः | (का) | १७९ |
| अलङ्कारान्तरस्यापि | (का) | १८० |
| अलङ्कारान्तरव्यङ्ग्य | (का) | १९३ |
| अव्युत्पत्तेरसक्तेर्वा | (का) | १६६ |
| **आ** | | |
| आमीलितालसविवर्तित | (प्र) | ९६ |
| आक्षिप्त एवालङ्कारः | (का) | १५१ |
| आलोकार्थी यथा दीप | (का) | ३४ |
| आहूतोऽपि सहायैरेमीत्यु | (वृ) | ४८ |
| आनम्य वल्गुवचनैः | (प्र) | ५५ |
| आबद्धकृत्रिमसटाजटि | (प्र) | ५८ |
| **इ** | | |
| इदमाभाति रुचिरं | (प्र) | ५२ |
| **ई** | | |
| ईसा कलुसस्स वि तुह | (वृ) | १८९ |
| **उ** | | |
| उद्दामोत्कलिकां विपाण्डुर | (वृ) | १४१ |
| उन्नतः प्रोल्लसद्धारः | (वृ) | १६२ |
| उपोढरागेण विलोलता | (वृ) | ४३ |
| उक्त्यन्तरेणाशक्यं यत् | (का) | ७४ |
| उच्चिणसु पडिअ | (वृ) | १६७ |
| उपकुर्व्वन्ति तं सन्तं | (प्र) | ९७ |
| **ए** | | |
| एवंवादिनि देवर्षौ | (वृ) | १७० |
| **क** | | |
| कस्स वण होइ रोसो | (वृ) | २१ |
| कस्यचिद्ध्वनिभेदस्य | (का) | ७८ |
| कपोले पत्राली कर | (वृ) | १३२ |
| कर्णकल्पितरसाल | (प्र) | २४ |
| कमलाअराणं मलिआ | (वृ) | १९६ |

| | | पृ० |
|---|---|---|
| **का** | | |
| काव्यस्यात्मा ध्वनिरिति | ( का ) | २ |
| काव्यस्यात्मा स एवार्थः | ( का ) | २७ |
| काकः कृष्णः पिकः कृष्णः | ( प्र ) | ८७ |
| किं हास्येन न मे प्रयास्यसि | ( वृ ) | ७२ |
| किमपि किमपि मन्दं | ( प्र ) | ६१ |
| कुविआओ पसन्नाओ | ( वृ ) | ७१ |
| कोपात्कोमललोल | ( वृ ) | १४८ |
| कौतुकं त्वमिलासे स्यात् | ( प्र ) | १६५ |
| क्रमेण प्रातभात्यात्मा | ( का ) | १५१ |
| क्वचिद् विशेषः सामान्यात् | ( प्र ) | ५४ |
| क्वाकार्य्यं शशलक्ष्मणः | ( प्र ) | ९३ |
| क्षिप्तो हस्तावलग्नः | ( वृ ) | १०० |
| **ख** | | |
| खं येऽत्युज्ज्वलयन्ति | ( वृ ) | १६८ |
| **ग** | | |
| गअणं च मत्तमेहं | ( वृ ) | ८८ |
| गृहेष्वध्वसु वा नान्नम् | ( प्र ) | ५० |
| **च** | | |
| चरणपतनप्रत्याख्या | ( प्र ) | ६२ |
| चक्राभिघातप्रसभा | ( वृ ) | १४० |
| चलापाङ्गां दृष्टिम् | ( वृ ) | १३९ |
| चञ्चद्भुजभ्रमितचण्ड | ( वृ ) | ११६ |
| चमहिअमानस | ( वृ ) | १५८ |
| चन्दमऊएहि णिसा | ( वृ ) | १८१ |
| चन्दनासक्तभुजग | ( वृ ) | १८८ |
| चित्तं व्याप्नोति यः | ( प्र ) | ११९ |
| चुम्बिज्जइसअहुत्तं। | ( वृ ) | ७० |

| | | पृ० |
|---|---|---|
| **ज** | | |
| जन्मान्तरीणरमण | ( प्र ) | ९६ |
| जाएज्जवणुद्देशे | ( वृ ) | १८७ |
| **त** | | |
| तत्परावेव शब्दार्थौ | ( का ) | ५९ |
| तत्र वाच्यः प्रसिद्धो यः | ( का ) | १३ |
| तद्वत्सचेतसां सोऽर्थो | ( का ) | ३७ |
| तरङ्गभ्रूभङ्गा क्षुभित | ( वृ ) | १०८ |
| तन्वी मेघजलार्द्रपल्ल | ( वृ ) | १०८ |
| तस्याङ्गानां प्रभेदा ये | ( का ) | १२२ |
| तमर्थमवलम्बन्ते | ( का ) | ११२ |
| तस्या विनापि हारेण | ( वृ ) | १५६ |
| ताला जाअन्ति गुणा | ( वृ ) | ८६ |
| तं ताणसिरिसहोअर | ( वृ ) | १८४ |
| तिष्ठेत्कोपवशात् प्रभात्र | ( प्र ) | ९१ |
| तेषां गोपवधूविलास | ( वृ ) | १०९ |
| त्रासाकुलः परिपतन् | ( वृ ) | १८९ |
| **द** | | |
| दत्तानन्दाः प्रजानां | ( वृ ) | १६२ |
| दर्शनस्पर्शनादीति | ( प्र ) | ११५ |
| दिङ्मात्रं तूच्यते येन | ( का ) | १२५ |
| दृष्ट्या केशव गोपराज | ( वृ ) | १५८ |
| देआ पसिअ णिवत्तसु | ( वृ ) | १२० |
| देव्वा एत्तम्मि फले | ( वृ ) | १८६ |
| **ध** | | |
| ध्वन्यात्मभूते शृङ्गारे | ( वृ ) | १२७ |
| **न** | | |
| नसोऽस्ति प्रत्ययो लोके | ( प्र ) | ८६ |

| | | पृ० |
|---|---|---|
| नयनयुगासेचनकं | ( प्र ) | ९२ |
| नीरक्षीरनयाद्यत्र | ( प्र ) | ५१ |
| नेदं नभोमण्डल | ( प्र ) | ४८ |
| नो कल्याणाय वायो | ( वृ ) | १४२ |
| नितरां परुषा सरोज | ( प्र ) | ५५ |
| **प** | | |
| परिम्लानं पीनस्तन | ( वृ ) | ६९ |
| पश्येत् कश्चिच्चल | ( प्र ) | ६६ |
| परार्थे यः पीडामनु | ( वृ ) | ७२ |
| पादाहतं यदुत्थाय | ( प्र ) | ५४ |
| पर्यायोक्तं यदा भङ्ग्या | ( प्र ) | ४९ |
| प्रतीयमानं पुनरन्यदेव | ( का ) | १४ |
| प्रक्षुभ्यमानो यो भाव | ( प्र ) | ३० |
| प्रवातनीलोत्पल | ( प्र ) | ५१ |
| प्रत्ययैरनुपाख्येयैः | ( प्र ) | ६२ |
| प्रधानेऽन्यत्र वाक्येऽर्थे | ( का ) | ६५ |
| प्रकृतं प्रतिषिध्यान्य | ( प्र ) | ४७ |
| प्रौढोक्तिमात्रनिष्पन्ना | ( का ) | १७५ |
| प्राप्तश्रीरेष कस्मात् | ( वृ ) | १८२ |
| **ब** | | |
| वनेऽखिलकलासक्त | ( प्र ) | ९६ |
| वस्तुनो वक्तुमिष्टस्य | ( प्र ) | ४५ |
| बोद्धृस्वरूपसंख्या | ( प्र ) | २३ |
| विरहे तव तन्वङ्गी | ( प्र ) | ४५ |
| बीराणं रमइ घुसिण | ( वृ ) | १८४ |
| वाणीरकुडङ्गोड्डीण | ( वृ ) | १६६ |
| **भ** | | |
| भमधम्मिअ वीसत्थो | ( वृ ) | १६ |

| | | पृ० |
|---|---|---|
| भवति न गुणानुरागो | ( प्र ) | ५१ |
| भक्त्या विभर्ति नैकत्वं | ( का ) | ६७ |
| भ्रमिमरतिमलसविषयता | ( वृ ) | १५८ |
| भासते प्रतिभासार | ( प्र ) | १२८ |
| **म** | | |
| मधुद्विरेफः कुसुमैकपात्रे | ( प्र ) | ६२ |
| मा निषाद प्रतिष्ठां त्व | ( वृ ) | २८ |
| मधुपानप्रवृत्तस्ति | ( प्र ) | ९६ |
| मीनवतीनयनाभ्याम् | ( प्र ) | २५ |
| मुखं व्याकरणं तस्य | ( प्र ) | ६१ |
| मुख्यां वृत्तिं परित्यज्य | ( का ) | ७६ |
| **य** | | |
| यमकादिनिबन्धेषु | ( वृ ) | १३६ |
| यत्र प्रतीयमानोऽर्थः | ( का ) | १९५ |
| यस्मिन्नस्ति न वस्तु | ( वृ ) | ८ |
| यः संयोगविभागाभ्यां | ( प्र ) | ६२ |
| यत्र तु रतिर्विप्रकृष्टा | ( प्र ) | ११५ |
| यत्रार्थः शब्दो वा | ( का ) | ३८ |
| यथा पदार्थद्वारेण | ( का ) | ३५ |
| यं सर्वशैलाः परिक | ( प्र ) | ३० |
| यो यः शास्त्रं विभर्ति | ( वृ ) | ११७ |
| यूनोरेकतरस्मिन् | ( प्र ) | ११५ |
| येन ध्वस्तमनोभवेन | ( वृ ) | १५२ |
| **र** | | |
| रम्भा इति प्राप्तवतीः | ( वृ ) | १९० |
| रविसंक्रान्तसौभाग्य | ( वृ ) | ८७ |
| रसभावतदाभास | ( का ) | ६० |

| | | पृ० |
|---|---|---|
| रतिर्हासश्च शोकश्च | (प्र) | ६१ |
| रसवत्प्रेय उर्जस्वि | (प्र) | ६५ |
| रसभावादितात्पर्य्यं | (का) | १०३ |
| रसाक्षिप्ततया वन्धः | (का) | १३० |
| राजानकपदभाजा | (प्र) | १६९ |
| रसवन्ति हि वस्तूनि | (वृ) | १३६ |
| रक्तस्त्वं नवपल्लवै | (वृ) | १४२ |
| राकासुधाकरमुखी | (प्र) | ९२ |
| रसभासाङ्गभावस्तु | (वृ) | १३६ |
| रूढा ये विषये | (का) | ७५ |
| रौद्रादयो रसादीनां | (का) | ११५ |
| रूपकादिरलङ्कारः | (का) | १८० |

ल

| | | |
|---|---|---|
| लावण्यकान्तिपरि | (वृ) | १८३ |

व

| | | |
|---|---|---|
| वत्से मा गा विषादं | (वृ) | १७३ |
| वच्चमहन्विअ | (वृ) | १९ |
| वाग्धेनुर्दुग्धे एकं हि | (प्र) | ३० |
| व्याजकत्वाश्रयेणैव | (का) | ७७ |
| वाच्यवाचकचारुत्व | (का) | ९४ |
| व्यङ्ग्यस्य यत्राप्राधा | (का) | ५८ |
| व्यङ्ग्यस्य प्रतिभामात्रे | (का) | ५८ |
| विवक्षातत्परत्वेन | (का) | १३८ |
| व्यङ्ग्यव्यञ्जकसम्बन्ध | (वृ) | ४१ |
| व्यज्यन्ते वस्तुमात्रेण | (का) | १९३ |

श

| | | |
|---|---|---|
| शरीरीकरणं येषां | (का) | १९२ |

| | | पृ० |
|---|---|---|
| शब्दार्थशासनज्ञान | (का) | ३१ |
| शब्दस्योर्ध्वमभिव्यक्ते | (प्र) | ६२ |
| शब्दार्थशक्त्या वा क्षिप्तो | (का) | १७२ |
| शिखरिणि क नु | (वृ) | ६६ |
| शृङ्गारहास्यकरुण | (प्र) | २६ |
| " " | (प्र) | ९० |
| " " | (प्र) | ११३ |
| शृङ्गारस्याङ्गिनो | (का) | १२६ |
| श्यामास्वङ्गं चकित | (वृ) | १४९ |
| श्लाघ्याशेषतनुं | (वृ) | १५७ |
| श्रुतिदुष्टादयो दोषाः | (का) | १२० |
| शृङ्गार एव मधुरः | (का) | ११३ |
| शृङ्गारे विप्रलम्भाख्ये | (का) | ११४ |

स

| | | |
|---|---|---|
| सरसो विपरीतश्चेत् | (प्र) | २५ |
| सरस्वतीस्वादु | (वृ) | २९ |
| सति हेतौ फलाभावो | (प्र) | ४८ |
| सत्यर्थे पृथगर्थाया | (प्र) | १२८ |
| सर्वैकशरणमक्षय | (प्र) | १५७ |
| समर्पकत्वं काव्यस्य | (प्र) | ११९ |
| सज्जेहि सुरहिमासो | (वृ) | १७६ |
| सर्वेष्वेव प्रभेदेषु | (का) | १९९ |
| स वक्तुमखिलान् शक्तः | (वृ) | १८५ |
| साअर विइण्ण | (वृ) | ११७ |
| सिहिपिच्छकण्णऊरा | (वृ) | १७८ |
| सुवर्णपुष्पां पृथिवीं | (वृ) | ६५ |
| सुतनु जहिहि कोपं | (प्र) | ६२ |

सोऽर्थस्तद्व्यक्तिसाम (का) ३३
संचारिणः प्रधानानि (प्र) ९१
संयोगो विप्रयोगश्च (प) १५३
संकेतकालमनसत (वृ) १७२
स्वसामर्थ्यवशेनैत्र (का) ३६
स्पृष्टास्ता नन्दने (प्र) ४९
स्वगियं यदि जीविता (प्रं) ५५
स्निग्धश्यामलकान्ति (वृ) ८३
स्वेच्छाकेसरिणः (वृ) १
सर्वेष्वेव प्रभेदेषु (का) १९६

ह

हिंअअह्वाविअमण्णुं (वृ) १८७


इति प्रकाशकासहितध्वन्यालोकस्य

श्लोकानुक्रमणिका ।



# शुद्धाशुद्धिविवेकः ।

| अशुद्धिः | शुद्धिः | पृ० | पंक्तौ |
|---|---|---|---|
| शक्त्यनुरणत | शक्त्युद्भवानु | २ | ६ |
| विश्चिद्भिः | विपश्चिद्भिः | ३ | ७ |
| मानस्यात्यभाव | मानस्याप्यभा | ३ | २१ |
| कारिका | कारिकां | ३ | २२ |
| ध्वनि | ध्वनिं | ८ | ६ |
| कारादद्दीनां | कारादीनाम् | ८ | १९ |
| ध्वन्याभाव | ध्वन्यभाव | १० | ८ |
| समख्यातवन्तः | समाख्यातवन्तः | ११ | ४ |
| योऽथो | योऽर्थो | १२ | २ |
| काव्यस्थात्मा | काव्यस्यात्मा | १३ | १५ |
| मग्र | मग्रे | २३ | १३ |
| दश | दर्श | २३ | १३ |
| प्रारिति | प्रतीतिः | २६ | ६ |

| अशुद्धिः | शुद्धिः | पृ० | पंक्तौ |
|---|---|---|---|
| यागः | योगः | ३३ | २१ |
| अन्तरभाव | अन्तर्भाव | ४१ | ११ |
| " | " | ४२ | १६ |
| " | " | ४३ | ८ |
| वियुक्त | विमुक्त | ४८ | २० |
| स्पष्टास्ता | स्पृष्टास्ता | ४९ | १९ |
| स्त्रय | त्रय | ५२ | १६ |
| व्यापारभ्यः | व्यापारेभ्यो | ६२ | २० |
| पृथिवीतो | पृथिवीतः | ६५ | २५ |
| वला | वलाका | ८३ | २७ |
| त्वचो | त्वस्यचो | ८४ | २१ |
| वाद्वा | वाह्वा | १०४ | १२ |
| र्थोन्तर | र्थोऽर्था | १०५ | २ |
| तला | लता | १०९ | ९ |
| पद्या | पथा | १०६ | १९ |
| स्वल्पत्रोटन | स्वल्पपत्रत्रोट | १०६ | २२ |
| दयामत्या | दयानामत्या | ११३ | १६ |
| प्राकार्ष्यं | प्राकर्ष्यं | ११३ | २४ |
| दषास्तु | दोषास्तु | १२२ | १२ |
| वष्ट्या | वृष्ट्या | १५३ | २५ |
| परिहरः | परिहारः | १६८ | ६ |
| सोत्प्रेक्षयोः | सोक्त्युत्प्रे | १७७ | २२ |
| यले | जले | १७८ | १६ |
| श्वासानक | श्वासानिक | १८८ | २० |
| " | " | १८८ | २२ |
| छात्रेभ्य हिताय | छात्रेभ्यो हि हिताय | २०१ | ११ |

—०❀०—